निकृत्य पृथिवीं राजा चक्रे शोणितकर्दमाम् ॥ २४
यौधेयारट्टराजन्यमद्रकाणां गणान्युधि ।
प्राहिणोन्मृत्युलोकाय शूरान्बाणैर्युधिष्ठिरः ॥ २५
हताहरत गृह्णीत विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दो युधिष्ठिररथं प्रति ॥ २६
सैन्यानि द्रावयन्तं तं द्रोणो दृष्ट्वा युधिष्ठिरम् ।
चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत् ॥ २७
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण पार्थिवम् ।
विव्याध सोऽस्य तद्दिव्यमस्त्रमस्त्रेण जघ्निवान् ॥ २८

तस्मिन्विनिहते चास्त्रे भारद्वाजो युधिष्ठिरे ।
वारुणं याम्यमाग्नेयं त्वाष्ट्रं सावित्रमेव च ।
चिक्षेप परमक्रुद्धो जिघांसुः पाण्डुनन्दनम् ॥ २९
क्षिप्तानि क्षिप्यमाणानि तानि चास्त्राणि धर्मजः ।
जघानास्त्रैर्महाबाहुः कुम्भयोनेरवित्रसन् ॥ ३०
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां कुम्भसंभवः ।
प्रादुश्चक्रेऽस्त्रमैन्द्रं वै प्राजापत्यं च भारत ।
जिघांसुर्धर्मतनयं तव पुत्रहिते रतः ॥ ३१
पतिः कुरूणां गजसिंहगामी

C 7 6958
B 7 157 25
K 7 156 28

---

24 Ś2 missing (cf v l 20) D5 om. 24^a (cf v l. 23) K1 2 om (hapl) 24–25 —^a) D2 4 अभिपाद्दान्, S अभीपद्दान् (for °पाद्दान्) —^b) B5 Dn1 D2 8 6 बाह्लिकान् B2 4 5 Dc1 सवशातिकान्, Dn2 च वशातिकान्, D2 4 च वसातय, D5 सवसातिभि, D7 8 च वसातिभि (for सवमातिकान्) S वसातीं (G5 °याती, M2 °मर्ती) श्च सबाह्लिकान् —^c) B2 4 S (except M1) निहत्य, D2 निकृत्वा (for °त्य) D5 पृथिवी (for °वीं) Ś1 K8 4 D1. 8 6 राजन्, Dn2 D2 4 7 8 चक्रे (for राजा) —^d) Dn2 D2 4 8 मांस, D7 मासे (for चक्रे)

25 Ś2 missing (cf v l 20) K1 2 om 25 (cf. v l 24) —^a) K4 B2 (marg as in text) 4 Dc1 Dn2 यौ (Dn2 यो) धेयान्मालवात्राजन्, Dn1 °यान्बहु राजन्यान्, D1 °यास्तावकात्राजन्, D2 °यान्रचकात्राजन्, D3 यानेयानक्षयात्राजन्, D4 यौधेयारुयवकाग्राजन्, D4 आयोधे सगणात्राजन्, D3 यौधेयानवकात्राजन्, D7 8 °यान्दरदात्राजन्, S °यारट्टराजन्यान् —^b) Dn2 D2 4 5 S मद्रका (G5 °का) श्च, D6 मद्रकाना (for मद्रकाणा) D2 4 रणान् (for ग) D1 मद्रकास्तगणान्युधि —^c) Dn2 D2 4. 7 8 यम, D8 6 पर (for मृत्यु-) —^d) Dn2 D2 4 7 8 शूरान्बाणगणै (D4 °शतै) क्षणात्, G2 गणान्क्रुद्धो युधिष्ठिर

26 Ś2 missing (of v l 20) —^a) K1 2 हतो, K4 D1 ततो, S घ्नत (for हत) D2 हतान्हरत गृह्णीत —^b) D2 विध्यत व्यनिकृन्तत; T G3-5 M3 5 °ध्वमपकृन्तत, G1 M1. 2 वध्यतावचकर्तत, G2 विध्यध्व विकृंतत (sub-metric), M4 विध्य चावचकर्तत —^c) Dn2 D2 4 7 8 अभवत्, T G2-5 इत्यभूत् (for इत्यासीत्) Dn1 D5 तुमळ, D8 तुमल (for तुमुल)

27 Ś2 missing (of v l 20) —^a) D2 सैन्य त्रि (for सैन्यानि) D3 व्यधमत (for द्रावयन्तं) —^b) B4 transp द्रोणो and दृष्ट्वा —^c) D2 4-6 नोदितस् (for चो°) —^d) D2 अभ्यवारयत्, D4 हरत्, G4 अभ्यवारयत् (for अभ्यवाकिरत्)

28 Ś2 missing (cf. v l 20) —^b) K2 om. (hapl) from पार्थिवम् up to मस्त्रेण (in 28^d) Dn2 D2 4 5 7 8 पाण्डव, G1 M1 2 पार्थिव (for °वम्) —^c) K4 विव्यध, T G2 विव्याय (for °ध) B Dc1 Dn सोपि, D2 तस्य, D6 सोय (for सोऽस्य) G1 M1 2 तं (for तद्) —^d) D4 पाण्डव (for जघ्निवान्)

29 Ś2 missing (cf v l 20) —^a) K1 M1 2 शस्त्रे, T G2 8 M3 5 [s]यास्त्रे (for चास्त्रे) Dn2 D1 7 8 तस्मिन्नस्त्रे विनिहते —^b) B5 T G2-4 युधिष्ठिर (for °ष्ठिरे) — Dn1 reads 29^c–30^b on marg —^c) Ś1 K1-3 D1 5 समरे (for परम) K1 2 द्रोणो (for क्रुद्धो) T G3 दिव्यास्त्राणि च चिक्षेप, G1 4 5 M दिव्या न्यस्त्राणि सक्रुद्धो (G4 5 चिक्षेप)

30 Ś2 missing (cf v l 20) Dn1 reads 30^ab on marg —^a) T G3 4 क्षिप्तान्याक्षिप्यमाणानि —^b) D6 शस्त्राणि Dn2 D2 4 5 7 8 धर्मवित्, D6 धर्मत, G2 सर्वज्ञ (for धर्मज) —^d) Ś1 K1-3 D1 अवि भ्रमन्, D5 7 8 असंभ्रम, D6 अवित्रसत्

31 Ś2 missing (of v l 20) —^a) K1 2 च (for तु) G1 M1 2 सत्या चिकीर्षमाणा तु — Dn2 om (hapl) 31^c–32^b —^c) D5 च (for वै) D2 6 प्रादुश्च कारैंद्रमस्त्रं

32 Ś2 missing (cf. v l 20) Dn2 om 32^ab (cf

C 7 6958
B 7 157 28
K. 7 158 38

विशालवक्षाः पृथुलोहिताक्षः ।
प्रादुश्चकारास्त्रमहीनतेजा
माहेन्द्रमन्यत्स जघान तेऽस्त्रे ॥ ३२
विहन्यमानेष्वस्त्रेषु द्रोणः क्रोधसमन्वितः ।
युधिष्ठिरवधप्रेप्सुर्ब्राह्ममस्त्रमुदैरयत् ॥ ३३
ततो नाज्ञासिषं किंचिद्घोरेण तमसावृते ।
सर्वभूतानि च परं त्रासं जग्मुर्महीपते ॥ ३४
ब्रह्मास्त्रमुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः ।
ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं प्रत्यवारयत् ॥ ३५
ततः सैनिकमुख्यास्ते प्रशशंसुर्नरर्षभौ ।
द्रोणपार्थौ महेष्वासौ सर्वयुद्धविशारदौ ॥ ३६
ततः प्रमुच्य कौन्तेयं द्रोणो द्रुपदवाहिनीम् ।
व्यधमद्रोषताम्राक्षो वायव्यास्त्रेण भारत ॥ ३७
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥ ३८
ततः किरीटी भीमश्च सहसा संन्यवर्तताम् ।
महद्भ्यां रथवंशाभ्यां परिगृह्य बलं तव ॥ ३९
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं तु वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ ४०
तौ तदा सृञ्जयाश्चैव पाञ्चालाश्च महौजसः ।
अन्वगच्छन्महाराज मत्स्याश्च सह सात्वतैः ॥ ४१
ततः सा भारती सेना वध्यमाना किरीटिना ।

---

v l 31) —$^{b}$) D3 प्रति (for पृथु) —$^{c}$) D2 7 8 S (except G3 4) अदीन (for अहीन) G2 -चेता (for तेजा) —$^{d}$) K1 D4. 6 महेंद्रम् B Dc1 Dn1 उग्रं, S अस्त्रं (for अन्यत्) Ś1 K1-3 प्र- (for स) K1 तेस्त्रै, K4 B3 (orig) T G2-5 तेन; B1 2 3 (marg) 4 5 तैस्त्रै (sic), Dc1 Dn1 तैस्त्रै, Dn2 D3 6 चास्त्रं, D5 चाशु; D7 8 G1 M4 चास्त्रे (for तेऽस्त्रे)

33 Ś2 missing (cf v l 20) —$^{a}$) B1 3 5 Dc1 Dn D2 3 6-8 G1 M निहन्यमानेष्वस्त्रेषु —$^{c}$) Dn1 D6 7 G4 -वध (for -वध) B5 युधिष्ठिरं परिप्रेप्सुर् —$^{d}$) B5 D (except Dn2 D7) G1 4 M (except M4) उदीरयत् (for उदै°)

34 Ś2 missing (cf v l 20) —$^{a}$) S भीतो (for ततो) Ś1 K3 D5 न ज्ञा (K3 नाज्ञा) यते, D3 नाज्ञा शिप (for नाज्ञासिषं) Dn D4 7 8 नाज्ञासिष्म त (D7 8 °षुस )त· किंचिद् —$^{cd}$) Ś1 सकृद् (for सर्व) Dn2 D2 4 7 8 transp पर and त्रास· D2 4 7 8 S विशां पते (for महीपते).

35 Ś2 missing (cf v. l. 20) —$^{a}$) D2 प्रेरितं (for उद्यतं). —$^{b}$) G1 M1. 2 धनंजय (for युधिष्ठिर.). —$^{c}$) D3 च (for [ए]व) —$^{d}$) D2 4 7 8 तदस्त्रं पर्य वारयत्.

36 Ś2 missing (cf. v l. 20) —$^{c}$) T G2-5 गुरु शिष्यौ, G1 M द्रोणशिष्यौ (for °पार्थौ) —$^{d}$) G4 सर्वायुध, M4 सर्वशस्त्र (for °युद्ध)

37 Ś2 missing (cf v l 20) —$^{a}$) M प्रयुध्य (for प्रमुच्य) —$^{c}$) K4 B Dc1 Dn1 D1 3 क्रोध (for रोष) D2 व्यधमत्स्वयृतास्त्रेण — For 37$^{cd}$, Dn2 D4 S subst

1137* वायव्यास्त्रेण व्यधमद्रोषपर्याकुलेक्षण ।

[T1 G2 विधमद् (for व्यध°) Dn2 D4 व्यधमत्सोत्तम- (D4 °त्सवृता )स्त्रेण (for the prior half) Dn2 D4 M4 क्रोध-, T1 G2 द्रोण (for रोष-)]

38 Ś2 missing (cf. v l. 20) —$^{a}$) D1 रौद्रेण (for द्रोणेन) —$^{b}$) B1 पचाला —$^{d}$) D2 पार्षतस्य (for पार्थस्य च)

39 Ś2 missing (cf. v l 20) —$^{a}$) K1 D2 किरीटी भीमसेनश्च —$^{b}$) D5 पर्यवर्तता, D7 8 चाभ्य° (for संन्य°) — D3 om (hapl) 39$^{c}$-40$^{d}$ —$^{c}$) D2 -शब्दाभ्यां (for -वंशाभ्यां) D5 महता शरवर्षेण, T G M1 2 °ता शरवर्षाभ्या —$^{d}$) D7 प्रतिगृह्य (for परि°) D2 4 प्रतिगृह्य बलं तदा

40 Ś2 missing (cf. v l 20) D3 om 40 (cf. v l 39) —$^{b}$) G2 पश्चिमं (for उत्तरं) K1 lacuna, K4 B Dc1 Dn D1 2 4 7 8 च (for तु) —$^{d}$) B1 अभ्यवर्षता; D5 पर्यवर्तत्तां; T G1-4 M1 2 अभिवर्षतां (for अभ्य°)

41 Ś2 missing (cf v l 20) —$^{a}$) Dn2 D2 4 7 8 कैकेय (D2 °के )या, S (except G1) ते तदा (for तौ तदा) D5 सर्वे (for चैव) —$^{b}$) K1 पाचालश्च, Dn2 °ल्याश्च, D4 पंचालाश्च (for पाञ्चा°) —$^{c}$) T G2-5 अन्वागमन् (for अन्वगच्छन्) G1 M1. 2 महाबाहू (for

द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च । नाशक्यन्त महाराज योधा वारयितुं तदा ॥ ४२

इति श्रीमहाभारते द्रोणपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

# १३३

संजय उवाच ।
उदीर्यमाणं तद्दृष्ट्वा पाण्डवानां महद्बलम् ।
अविषह्यं च मन्वानः कर्णं दुर्योधनोऽब्रवीत् ॥ १
अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।
त्रायस्व समरे कर्ण सर्वान्योधान्महाबल ॥ २
पाञ्चालैर्मत्स्यकैकेयैः पाण्डवैश्च महारथैः ।
वृतान्समन्तात्संक्रुद्धैर्निःश्वसद्भिरिवोरगैः ॥ ३
एते नदन्ति संहृष्टाः पाण्डवा जितकाशिनः ।
शक्रोपमाश्च बहवः पाञ्चालानां रथव्रजाः ॥ ४
कर्ण उवाच ।
परित्रातुमिह प्राप्तो यदि पार्थं पुरंदरः ।
तमप्याशु पराजित्य ततो हन्तास्मि पाण्डवम् ॥ ५

C 7 6974
B 7 158 5
K 7 159 5

---

°राज ) — $^{d}$ ) T G2 3 मात्स्याश् ( for म° ) K4 सात्वते, D2 मात्वे , T G2-5 M3-5 सात्वता ( for सात्वत ) G1 M1 2 राजन्मत्स्याश्च सात्वता

42 Ś1 missing ( cf. v 1 20 ) — $^{a}$ ) G5 भारतीं ( for °तीं ) T G1-4 M1-3 5 ततस्ता भारतीं ( G1 M1 2 कौरवीं ) सेना, M4 ततस्ते वध्यमानाश्च — $^{b}$ ) T G1-4 M1-3 5 वध्यमाना, M4 भीमेन च — After 42$^{ab}$, N ( Ś1 K5 missing ) G5 ( marg ) ins

1138* तमसा निद्रया चैव पुनरेव व्यदीर्यत ।

— $^{c}$ ) Ś1 K1 2 D1 धार्यमाणास्, G1 M वार्यमाणा ( for माणास् ) M3-5 तु ( for ते ) — $^{e}$ ) Dn1 D2 4 7 8 नाश( D1 7 8 न श )क्य ते, D5 नाशक्येत, S ( except G5 ) नाशक्नुवन् ( for नाशक्यन्त ) — $^{f}$ ) G1 M यौधा ( for योधा ) D4 M8 ध( M3 धा )रयितु ( for वार° ) B5 G2 4 M तव, T G3 4 जय ( for तदा )

Colophon om in S ( except M4 ) Ś1 K5 missing — *Sub-parvan* Editions घटोत्कचवध, D1 जयद्रथवध — *Adhy name* K1 2 4 B Dc1 Dn D1 2 4 5 7 8 रात्रियुद्ध, D3 6 रात्रियुद्धे नागदत्तादिवध , Bom ed रात्रियुद्धे द्रोणयुधिष्ठिरयुद्ध — *Adhy no* ( figures, words or both ) Dn1 157, D2 156, M4 152 — *Śloka no* Dc1 48, Dn1 49

## 133

☞ This adhy is missing in Ś1 K5 ( cf v 1 7 132 20, 125 14 )

1 D7 M3 om the ref — $^{a}$ ) Ś1 K1-3 D1 उदीर्णमाण ( for उदीर्य° ) K1 B2 3 Dc1 Dn2 D2-4, 6-8 G2-5 त, D5 lacuna ( for तद् ) — $^{b}$ ) D4 पाहूना च ( for पाण्डवाना ) B1 2 D3 महाबल, D2 4, 7 8 बलार्णव ( for महद्बलम् ) — $^{c}$ ) A few MSS अविसह्यं

2 D2 om 2 — $^{b}$ ) B1 -वर्धन, Dc1 D4 -वत्सल — $^{d}$ ) G1 M यौधान् K1 4 B2 Dc1 महारथ , K2 B3 Dn1 D1 °रथ, B1 4 5 Dn2 D3, 5-7 °रथान्, D4 रथै , D5 °रथा , T G2-5 °बलान् ( for °बल )

3 D3 6 om 3 — $^{a}$ ) K2 पाचाल्यैर्, Dn पचालैर्, T G3 4 पाचालान् ( for पाञ्चालैर् ) G2 मात्स्य ( for मत्स्य ) K1 -केकैयै, D4 -केकयै ( for -कैकेयै ) — $^{b}$ ) G3 महाबलै ( for °रथै ) — $^{c}$ ) D7 8 वृता ( for वृतान् ) K1 सक्रुद्धा, Dn2 D7 स्व क्रुद्धैर् ( for संक्रुद्धैर् ) — $^{d}$ ) Dc1 Dn D5 G2-5 निश्वसद्भिर् ( for निःश्व° ), D4 8 महोरगै ( for इवो° )

4 $^{a}$ ) Ś1 D2 3 5-7 G1 नर्दंति, K1 नदति ( for नदन्ति ) D2-4 6-8 सक्रुद्धा , S सरब्धा ( for संहृष्टा ) — 4$^{bc}$ is partly damaged in G5 — $^{c}$ ) D3 6 बहुश ( for बहव ) — $^{d}$ ) D4 पंचालाना K1 रथद्विपा ( for °व्रजा )

5 $^{b}$ ) G1 युधि ( for यदि ) — $^{c}$ ) D8 [अ]थ ( for [आ]शु )

6 6$^{ab}$ is partly damaged in G5 — $^{a}$ ) G1 -आ

C 7 6973
B 7 156 6
K 7 159 6

सत्यं ते प्रतिजानामि समाश्वसिहि भारत ।
हन्तास्मि पाण्डुतनयान्पाञ्चालांश्च समागतान् ॥ ६
जयं ते प्रतिजानामि वासवस्येव पावकिः ।
प्रियं तव मया कार्यमिति जीवामि पार्थिव ॥ ७
सर्वेषामेव पार्थानां फल्गुनो बलवत्तरः ।
तस्यामोघां विमोक्ष्यामि शक्तिं शक्रविनिर्मिताम् ॥ ८
तस्मिन्हते महेष्वासे भ्रातरस्तस्य मानद ।
तव वश्या भविष्यन्ति वनं यास्यन्ति वा पुनः ॥ ९
मयि जीवति कौरव्य विषादं मा कृथाः क्वचित् ।
अहं जेष्यामि समरे सहितान्सर्वपाण्डवान् ॥ १०
पाञ्चालान्केकयांश्चैव वृष्णींश्चापि समागतान् ।
बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीम् ॥ ११

संजय उवाच ।

एवं ब्रुवाणं कर्णं तु कृपः शारद्वतोऽब्रवीत् ।
स्मयन्निव महाबाहुः सूतपुत्रमिदं वचः ॥ १२
शोभनं शोभनं कर्ण सनाथः कुरुपुंगवः ।
त्वया नाथेन राधेय वचसा यदि सिध्यति ॥ १३
बहुशः कत्थसे कर्ण कौरव्यस्य समीपतः ।
न तु ते विक्रमः कश्चिद्दृश्यते बलमेव वा ॥ १४
समागमः पाण्डुसुतैर्दृष्टस्ते बहुशो युधि ।
सर्वत्र निर्जितश्चासि पाण्डवैः सूतनन्दन ॥ १५
ह्रियमाणे तदा कर्ण गन्धर्वैर्धृतराष्ट्रजे ।
तदायुध्यन्त सैन्यानि त्वमेकस्तु पलायथाः ॥ १६
विराटनगरे चापि समेताः सर्वकौरवाः ।

---

नीहि (for -जानामि) — Dn2 om (hapl) $6^{b}$–$7^{a}$ — $^{c}$) D7 -तनय (for -तनयान्) — $^{d}$) Bom ed पचालाश्, D2 ससोमकान्; G1 M1 2 समागधान् (for °गतान्) D4 पांचा* श्वामहासुनीन् (sic)

7 Dn2 om $7^{a}$ (cf. v l. 6) — $^{a}$) K4 Dn1 D1–4 6–8 दास्यामि (for जानामि) Ś1 K1–3 D5 जयं ते प्रविधास्यामि — $^{d}$) B5 D6 G1 M जानामि (for जीवामि) Dn2 D2 4 7 8 अमित्रगणसमागमे

8 K4 om $8^{abc}$ $8^{ab}$ is partly damaged in G5 — $^{b}$) B D फाल्गुनो (for फ°) — $^{c}$) D4 अद्यामोघां, D7 8 अमोघां तस्य (by transp) K3 प्रमोक्ष्यामि (for वि°) — $^{d}$) K1 चक्र, D4 शक्ति- (for शक्र)

9 Dn1 om 9 — $^{a}$) D5 transp तस्मिन् and हते — $^{b}$) B4 भारत (for मानद) — $^{d}$) S यास्यते वा वनं पुन

10 $10^{ab}$ is partly damaged in G5 — $^{b}$) Ś1 K1–3 D1 3. 5 6 transp विषाद and मा — $^{c}$) K1 2 अय (for अह)

11 $^{a}$) B1 पचालान् Dn D2–6 8 कैकयाश्, D7 कैकेयांश् (for केक°) D6 चापि (for चैव) — $^{b}$) D2 7 8 S चैव (for चापि) K4 समागता (for °गतान्)

12 MSS om the ref In G5, $12^{ab}$ is partly damaged — $^{a}$) S (G5 damaged) एव (G3 °व) कर्णे ब्रुव (T °व) त्येव — $^{b}$) B3 कृप शारद्वतीसुत — $^{c}$) B5 सवार्यते (for स्मयन्निव)

13 Before 13, T G2–5 M3–5 ins कृप G2 om. $13^{ab}$ — $^{a}$) K4 om one शोभन D4 शोभन जय कर्णस्य — D4 om (hapl) $13^{b}$–$14^{a}$ — $^{b}$) K4 B1 G1 M सनाथा कुरुपुगवा — $^{c}$) G4 त्वया राधेय नाथेन

14 D4 om $14^{a}$ (cf. v l 13) — $^{b}$) Ś1 K1 3 B1 Dc1 Dn1 D1 2 4 6–8 G2 कौरवस्य (for °व्यस्य) — $^{c}$) B4 G1 M1 2 न च, Dc1 ननु (for न तु) M1 2 मे (for ते) M5 विभ्रम (for विक्रम) — $^{d}$) B2 3 5 Dn2 G1 M फलम् (for ब°) D2. 4 6–8 च (for वा)

15 K4 repeats $15^{a}$–$16^{c}$ after $17^{ab}$ — $^{a}$) K2 D2 7 8 S पुत्रैर्, D4 पुत्रो (for सुतैर्) — $^{b}$) G2 यदि (for युधि) — $^{c}$) D2 4 5 7 8 सर्वतो (for °त्र) K2 D5–8 चापि (for चासि)

16 For the repetition in K4, cf. v l 15 — $^{a}$) K1 D1 ह्रियमाने, T ह्रीयमाणे (for ह्रिय°) K1 lacuna, Dc1 D5 7 8 M4 यदा, T G3. 4 पुरा, G2 5 त्वया (for तदा) — $^{c}$) Ś1 K1–3 समयुध्यत, D3. 5 तान्ययु° (for तदायु°) — $^{d}$) D4 एव (for एकस्) K4 B (B5 lacuna) Dc1 Dn [s]ग्रे, D4 [अ]स्तु, S च (for तु) K1 B Dc1 Dn D1 M1 2 [अ]पलायिथा; K3 D2 4 5 7 8 M4 पलायिथा (D8 °त-), K4 D3 G1 M3 5 [अ]पलायथा (for पला°)

17 For the repetition in K4, cf. v l 15 — $^{a}$)

पार्थेन निर्जिता युद्धे त्वं च कर्ण सहानुजः ॥ १७
एकस्याप्यसमर्थस्त्वं फल्गुनस्य रणाजिरे ।
कथमुत्सहसे जेतुं सकृष्णान्सर्वपाण्डवान् ॥ १८
अब्रुवन्कर्ण युध्यस्व बहु कत्थसि सूतज ।
अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतम् ॥ १९
गर्जित्वा सूतपुत्र त्वं शारदाभ्रमिवाजलम् ।
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ॥ २०
तावद्गर्जसि राधेय यावत्पार्थं न पश्यसि ।
पुरा पार्थे हि ते दृष्ट्वा दुर्लभं गर्जितं भवेत् ॥ २१
त्वमनासाद्य तान्बाणान्फल्गुनस्य विगर्जसि ।
पार्थसायकविद्धस्य दुर्लभं गर्जितं भवेत् ॥ २२
बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः ।
धनुषा फल्गुनः शूरः कर्णः शूरो मनोरथैः ॥ २३
एवं परुषितस्तेन तदा शारद्वतेन सः ।
कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् ॥ २४
शूरा गर्जन्ति सततं प्रावृषीव बलाहकाः ।
फलं चाशु प्रयच्छन्ति बीजमुप्तमृताविव ॥ २५
दोषमत्र न पश्यामि शूराणां रणमूर्धनि ।
तत्तद्विकत्थमानानां भारं चोद्वहतां मृधे ॥ २६
यं भारं पुरुषो वोढुं मनसा हि व्यवस्यति ।

C 7 6995
B. 7 158 27
K. 7 159 27

---

Ś1 K1-3 D2. 6 तान (for चापि) — c) D2 सर्वे, D7 संख्ये, D5 संख्ये (for युद्धे) — d) D1 महाभुज, D5 महारथ, M4 महानुग (for नुज)

18 K4 om 18ab — a) K2 D6 समर्थस् (for [अ]म॰) G3 मन् (for त्व) — b) B D फाल्गुनस्य (for फ॰) — c) D5 तु सहसा (for उत्सहसे) — d) D2 7 8 सवृष्णीन् (for सकृष्णान्) Dn1 सह (for सर्व) D3 6 सार्जुनान्सर्वपार्थिवान, D4 वृष्णीन्सर्वांश्च पाडवान

19 a) D2 अवोचत् (for अब्रुवन्) — b) D बहून् (for बहु) D5 कथ्यसि, D7 कत्थसि (for कत्थसि) B Dc1 Dn कत्थसे बहु सूतज — c) S (except G1 M1 2) यत् (for यस्) K3 अनुक्त्वा विक्रमेम्यस्तु — d) D2 युध्यन्, D4 7 8 युद्धे (for तद्वै) D2 4 स (for सत्)

20 a) M3 सूतपुत्रस् — b) D5 शारदाभ्र (for ॰दाभ्रम्) K4 Dn2 D1 [अ]फल, Dn1 ध्वनि (for [अ]जलम्) D2 4 7 8 S शा(D4 श)रदाभ्र इवाफ(G1 5 M1. 2 ॰ज)ल — c) D4 निष्फला (for लो) D4 G1 M1. 2 दृश्यते (for ॰से) — d) D4 त्वा, D5 वै (for च)

21 a) B4 Dc1 Dn1 D2 4 7 8 S गर्जस्व (for ॰सि) — b) G1 M1 3 5 पार्थान् (for पार्थं) — Ś1 K3 om. (hapl.) 21c-22b — c) B Dc1 Dn आ(B5 दू)रात्, Cd पुरा (as in text) G1 M1 4 पार्थान् (for पार्थं) D2 8 स दृष्ट्वा, T G2-5 M3 5 दृष्ट्वैव, G1 M1 2 4 दृष्ट्वा ते (by transp) — d) D4 दुद्वल (sic) (for दुर्लभं) B Dc1 Dn पुन (for भवेत्) K2 4 S गर्जितं दुर्लभं भवेत्, D1 गर्जितं तव निष्फल

22 Ś1 K3 om. 22ab (cf v l. 21) D1 om. (hapl) 22 — a) D2 4 S त्वमनासाद्यन्बाणान् — b) K4 B D (D1 om) फाल्गुनस्य D2 4 7 8 हि गर्जसि (D2 4 ॰से) (for विग॰) — D5 om 22cd — d) Ś1 K (K5 missing) B1-3 5 Dc1 Dn D3. 6 G1 M1-3. 5 तव (for भवेत्) B4 दुर्लभ तव गर्जित, T G2-5 M4 गर्जित दुर्लभ तव

23 a) Ś1 K1. 2 4 D1 3 5 6 बाहुभ्या, D4 बहुभि॰ (for बा॰) M2 वीरा (for शूरा) — b) Ś1 K1-3 D3 6 वाक्शूराश्च (D6 ॰रा स्व), D5 वाचा शूरा (for वाग्भि शूरा) — c) K1 2 धनुष (for ॰षा) K4 B D फाल्गुन — After 23, Dc1 (marg) Dn2 D2 4. 5 7 8 ins

1139* तोषितो येन रुद्रोऽपि क पार्थं प्रतिघातयेत् ।

[ D2 अव (for प्रति) D7 8 ॰योधयेत् (for घात॰) ]

24 Before 24, M3-5 ins सजय — a) K4 Dn2 सं(Dn2 स)रुषितस्, B Dc1 Dn1 सरो॰, D5 हि रु (for परु॰) D2 4 5 7 8 तत्र (for तेन) — b) B1 सारद्वतेन B Dc1 Dn ह्, D2 5 च (for स)

25 Before 25, T G2-5 M4 ins कर्ण — b) G1 M बलाहका — c) T G2 3 5 चानु, G4 lacuna (for चाशु) — d) K1 2 D7 8 बीजसु(D8 गु)सं (for ॰मु समू) K4 ऋतादिव॰ (sic), D (except Dc1 Dn1 D1) क्षिताविव, T G2-5 M3 5 अनू(G4 5 नो)परे (for ऋताविव)

26 d) T G M1 2 उद्वहतां (for चोद्व॰) Dn2 युधि, D2 S हृदा, D4 गदा (sic) (for मृधे)

C 7 6197
B 7 150 26
K 7 159 27

दैवमस्य ध्रुवं तत्र साहाय्यायोपपद्यते ॥ २७
व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ।
गर्जामि यद्यहं विप्र तव किं तत्र नश्यति ॥ २८
वृथा शूरा न गर्जन्ति सजला इव तोयदाः ।
सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पण्डिताः ॥ २९
सोऽहमद्य रणे यत्तः सहितौ कृष्णपाण्डवौ ।
उत्सहे तरसा जेतुं ततो गर्जामि गौतम ॥ ३०
पश्य त्वं गर्जितस्यास्य फलं मे विप्र सानुगः ।
हत्वा पाण्डुसुतानाजौ सहकृष्णान्ससात्वतान् ।
दुर्योधनाय दास्यामि पृथिवीं हतकण्टकाम् ॥ ३१

कृप उवाच ।

मनोरथप्रलापो मे न ग्राह्यस्तव सूतज ।
यदा क्षिपसि वै कृष्णौ धर्मराजं च पाण्डवम् ॥ ३२
ध्रुवस्तत्र जयः कर्ण यत्र युद्धविशारदौ ।
देवगन्धर्वयक्षाणां मनुष्योरगरक्षसाम् ।
दंशितानामपि रणे अजेयौ कृष्णपाण्डवौ ॥ ३३
ब्रह्मण्यः सत्यवाग्दान्तो गुरुदैवतपूजकः ।
नित्यं धर्मरतश्चैव कृतास्त्रश्च विशेषतः ।

---

27 K4 om $27^{a}$–$28^{b}$ Ś1 K1-8 D1 8 6 read $27^{ab}$ after $31^{ab}$ D5 transp $27^{ab}$ and $27^{cd}$ — $^{a}$) D2 प्राग्, D4 यद् (for य) T भाव (for भार) K1 2 मनसो (for पुरुपो) D2 4. 5 7 8 सोढु (for वोढु) — $^{b}$) D8 [अ]पि, D4 7 8 T G1 5 M [अ]भि, D5 [हृ]ह (for हि) G5 प्रपश्यति (for व्यवस्यति) — $^{c}$) D2 7 8 अद्य, D4 एव (for अस्य) D2 मन्ये, D3. 5 6 तस्य, D4 त च (for तत्र) — $^{d}$) K1 साह्याध्याय (sic), D4 7 8 साहायाय, Some MSS सहाय्याय (for साहा°) D5 सहाय्य चोपपद्यते

28 K4 om $28^{ab}$ (cf. v l 27) — $^{a}$) D1 M4 द्वितीय (for °यो) Cd cites व्यवसाय S च (for ऽहं) — Dn2 om $28^{c}$–$31^{b}$ — $^{c}$) D5 प्रगर्जे (for गर्जामि) D8 यदहं (for यद्यहं) — $^{d}$) K3 transp तव and तत्र B4 नश्यते (for °ति) D7 8 त्व किं तत्र न पश्यसि, S न किं( G2 यत्किं )चित्तत्र पश्यसि

29 Dn2 om. 29 (cf v l 28) — $^{a}$) D4 तथा (for वृथा) — $^{b}$) K4 B2-3 Dc1 Dn1 शारदा, B1 (marg as in text) D2 जलदा, D7 8 निर्जला (for सजला) D3 6 सजलास्तोयदा यथा — $^{c}$) Ś1 K1 2 D3 6 दृष्ट्वा (for ज्ञात्वा)

30 Dn2 om 30 (c v l 28) — $^{a}$) T G3 4 यो (for सो) K4 B (except B6) Dc1 Dn1 D8 यत्तौ (for यत्त) — $^{b}$) D7 सहितौ (for स°) — $^{c}$) B (except B1) Dc1 Dn1 D1 2 4 5 7 8 मनसा, G1 M1. 3 5 समरे (for तरसा) D2 4 7 8 हन्तु (for जेतु) T G2-3 M4 उत्सहामि रणे जेतुं — $^{d}$) D4 गर्जंति, D7 8 गर्जेसि (for गर्जामि) D5 कौरव (for गौतम)

31 Dn2 om $31^{ab}$ (cf v l 28) — $^{a}$) K2 3 D1 2 4 5 7 8 G (except G2) M [अ]द्य (for [अ]स्य) — $^{b}$) K4 D1 तक्षणात्, Dn1 सानुगान् (for °ग) D2 4 5 7 8 फल (D2 बल) विप्र सहानुगान् (D5 7 °ग, D8 °ग) — After $31^{ab}$, Ś1 K1-8 D1 8 6 read $27^{ab}$ Ś1 K (K5 missing) D1 8 om $31^{d}$ — $^{d}$) D5 समागतान्, S सहानुगान् (for ससात्वतान्) Dn D2 4 7 8 सकृष्णान्सहसात्वतान् — $^{e}$) Ś1 K1 8 दुर्योधनस्य दास्यामि

32 M8 कृष्ण उवाच (for कृप उ°) — After the ref., D5 ins

1140* किं नो बहुप्रलापेन फलमामुहि सूतज ।

— $^{a}$) D6 M1 2 मनोरथ (for °रथ) K4 D3 4 6 प्रलापेन, B S (except G1 M1 2) प्रलापा मे (for °पो मे) Cd cites प्रलाप· — $^{b}$) K2 B S (except G1 M1 2) ग्राह्यास् (for ग्राह्यस्) — $^{c}$) B1 8 Dn2 D2 सदा (for यदा) Ś1 K (K5 missing) D6 कृष्णौ वै (by transp), B4 5 D2 S (except M8 5) वै कृष्ण, D8 5 कृष्ण वै D1 4 सदा क्षिपति कृष्णौ वै (D4 वै कृष्णौ)

33 Dn1 repeats $33^{a}$ after 33 — $^{a}$) D2 G1 M1 2 4 ध्रुव (for ध्रुवस्) Dn2 D2 4 तस्य, T G2-4 तव (for तत्र) K4 कर्णं, D3 6 कृष्णौ, G5 damaged (for कर्ण) — $^{b}$) D1 युद्धे, D4 बुद्धि- (for युद्ध-) — $^{d}$) Ś K1-8 D5 6 मानुषोरग (for मनुष्यो°) Dn2 D8 -पक्षिणा, G8 राक्षसा (for रक्षसाम्) D4 विदितौ कृष्णपाण्डवौ — $33^{ef}$ is partly damaged in G5 — $^{ef}$) K2 8 G (except G2) M दसितानाम्, B5 सहितानाम् (for दशि°) Ś1 K (K5 missing) D1 रणे ह्यजे( K4 D1 रणेज )यौ, Dn2 D2 4 रणेष्वजेयौ, T G2-4 रणे अजय्यौ (for रणे अजेयौ)

34 $^{a}$) D8 6 सत्यवान् (for °वाग्) — $^{b}$) Dn2 D2 7 8 पितृ (for गुरु) Ś1 K8 ब्राह्मण (for दैवत)

धृतिमांश्च कृतज्ञश्च धर्मपुत्रो युधिष्ठिरः ॥ ३४
भ्रातरश्चास्य बलिनः सर्वास्त्रेषु कृतश्रमाः ।
गुरुवृत्तिरताः प्राज्ञा धर्मनित्या यशस्विनः ॥ ३५
संबन्धिनश्चेन्द्रवीर्याः स्वनुरक्ताः प्रहारिणः ।
धृष्टद्युम्नः शिखण्डी च दौर्मुखिर्जनमेजयः ॥ ३६
चन्द्रसेनो भद्रसेनः कीर्तिधर्मा ध्रुवो धरः ।
वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुवेधनः ॥ ३७
द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित् ।
येषामर्थाय संयत्तो मत्स्यराजः सहानुगः ॥ ३८
शतानीकः सुदर्शनः श्रुतानीकः श्रुतध्वजः ।
बलानीको जयानीको जयाश्वो रथवाहनः ॥ ३९
चन्द्रोदयः कामरथो विराटभ्रातरः शुभाः ।
यमौ च द्रौपदेयाश्च राक्षसश्च घटोत्कचः ।
येषामर्थाय युध्यन्ते न तेषां विद्यते क्षयः ॥ ४०
कामं खलु जगत्सर्वं सदेवासुरमानवम् ।
सयक्षराक्षसगणं सभूतभुजगद्विपम् ।

C 7 ·C15
B 7 158 45
K 7 1.9 44

D4 पितृदेवप्रपूजक — After 34ab, D7 reads गुरुवृ-चिरता प्राज्ञा धर्मनि (from 35cd) for the first time, repeating the same in the proper place — c) Dn2 D2 7 8 सत्य- (for नित्य) T G2-5 धर्मरतिश्च (for °रतश्च) D5 तत्र (for चैव) — e) Ś1 K3 कृतिमांश्च, D5 चूवपाप्मा

35 For the repetition in D7, cf. v l. 34 G5 is partly damaged in 35ab — a) D4 चापि (for चास्य) — B4 om. 35cd, D5 repeats it after 36 — c) D5 (both times) वसाद् (for प्राज्ञा)

36 a) D2 चन्द्रवीर्या (for चेन्द्र°) — b) Ś1 K1 2 D3 6 स्वनुरक्ता (for स्वनु°) — d) B5 सौमुखिर्, D2 4 6 G3-5 M3. 5 दौर्मुखी, D3 दौर्मुख्यौ, D6 द्वौ मुख्यौ (for दौर्मुखिर्) — After 36, D5 repeats 35cd

37 D5 om. 37ab — a) G5 damaged Ś1 K1 2 चन्द्रदेवो (for °सेनो) K4 B3-5 Dn D2 4 रुद्रसेन (for भद्र°) — b) B1 (marg) 3. 5 Dn2 D3. 6 S कीर्तिवर्मा; D2 कार्तवर्मा (for कीर्तिधर्मा) B2 8 Dc1 ध्रुवोदर (B2 °य), B4 Dn2 S वृकोदर, B5 वमोदय (sic), D2 4 ध्रुवो वर (for ध्रुवो धर) — c) D3 6 वसुचेन्द्रो (for °चन्द्रो) Ś1 K1 3 D3 दासचन्द्र, B4 Dc1 Dn D5 S दान(M4 नाद)चन्द्र (for दामचन्द्र) — d) B5 सिंधुराज (for सिंहचन्द्र) Ś1 K1-3 D3. 5 6 सु(K1 स्व)योधन, K4 सुयोधर्न, B1 सुबोधन, B4 सुलोचन; Dn2 सुचेवन; D1 सुप्योधन, D2 4. 7 8 सचेतन (for सुवेधन) S सिंहचन्द्रसु(M4 °न्द्र सु)वेषसौ.

38 a) K3 पुत्रौ, B1 पुत्रो (for पुत्रा) — b) M4 तथा (for महा-) — c) G1 M2-5 तेषाम् (for येषाम्) G5 अर्थेन (for अर्थाय) T G2-5 ससक्तो (for संयत्तो) — d) G5 damaged. K1 मत्स्यराजा, G2 मात्स्यराज K1. 2 4 B1 3 5 Dc1 Dn D1 3 6 सहानुज, B2 4 °त्मज, D7 सदानुग, S (G5 damaged) प्रतापवान् (for सहानुग)

39 M2 reads 39ab twice — a) G1 M1 2 (first time) दशानीक, G3 4 गजा° (for शता°) K4 सुदशन, Dn1 D5 सूर्यदत्त, D3 M2 (second time) सुदर्शन, D6 सुवानीक, D7 8 श्रुवानीको (for सुदर्शन) B1 3-5 Dc1 सुदर्शनो गजानीक, B2 T G2 5 M3-5 गजानीक सुदर्शन (G2 M4 सुदुर्दर्श), Dn2 गजानीक श्रुतानीको, D2 राजानीक सहानीको, D4 राजानीकश्रुतानीकौ — b) D1 श्रुत्वानीक, D5 मदिराश्व, D7 श्रुतधन्वा (for श्रुवानीक) Dn2 D2 4 8 वीरभद्र सु(D4 8 °द्रसु)दर्शन, S शतानीक शवध्वज — c) T G2-5 गजानीको (for जया°) K1 वदरानीक जेयानीको (sic), Dn2 D2 4 7 8 श्रुतध्वजो बलानीको — After 39ab, Dn2 D2 4 7 8 ins

1141*

जयानीको जयप्रिय ।
विजयो लब्धलक्षश्च

[ (L 1) D4 बलानीको (for जया) ]

— d) D2 जयाश्व- (for °श्वो)

40 a) Dn1 चन्द्रोदये (for °दय) Dn1 om from कामरथो up to स्कच (in 40e) B2 समरथो, G5 *मयशो (for कामरथो) — b) G5 damaged D3 6 श्रुता (for शुभा) — B3 reads 40ef on marg — f) Dn1 क्षर्या वि (for अर्थाय) — After 40, Dn1 reads 45cd, while D2 4 5 7 8 read 45cd for the first time, repeating it in its proper place

41 b) K4 B D (except D1) M4 मानुष (for मानवम्) — D4 om. 41c-42b — d) K1 स्मृत, Dn1 द्विप, Dn2 -द्विप, D3 6 7 T G2-5 M3. 5 द्विज (for द्विपम्) K2 सभूतभुजगं तथा — e) K1 निशेपम्, D5 निमेषाद्, B4 भुज (for अस्त्र) — f) B Dc1 कुर्वाते, G1 M4 कुर्वता, M1-3 5 कुर्वाता (for

C 7 7015
B 7 133. 44
K 7 139 43

निःशेषमस्त्रवीर्येण कुर्यातां भीमफल्गुनौ ॥ ४१
युधिष्ठिरश्च पृथिवीं निर्दहेद्धोरचक्षुषा ।
अप्रमेयबलः शौरिर्येषामर्थे च दंशितः ।
कथं तान्संयुगे कर्ण जेतुमुत्सहसे परान् ॥ ४२
महानपनयस्त्वेष तव नित्यं हि सूतज ।
यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह ॥ ४३

संजय उवाच ।

एवमुक्तस्तु राधेयः प्रहसन्भरतर्षभ ।
अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपम् ॥ ४४
सत्यमुक्तं त्वया ब्रह्मन्पाण्डवान्प्रति यद्वचः ।
एते चान्ये च बहवो गुणाः पाण्डुसुतेषु वै ॥ ४५
अजय्याश्च रणे पार्था देवैरपि सवासवैः ।
सदैत्ययक्षगन्धर्वपिशाचोरगराक्षसैः ।
तथापि पार्थाञ्जेष्यामि शक्त्या वासवदत्तया ॥ ४६
ममाप्यमोघा दत्तेयं शक्तिः शक्रेण वै द्विज ।
एतया निहनिष्यामि सव्यसाचिनमाहवे ॥ ४७
हते तु पाण्डवे कृष्णो भ्रातरश्चास्य सोदराः ।
अनर्जुना न शक्ष्यन्ति महीं भोक्तुं कथंचन ॥ ४८
तेषु नष्टेषु सर्वेषु पृथिवीयं ससागरा ।
अयत्नात्कौरवेयस्य वशे स्थास्यति गौतम ॥ ४९
सुनीतैरिह सर्वार्थाः सिध्यन्ते नात्र संशयः ।
एतमर्थमहं ज्ञात्वा ततो गर्जामि गौतम ॥ ५०
त्वं तु वृद्धश्च विप्रश्च अशक्तश्चापि संयुगे ।
कृतस्नेहश्च पार्थेषु मोहान्मामवमन्यसे ॥ ५१

---

कुर्याता ) Ś1 K8 कृष्ण ( for भीम ) K4 B D ( D4 om ) -फाल्गुनौ ( for फल्गुनौ )

42 D4 om 42$^{ab}$ ( cf v l 41 ) — $^{b}$ ) D3 6 क्रोध ( for घोर- ) — $^{d}$ ) K1 स्वेषाम् ( for येषाम् ) Dc1 D5 अर्थाय ( for अर्थे च ) K2 8 D1 G ( except G2 ) M दसित ( for दशित ) — $^{c}$ ) Ś1 K1 2 4 D3 5 6 समरे ( for सयुगे )

43 $^{a}$ ) D4 चैव ( for त्वेष ) — $^{b}$ ) Bom ed transp तव and नित्य हि — D5 om 43$^{cd}$ — $^{c}$ ) B1 2 4 यस्त्वम् K1 2 युद्ध, Dc1 Dn1 जेतु, G2 नित्यं, G2 ( also ) चित्रं ( for योद्धु )

44 Ś1 K ( K5 missing ) D3 5 6 om the ref — $^{b}$ ) G5 भरतर्षभ — $^{c}$ ) Ś1 K8 तत ( for तदा ) — $^{d}$ ) Dn2 om. from द्रुत up to यद्वच ( in 45$^{b}$ ) Ś1 K8 D2 4 5 7 8 नृप ( for कृपम् )

45 Dn2 om 45$^{ab}$ ( cf v l 44 ) Before 45, M3-5 ins कर्ण — $^{a}$ ) M4 तथ्यम् ( for सत्यम् ). — Dn2 reads 45$^{cd}$ after 40, while D2 4 5 7 8 read the same for the first time after it — $^{c}$ ) D7 ( second time ) वा ( for च ) — $^{d}$ ) Dn2 D4 7 8 ( last three first time ) गणा ( for गुणा ) D5 ( first time ) गणा पाडुसुतै सह

46 $^{a}$ ) Dn2 om from अजय्या up to देवैर ( in 46$^{b}$ ) D2-4 6-8 M3-5 अजेयाश्च ( for अजय्याश्च ) G5 om. रणे — $^{c}$ ) D3 सदेव ( for सदैत्य ) K4 B4 5 Dn D2 4 7 8 T G2-4 गधर्वै ( for -गन्धर्व ) Ś1 K1-3 D5 सयक्षदैत्य-गंधर्व ( D5 °र्वा ) — $^{e}$ ) M1 2 हि ( for [अ]पि ) D5 S ( except G1 M1. 2 ) पार्थं ( for पार्थान् )

47 $^{a}$ ) B हि ( for [अ]पि ) — $^{d}$ ) D4 7 8 सयुगे सव्यसाचिनं

48 $^{a}$ ) D4 आहवे ( for हते तु ) B1 च ( for तु ) D2 भ्रातरि ( for पाण्डवे ) D2-4 6 कृष्णे, S जि( G5 कृ )ष्णौ ( for कृष्णो ) — $^{c}$ ) D3 गतेर्जुने, D6 ऋतेर्जुन ( for अनर्जुना ) D2 शिष्यति, D3 शक्यति, G1 शक्यते, M शक्ष्यते ( for शक्ष्यन्ति ) — For 48$^{cd}$, D5 subst.

1142* अनर्जुनायां च भुवि विनश्येयुर्न सशय ।

49 $^{a}$ ) B1 Dn2 तेषु सर्वेषु नष्टेषु — $^{b}$ ) Ś1 K ( K5 missing ) D1 3 5 6 सकानना — $^{c}$ ) K1 D6 आयत्ता ( for अयत्नात् ) B Dc1 Dn D2 4 7 8 कौरवेंद्रस्य ( for °वेयस्य )

50 Dn2 D4 om. ( hapl ) 50 — $^{a}$ ) Ś1 K1 2 G4 M3-5 एव ( for इह ) K4 D2 7 8 सर्वाणि, D5 कार्याणि ( for सर्वार्था ) — $^{c}$ ) Ś1 K1-3 D6 ( sup lin ) 7 8 एतद्, B1 एवम् ( for एतम् ) — $^{d}$ ) K1 केशव, M3 5 सयुगे ( for गौतम )

51 Dc1 reads 51$^{ab}$ on marg — $^{a}$ ) D3 सु ( for तु ) B6 Dc1 Dn1 G3 M4 transp वृद्धश्च and विप्रश्च

यद्येवं वक्ष्यसे भूयो मामप्रियमिह द्विज ।
ततस्ते खड्गमुद्यम्य जिह्वां छेत्स्यामि दुर्मते ॥ ५२
यच्चापि पाण्डवान्विप्र स्तोतुमिच्छसि संयुगे ।
भीषयन्सर्वसैन्यानि कौरवेयाणि दुर्मते ।
अत्रापि शृणु मे वाक्यं यथावद्गदतो द्विज ॥ ५३
दुर्योधनश्च द्रोणश्च शकुनिर्दुर्मुखो जयः ।
दुःशासनो वृषसेनो मद्रराजस्त्वमेव च ।
सोमदत्तश्च भूरिश्च तथा द्रौणिर्विविंशतिः ॥ ५४
तिष्ठेयुर्दंशिता यत्र सर्वे युद्धविशारदाः ।
जयेदेतान्रणे को नु शक्रतुल्यबलोऽप्यरिः ॥ ५५
शूराश्च हि कृतास्त्राश्च बलिनः स्वर्गलिप्सवः ।
धर्मज्ञा युद्धकुशला हन्युर्युद्धे सुरानपि ॥ ५६
एते स्थास्यन्ति संग्रामे पाण्डवानां वधार्थिनः ।
जयमाकाङ्क्षमाणा हि कौरवेयस्य दंशिताः ॥ ५७
दैवायत्तमहं मन्ये जयं सुबलिनामपि ।
यत्र भीष्मो महाबाहुः शेते शरशताचितः ॥ ५८
विकर्णश्चित्रसेनश्च बाह्लीकोऽथ जयद्रथः ।
भूरिश्रवा जयश्चैव जलसंधः सुदक्षिणः ॥ ५९
शलश्च रथिनां श्रेष्ठो भगदत्तश्च वीर्यवान् ।
एते चान्ये च राजानो देवैरपि सुदुर्जयाः ॥ ६०
निहताः समरे शूराः पाण्डवैर्बलवत्तराः ।
किमन्यद्दैवसंयोगान्मन्यसे पुरुषाधम ॥ ६१

C. 7. 7018
B 7 158 67
K. 7 159 66

— $^b$) B2 अनात्त्वश्, B3 [अ]प्यशक्तश् (for अशक्तश्) Dn2 D2 अकृतज्ञश्च संयुगे, D4 7 8 [अ]प्यकृतज्ञस्तु (D4 °ज्ञश्च) सं — $^d$) Ś1 K3 Dn2 D1 2 4 7 8 ततो, G1 स्नेहान् (for मोहान्)

52 $^b$) K4 B Dc1 Dn D1 4 5 7 8 ममाप्रियम्, S मा विप्रियम् (for माम°) T क्षति, G2 4 5 इति (for इह) D2 ममाप्रियवचो द्विज — $^c$) Dn2 D4 7 8 उत्कृत्य, D2 उत्कृत्य, S उद्धृत्य (for उद्यम्य) — $^d$) D3 5 6 सयुगे (for दुर्मते)

53 D5 om (hapl) 53$^{ab}$ D8 om 53 — $^a$) K2 8 D1 2 4 7 यश्चापि — $^d$) Ś1 K (K5 missing) B1 5 Dn2 D1 5 कौरवेयानि, D2 4 7 S °याश्च (for °याणि) D5 सयुगे (for दुर्मते) — $^e$) M4 तत्र (for अत्र) Dn2 D2 4 7 S ब्रुवतो (for शृणु मे) — $^f$) K1 गदितो, K8 B Dc1 Dn1 D3 5 6 ब्रुवतो (for गदतो) Dn2 D2 4 7 S यथावच्छृणु गौतम

54 $^a$) Dn2 D2 4 द्रौणिश् (for द्रोणश्) — $^d$) D5 तथैव, T G1 3–5 M [ऽ]हमेव (for त्वमेव) G2 शकुनिश्चाहमेव च — D2 4 om 54$^{ef}$ — $^f$) Ś1 K3 द्रौणिश्चैव (for तथा द्रौणिर्)

55 D2 om 55$^{ab}$ — $^a$) Dn2 D2 तिष्ठति, D4 7 8 तिष्ठते (for तिष्ठेयुर्) K2 3 G1 3 4 M दंसिता (for दंशिता) — $^b$) S (except G1) सर्व- (for सर्वे) — $^c$) B Dc1 Dn1 S नर (for रणे) B1 D6 [ऽ]त्र, Dn2 D4 7 8 S (G2 damaged) हि, D2 [ऽ]पि (for नु) — $^d$) D3 5 6 समो (for -बलो) D5 [ऽ]रीन्

56 $^a$) D3 5 6 [अ]पि (for हि) Ś1 K3 निहता स्त्राश्, K1 2 D1 विहिता (for हि कृता) — $^b$) G5 -विप्लव (for -लिप्सव) — 56$^{cd}$ is partly damaged in G5 — $^c$) K1 2 धर्म (for युद्ध) — $^d$) Dn1 वत्गुर् (for हन्युर्) D2 युधि (for युद्धे) D4 om सुरा

57 $^b$) D5 वधैषिण (for वधार्थिन) — $^c$) D5 च (for हि) Dn2 जयमाकाक्षमाणस्य — $^d$) K1 3 D1 G (except G2) दंसिता

58 58$^{ab}$ is partly damaged in G5 — $^a$) D3 5 त्वहं (for अहं) Ś1 K (K5 missing) D1 दैवयुक्त त्वह मन्ये — $^b$) D5 हि (for सु) Ś1 K3 D3 6 सुमहताम् (for सुबलिनाम्) — $^c$) M3 5 महेष्वास (for महाबाहु) — $^d$) Dn2 D6 -शताचित, D5 8 °न्वित (for °चित) D2 शेरते शरतापित (sic)

59 Before 59, G2 ins कृप — $^b$) Ś1 K1, 2 B5 D1–6 बाह्लिको B1 Dn2 D2 4 5 7 8 G1 3 M (except M3) च (for ऽथ)

60 60$^{ab}$ is partly damaged in G5 — $^a$) Ś1 K1–3 जलश्, D1 4 सलश् (for श°) — $^b$) D6 जलसंधिश् (for भगदत्तश्) — $^c$) Dn2 D2 4 5 7 8 बहवो (for राजानो) — $^d$) Dn2 D7 8 च (for सु)

61 $^a$) Ś1 K1–3 D1 निर्जिता (for निहता) D2 शूरैः (for शूरा) — D8 om (hapl) 61$^b$–62$^c$, D8 reads the same on marg — $^b$) K2 B1 2 Dn2 D1 5 7 पांडवैर्बलवत्तरैः — $^d$) G5 damaged D4, 5 7 मन्यसे

C 7 7029
B 7 159 68
K. 7 159 67

यांश्च तान्स्तौषि सततं दुर्योधनरिपून्द्विज ।
तेषामपि हताः शूराः शतशोऽथ सहस्रशः ॥ ६२
क्षीयन्ते सर्वसैन्यानि कुरूणां पाण्डवैः सह ।
प्रभावं नात्र पश्यामि पाण्डवानां कथंचन ॥ ६३
यांस्तान्बलवतो नित्यं मन्यसे त्वं द्विजाधम ।
यतिष्येऽहं यथाशक्ति योद्धुं तैः सह संयुगे ।
दुर्योधनहितार्थाय जयो दैवे प्रतिष्ठितः ॥ ६४

इति श्रीमहाभारते द्रोणपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

# १३४

संजय उवाच ।
तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलम् ।
खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतम् ॥ १

अश्वत्थामोवाच ।
कर्ण पश्य सुदुर्बुद्धे तिष्ठेदानीं नराधम ।
एष तेऽद्य शिरः कायादुद्धरामि सुदुर्मते ॥ २

---

पुरुषर्षभ

62 D8 om 62[abc] (cf v l 61) D3 reads 62[abc] on marg Before 62, G2 ins कर्ण —[a]) D6 यश्च Dn2 D4 7 यश्चैतान्, D2 याश्चैव (for यांश्च तान्) D5 यश्चैतान्स्तौषि राजस्त्वं —[c]) D4 एषाम् (for तेषाम्)

63 [a]) D8 ह्रीयते (for क्षीयन्ते) —[c]) G5 damaged B5 प्राकार (for प्रभावं) D4 7 8 नैव, T G1–4 M1 2 5 नानु- (for नात्र) M4 प्रभावता न पश्यामि

64 D4 om 64[ab] —[a]) K2 B2 Dn2 D2 5 7 8 यस् (for यांस्) K1 त्वा (for तान्) —[b]) G8 मन्ये (submetric) (for मन्यसे) Ś1 K1–3 वै, K4 च, Dn2 D2 हि (for त्व) Dn2 D2 7 8 नराधम, M5 (before corr) द्विजोत्तम (for द्विजाधम) —[c]) K1 2 D1 करिष्ये, D3 6 Cd घटिष्ये, D4 यतिष्ठे (sic) (for °ष्ये) K4 Dn2 यथाशक्त्या, D2 4 7 8 परं शक्त्या (for यथाशक्ति) —[d]) K1 2 D1 युद्धं (for योद्धुं) —[e]) Ś1 K3 -हितार्थं वै, K1 2 D3 6 -हितार्थं तु (D8 हि) (for हितार्थाय) —[f]) K1 देवै, M3 देवे (for दैवे)

Colophon Ś1 K5 missing —*Sub-parvan* Some editions घटोत्कचवध; D1 जयद्रथवध —*Adhy name* K1 2 4 B Do1 Dn D1–5, 7 8 G1 M3 5 रात्रियुद्ध, D6 T G3–5 रात्रियुद्धे कर्णकृपसं (D6 कृपकर्णस-, T G3 कर्ण कृपवि )वाद, G1 M1 2 रात्रियुद्धे कर्णपरुषवाक्य, Bom. ed रात्रियुद्धे कृपकर्णवाक्य —*Adhy no* (figures, words or both) Dn1 158, D2 157, D3 53, T G M1–3 5 154, M4 150 —*Śloka no* Do1 Dn1 69.

## 134

☞ This adhy is missing in Ś1 K5 (cf v l 7 132 20, 125 14)

1 B4 D4 8 om. the ref —[a]) Ś1 K1–3 D3, 5 6 श्रुत्वा (for दृष्ट्वा) —[c]) T G2–5 उद्धृत्य, G1 M उद्गृह्य (for उद्यम्य) —[d]) K1 3 4 D1 रथात्, D6 भुवि (for द्रुतम्) —K4 B Do1 Dn D1, 3 6 ins after 1 D5 cont after 1144*

1143* तत परमसंक्रुद्ध सिंहो मत्तमिव द्विपम् ।
प्रेक्षत कुरुराजस्य समक्ष चेदमब्रवीत् ।

[(L 1) D6 repeats from the post half up to the end of line 2 after the prior half of line 6 of 1144* D6 (second time) [उ]त्तमम् (for मत्तम्) —(L 2) D6 (second time) पश्यत (for प्रेक्षत) B5 [इ]मम् (for [इ]दम्) Dn2 द्रौणि कर्ण समभ्ययात् (for the post half)]

2 D5 om the ref. —After the ref, K4 B Do1 Dn D1 3 5 6 ins

1144* यदर्जुनगुणास्तथ्यान्कीर्तयानं नराधम ।
शूरद्वेषात्सुदुर्बुद्धे त्व भर्त्सयसि मातुलम् ।
विकत्थमान शौर्येण सर्वलोकधनुर्भृतम् ।
दर्पोत्सेकगृहीतोऽद्य न कंचिद्गणयन्मृधे ।
क्व ते वीर्यं क्व चास्त्राणि यस्त्वां निर्जित्य संयुगे । [5]
गाण्डीवधन्वा हतवान्प्रेक्षतस्ते जयद्रथम् ।
येन साक्षान्महादेवो योधित समरे पुरा ।
समिच्छसि वृथा जेतु सूताधम मनोरथै ।

संजय उवाच ।

तमुत्पतन्तं वेगेन राजा दुर्योधनः स्वयम् ।
न्यवारयन्महाराज कृपश्च द्विपदां वरः ॥ ३

कर्ण उवाच ।

शूरोऽयं समरश्लाघी दुर्मतिश्च द्विजाधमः ।
आसादयतु मद्वीर्यं मुञ्चेमं कुरुसत्तम ॥ ४

अश्वत्थामोवाच ।

तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फल्गुनो नाशयिष्यति ॥ ५

दुर्योधन उवाच ।

अश्वत्थामन्प्रसीदस्व क्षन्तुमर्हसि मानद ।
कोपः खलु न कर्तव्यः सूतपुत्रे कथंचन ॥ ६
त्वयि कर्णे कृपे द्रोणे मद्रराजेऽथ सौबले ।
महत्कार्यं समायत्तं प्रसीद द्विजसत्तम ॥ ७
एते ह्यभिमुखाः सर्वे राधेयेन युयुत्सवः ।
आयान्ति पाण्डवा ब्रह्मन्नाह्वयन्तः समन्ततः ॥ ८

संजय उवाच ।

कर्णोऽपि रथिनां श्रेष्ठश्चापमुद्यम्य वीर्यवान् ।

C 8 7061
B 8 159 20
K 8 160 20

य हि कृष्णेन सहित सर्वशस्त्रभृता वरम् ।
जेतु न शक्ता सहिता सेन्द्रा अपि सुरासुरा ।[10]
लोकैकवीरमजितमर्जुन सूत सयुगे ।
कि पुनस्त्व सुदुर्बुद्धे सहैभिर्वसुधाधिपै ।

[ (L 1) D6 वीर्यंयत (for °यान) —(L 2) K4 Dn D1 शूर (for शूर-) —(L 3) K4 Dn2 -धनुधर, B1 D1.6 °र्भृता (for °भृतम्) —(L. 4) K4 D1.6 दर्पोत्सेिध, Dn2 °दूत-, D3 °स्यके (for °स्येक-) Dn1 D3 किंचिद् (for कचिद्) Dc1 Dn1 युधि (for मृधे) D6 न कश्चन गणाम्मृधे (for the post half) —(L 5) B3 Dc1 वा, D5 ते (for न) K4 D1 य, B3 Dn2 D5 6 यस्त्र (for यत्र) Dn1 त्व (for त्वां) —(L 6) D6 वीभत्सु (for हतवान्) D5 पश्यतस् (for प्रेक्ष°) After the prior half, D6 repeats from the post half of line 1 up to the end of 1143* line 2 D6 om the post half —(L 7) Dn2 समरे योधित (by transp) Dc1 Dn1 पुर (for पुरा) —(L 8) D5 सुयोधन (for सुताधम) —(L 12) B3 5 Dc1 सुदुर्बुद्धि, Dn2 अल जेतु; D6 हि दुर्बुद्धे (for सुदु°) ]

— D5 cont. 1143* —a) G1 M1 2 पश्य कर्ण (by transp) Dn2 D2 4 7 8 [अ]थ पश्य (D4 वश) (for पश्य सु-) —b) K2 नराधिप; D5 पुरो मम (for नराधम) —d) K1 सुदुर्मद, K2 °र्बुद्धे (for °र्मते) T G2-5 उद्धरिष्यामि संयुगे

3 S om. the ref. —a) K4 Dn2 D1.2 4 7 8 उद्य-(D1 °द्य)त तु (for उत्पतन्तं) —c) K4 Dn2 D2 4 7 8 G3 4 महातेजा (for °राज) —d) B Dc1 वदतां; S रथिना (for द्विपदा) Ś1 K1-3 वर (for वरः)

4 B4 om the ref. —b) S नराधम (for द्विजा°). —c) D3 मे (for मद्) —d) K2 B3 Dn2 D2-4 6-8 S (except G4) एन (for इम) B5 कुरुनदन, Dn2 D2 4 7 8 द्विजसत्तमं (D2 °म) (for कुरुसत्तम)

5 B Dc1 Dn1 D3.6 repeat 5 (with the ref) after 1145* B Dc1 Dn1 (all second time) D2 5, 6 (last two second time) S कृप (for अश्वत्थामा) —a) D4 क्षिप्यते, D7 क्षम्रते (sic) (for क्षम्यते) —b) D6 (by corr, first time) सूतपुत्र (for सूतात्मज) —c) Dn2 D2 4 8 उत्थितम्, D7 उच्छ्रितम् (for उत्सिक्तम्) Ś1 K1 2 D1 दर्पात्तुसिक्तमेतत्ते —d) Some MSS फाल्गुनो; B1 (first time) कौंतेयो (for फल्गुनो) S नाशयिष्यति फल्गुन

6 b) D5 मे द्विज (for मानद) —d) B5 सूतपुत्रं (for °पुत्रे) Dn2 त्वयानघ (for कथंचन)

7 a) K4 D1 त्वयि द्रोणे कृपे कर्णे —b) Dn D2 4 7 8 T G3 4 M1 5 (also as in text) च (for ऽथ) —c) K4 समायत्तत्, B1 2 4 5 Dc1 Dn1 °सक्तं, B3 °युक्त; Dn2 D3 °यात, D2 °यार्य, D6 °यात (for °यत्त) —d) Dc1 Dn1 मानद (for -सत्तम)

8 b) T G2-5 युयुत्सया (for °त्सव) —d) G1 M1 2 आह्वयति — After 8, Dn2 ins 1145*.

9 B Dc1 Dn1 D3 5 6 ins after the ref Dn2, after 8

1145* प्रसाद्यमानस्तु ततो राज्ञा द्रौणिर्महामना ।
प्रससाद महाराज क्रोधमन्युसमन्वित ।
तत कृप उवाचेदमाचार्य सुमहामना ।
सौम्यस्वभावाद्राजेन्द्र क्षिप्रमागतमार्दव ।

[ L 1) D2 6 तदा (for ततो) —(L 2) Dn2 -वेग

C 7 7361
B 7 159 20
K 7 160 20

कौरवाग्र्यैः परिवृतः शक्रो देवगणैरिव ।
पर्यतिष्ठत तेजस्वी स्वबाहुबलमाश्रितः ॥ ९
ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः ।
संरब्धस्य महाराज सिंहनादविनादितम् ॥ १०
ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विनः ।
दृष्ट्वा कर्णं महाबाहुमुच्चैः शब्दमथानदन् ॥ ११
अयं कर्णः कुतः कर्णस्तिष्ठ कर्ण महारणे ।
युध्यस्व सहितोऽस्माभिर्दुरात्मन्पुरुषाधम ॥ १२
अन्ये तु दृष्ट्वा राधेयं क्रोधरक्तेक्षणाब्रुवन् ।
हन्यतामयमुत्सिक्तः सूतपुत्रोऽल्पचेतनः ॥ १३
सर्वैः पार्थिवशार्दूलैर्नानेनार्थोऽस्ति जीवता ।
अत्यन्तवैरी पार्थानां सततं पापपूरुषः ॥ १४
एष मूलं ह्यनर्थानां दुर्योधनमते स्थितः ।
हतैनमिति जल्पन्तः क्षत्रियाः समुपाद्रवन् ॥ १५
महता शरवर्षेण छादयन्तो महारथाः ।
वधार्थं सूतपुत्रस्य पाण्डवेयेन चोदिताः ॥ १६
तांस्तु सर्वांस्तथा दृष्ट्वा धावमानान्महारथान् ।
न विव्यथे सूतपुत्रो न च त्रासमगच्छत ॥ १७

---

(for मन्यु) — Dn2 om lines 3–4 — (L 3) B1 2 4 कृपोप्युवाच (for कृप उवाच) D5 आचार्य — (L 4) D5 सौम्यश्च भव राजेंद्र जहि क्रोधं न मार्दव ]

— After 1145*, B Dc1 Dn1 D3 6 repeat 5 (with the ref) B Dc1 Dn1 D3 6 ins after the second occurrence of 5 D5 cont after 1144* Ś1 K (K5 missing) Dn2 D1 2 4 7 8 ins after the ref

1146* ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विन ।
आजग्मु सहितास्तत्र तर्जयन्त पुन पुन ।

[ (L 1) D7 lacuna for पाण्डवा राज Ś1 K (K5 missing) D1 om from the post half up to the prior half of line 2 Dc1 यशस्विनि (sic), D5 समतत (for यशस्विन) — (L 2) D3 5 6 सहसा (for सहितास्) B Dc1 Dn1 कर्ण, D3 5 6 राजस् (for तत्र) D2 4 गजयत (for तर्ज°) B Dc1 Dn1 D3 समतत, Dn2 D4 सह स्वश (for पुन पुन) ]

On the other hand, S ins after the ref.

1147* दुर्योधनवच श्रुत्वा अश्वत्थामा महाबल ।
प्रसादमगमद्राजन्सूतपुत्रस्य मानद ।

— $^{b}$) B1 वेगवान् (for वीर्य°) — $^{c}$) K1 D3 4 G3 M4 कौरवाग्रे, D5 °वार्थै (for वाग्र्यै) — $^{e}$) Ś1 K (K5 missing) D3 5 6 समविष्ठत, Dn2 पर्यतिष्ठति (for °ष्ठत) — $^{f}$) K4 आस्थित (for आश्रित)

10 $^{c}$) Dn2 om from महाराज up to अय कर्ण (in 12$^{a}$) K1 महाबाहो (for °राज) Dn D2 4 7 8 भीषण सुमहाराज (Dn2 om महाराज) — $^{d}$) B4 D5 -निनादितं, Dn1 विराजित, D2 7 विरावित, D8 विदारित, G1 विरावित (for विनादितम्). T G3 4 M सिंहराव विरावित, G2 5 सिंहराजापराजितं.

11 Dn2 om 11 (cf v l 10) — $^{b}$) D8 पाचाल्श्च, G5 पाचालाश्च — $^{c}$) S महानादम् (for °बाहुम्) — $^{d}$) Ś1 K8 नादम् (for शब्दम्) D1 7 8 अनादयन् (for अथानदन्)

12 Dn2 om up to अय कर्ण (cf. v l. 10) — $^{d}$) D (except Dc1 D1) पुरुषो भव (for °षाधम)

13 $^{a}$) T G3 4 अग्रे (for अन्ये) S (except M8 5) transp तु and दृष्ट्वा — $^{b}$) Dn2 D1 7 8 S दीप्ते क्षणा (for रक्ते°) — D1 om 13$^{c}$–14$^{b}$ — $^{c}$) Dn2 D1 5 7 8 वध्यताम् (for हन्य°) T G2–5 उद्रिक्त (for उत्सिक्त)

14 D2 om 14$^{ab}$ (cf. v l 13) — $^{b}$) Dn1 om from स्ति जीवता up to दृष्ट्वा कर्णं in (29$^{b}$) — $^{c}$) Ś1 K8 अत्यर्थ- (for अत्यन्त) B3 -वीरै (for वैरी)

15 Dn1 om 15 (cf. v l 14) — $^{a}$) B Dc1 D1 5 अनर्थानां (for ह्य°) — $^{b}$) B1 हिते (for मते) — D1 om. 15$^{c}$–16$^{d}$ — $^{c}$) K8 D2 3 5–8 S घ्नत (for हत)

16 Dn1 D4 om 16 (cf. v l. 14, 15) — $^{c}$) D5 महता (for वधार्थं) — $^{d}$) Dn2 D2 3 6–8 नोदिता (for चो°) D5 पार्थिवेंद्रेण नोदिता

17 Dn1 om 17 (cf v l 14) — $^{a}$) T G2–5 ततो (for तथा) — $^{b}$) Dn2 D2 4 7 8 पाडुपुत्रान्महाबलान् — $^{d}$) D2 4 7 8 न त्रास समगच्छत

18 Dn1 om. 18 (cf. v l. 14) — $^{a}$) B1 (marg as in text) 2 4 D5 S सा(B2 स-, G3 सं)गर-, Dn2 D2 4 7 8 संहार- (for नगर-) — $^{b}$) K4 D2 4. 7 8 मद्भुत; B1 Dc1 उद्धृत (Dc1 °त); D5 उद्भूतं (for

दृष्ट्वा नगरकल्पं तमुद्धूतं सैन्यसागरम् ।
पिप्रीपुस्तव पुत्राणां संग्रामेष्वपराजितः ॥ १८
सायकौघेन बलवान्क्षिप्रकारी महाबलः ।
वारयामास तत्सैन्यं समन्ताद्भरतर्षभ ॥ १९
ततस्तु शरवर्षेण पार्थिवास्तमवारयन् ।
धनूंषि ते विधुन्वानाः शतशोऽथ सहस्रशः ।
अयोधयन्त राधेयं शक्रं दैत्यगणा इव ॥ २०
शरवर्षं तु तत्कर्णः पार्थिवैः समुदीरितम् ।
शरवर्षेण महता समन्ताद्व्यकिरत्प्रभो ॥ २१
तद्युद्धमभवत्तेषां कृतप्रतिकृतैषिणाम् ।
यथा देवासुरे युद्धे शक्रस्य सह दानवैः ॥ २२
तत्राद्भुतमपश्याम सूतपुत्रस्य लाघवम् ।
यदेनं समरे यत्ता नाप्नुवन्त परे युधि ॥ २३
निवार्य च शरौघांस्तान्पार्थिवानां महारथः ।
युगेष्वीषासु छत्रेषु ध्वजेषु च हयेषु च ।
आत्मनामाङ्कितान्बाणान्राधेयः प्राहिणोच्छितान् २४
ततस्ते व्याकुलीभूता राजानः कर्णपीडिताः ।
बभ्रमुस्तत्र तत्रैव गावः शीतार्दिता इव ॥ २५
हयानां वध्यमानानां गजानां रथिनां तथा ।
तत्र तत्राभ्यवेक्षामः संघान्कर्णेन पातितान् ॥ २६
शिरोभिः पतितै राजन्बाहुभिश्च समन्ततः ।
आस्तीर्णा वसुधा सर्वा शूराणामनिवर्तिनाम् ॥ २७ C. 7. 7091 B. 7. 179. 40 K. 7. 180. 37

---

उद्धृत ) —[c]) Dn2 D2 4 7 8 प्रियकृत्, G3 सप्रीपुस् (sic), G5 पिपुपुस्, M (except M4) चिकीर्षुस्, Cd पिप्रीपुस् (as in text) D2 पुत्रस्य, G1 (inf lin) पुत्रान्वै (for पुत्राणां) —[d]) S समरेषु (for संग्रामेषु)

19 Dn1 om 19 (cf v 1 14) —[a]) S महता (for बलवान्) —[b]) T G2-4 महारथ, G5 lacuna (for महाबल) — D5 reads 19[c]-20[b] on marg —[d]) S उदीर्णं (M1 2 °र्यं) (for समन्ताद्)

20 Dn1 om. 20 (cf. v 1 14) D5 reads 20[ab] on marg —[a]) Ś1 K1-3 D3 6 त (for तु) —[b]) Dn2 D2 4 7 8 पाडवा (for पार्थिवास्) Ś1 K1-3 D (except Dc1, Dn1 om) G5 सम(D5 पर्य)वारयन् (for तम°) —[c]) B3-5 Dc1 D. S विधून्वाना —[f]) G5 lacuna. Dn2 D2 7 8 शक्र दैत्या यथा पुरा, D1 शक्र दैत्या पुरा यथा

21 Dn1 om. 21 (cf. v 1 14) —[a]) D. तत, G1 2 6 M तु तं (for तु तत्) —[b]) T G3 4 पाडवै (for पार्थिवै°) —[c]) D5 महता शरवर्षेण —[d]) Ś1 K1. 2 व्याकिरत् (for व्यकि°) Dn2 D2 4 5 7 8 सम ताद्व्यधमद्बली, D5 °स्पर्यवारयत्

22 Dn1 om. 22 (cf v 1 14) —[d]) G. damaged

23 Dn1 om 23 (cf. v 1. 14) —[a]) D3. 5 G1 2 सपश्याम —[b]) D1 7 8 तथ (for सूत) K3 विक्रमं (for लाघवम्) —[c]) K1 यद्येव, K2 येनेदं, B1 (marg as in text) D6 8 यदेवं, T G2-5 येनेम (G5 °मा) (for यदेनं) K1, 2 4 B Dc1 D1 2 5 6. 8 S सर्वतो (for समरे) —[d]) K4 B Dc1 Dn2 D2-7 T G3 4 M3-5 नाप्नुवनि, D3 प्राप्नुवति (for नाप्नुवन्त) S नरा धिपा (for परे युधि)

24 Dn1 om 24 (cf. v 1. 14) 24[cd] is partly damaged in G —[c]) B1-3 [ईं]शासु (for [ईं]षासु) D3 छत्रेषु (sic), D6 चक्रेषु (for छत्रेषु) D2 धनुर्निषं- गेष्वीषासु (sic), D5 युगेषु च तनूत्रेषु —[d]) K1. 2 D2 6 हयेषु च ध्वजेषु च, K4 G5 हयेषु च ****, Dn2 D2 4 7 8 रथे(D2 छत्रे)षु तुरगेषु च, D5 T G1-4 M हयेषु च गजे(G3 णे)षु च —[e]) K4 Dn2 D1 5 7 8 S घोरान् (for बाणान्) —[f]) K4 Dn2 D1 5 7 8 S शरान् (for शितान्)

25 Dn1 om 25 (cf v 1 14) —[c]) B5 व्यभ्र मुस्, D3 बहवस्, T G3 4 बभूवुस् (for बभ्रमुस्) —[d]) G. गता (for गाव) B (except B1) G1 5 M1 2 4 सिंहार्दिता (for शीता°)

26 Dn1 om. 26 (cf v 1 14) —[a]) K4 युध्य मानानां (for वध्य°) —[b]) Ś1 K1. 2 D1 5 6 नागाना (for गजानां) K4 Dc1 Dn2 D5 T G2-5 तदा (for तथा) —[c]) Ś1 K3 [अ]भ्यपश्याम, K1. 2 4 D1 [अ]भि प्रेक्ष्याम, B Dc1 [अ]भ्यवै(B1 5 Dc1 वे)क्षाम, Dn2 D2 4 7 8 स्म दृश्यते, D. [अ]भ्यवीक्ष्याम, G3 ह्यवेक्षाम, G1 [अ]प्यवेक्षाम (for [अ]भ्य°) M4 तत्राभ्यवेक्षाम स घान् —[d]) Dn2 D2-4. 7 8 सघा, M4 भुवि (for संघान्) Ś1 K (K5 missing) D1 2 5 6 धीमता, B Dc1 ताडितान्, Dn2 D2 4. 7 8 पीडिता, G3 पतितान् (for पा°)

C 7 7c81
B 7 159 40
K 7 160 23

हतैश्च हन्यमानैश्च निष्टनद्भिश्च सर्वशः ।
बभूवायोधनं रौद्रं वैवस्वतपुरोपमम् ॥ २८
ततो दुर्योधनो राजा दृष्ट्वा कर्णस्य विक्रमम् ।
अश्वत्थामानमासाद्य तदा वाक्यमुवाच ह ॥ २९
युध्यतेऽसौ रणे कर्णो दंशितः सर्वपार्थिवैः ।
पश्यैतां द्रवतीं सेनां कर्णसायकपीडिताम् ।
कार्त्तिकेयेन विध्वस्तामासुरीं पृतनामिव ॥ ३०
दृष्ट्वैतां निर्जितां सेनां रणे कर्णेन धीमता ।
अभियात्येष बीभत्सुः सूतपुत्रजिघांसया ॥ ३१
तद्यथा पश्यमानानां सूतपुत्रं महारथम् ।
न हन्यात्पाण्डवः संख्ये तथा नीतिर्विधीयताम् ॥ ३२
ततो द्रौणिः कृपः शल्यो हार्दिक्यश्च महारथः ।
प्रत्युद्ययुस्तदा पार्थं सूतपुत्रपरीप्सया ॥ ३३
आयान्तं दृश्य कौन्तेयं वृत्रं देवचमूमिव ।
प्रत्युद्ययौ तदा कर्णो यथा शक्रः प्रतापवान् ॥ ३४

धृतराष्ट्र उवाच ।

संरब्धं फल्गुनं दृष्ट्वा कालान्तकयमोपमम् ।
कर्णो वैकर्तनः सूत प्रत्यपद्यत्किमुत्तरम् ॥ ३५

---

27 Dn1 om 27 (cf v l. 14) —$^a$) D4 शरोभि, (sic) (for शिरोभि) Ś1 K1 Dc1 पातितै (for प°) — D2 om (hapl) $27^b$–$29^a$ —$^c$) Dn2 D4 7 8 प्रकीर्णा, G5 अस्तीर्णा (for आ°) S कृत्स्ना (for सर्वा)

28 Dn1 D2 om 28 (cf v l 14, 27) —$^b$) Dn2 निश्वनद्भिश्, D5 निस्व°, D6 निह° (for निष्ट°) B (except B2) Dn2 T G2–5 M3–5 सर्वत (for सर्वश) —$^c$) Ś1 K3 सर्वं, Dn2 D4 7 8 राजन्, S (except G1 M3 4) घोर (for रौद्रं) —$^d$) Dn2 D4 7 8 वैवस्वतपुर यथा

29 Dn1 om up to दृष्ट्वा कर्ण (cf v l 14) D2 om. $29^a$ (cf v l 27) —$^a$) Dn2 D4 7 8 दुर्योधनस्ततो राजा (Dn2 जन्) —$^d$) B Dc1 S वाक्यमेतद्, Dn D2–8 ततो वाक्यम् (for तदा वाक्यम्)

30 $^a$) B3 स (for ऽसौ) Dn2 D2 4 7 8 असौ हि दृश्यते कर्णो —$^b$) K3 G (except G2) M दसित (for दशित·) —$^c$) Dn D2 4 7 8 [इ]मा, D6 T G1. 3 4 [ए]ना (for [ए]ता) D3 6 विद्रुता (for द्रवतीं) —$^e$) Dn D2 4 7 8 कार्तिकेयसमुद्ध्( D7 3 °द्धु )ताम् —$^f$) Dn D2 4 7 8 आसुरीमिव ता (Dn1 वा, D4 सा) चमू (D2 °मु), M4 आसुरी पृतना यथा

31 $^a$) Dn2 D2 4 7 8 [इ]मा, D6 M4 ता, T G3 [ए]नां (for [ए]ता) D5 पीडिता (for निर्जिता) —$^b$) D6 कर्णसायकनिर्जितां: D6 सूतपुत्रमहारथ —$^c$) D2 यदभ्येति, D3 6 अभ्ययाति (for अभि°) G1 एव (for एष) —$^d$) M1 2 सूर्यं (for सूत-)

32 D6 reads $32^{ab}$ on marg —$^a$) B4 तमथा (sic), D4 7 8 तद्यदा, M4 संग्रामे (for तद्यथा) B Dc1 प्रेक्षमाणानां (for पश्यमानाना) —$^c$) G1 3 M1. 2 3 सख्ये, G1 M3 4 मंधे (for सख्ये) Ś1 K1–3 D6 न हन्यु· पाडवा सख्ये (K3 सर्वे), D4 हन्यु पाडव संख्ये न (sic)

33 $^a$) D5 कर्णो (for शल्यो) —$^b$) D4 हि (for च) K1 महारथा — D6 om $33^{cd}$ —$^c$) The portion of the text from प्रत्युद्ययु up to समरे (in $58^c$) is lost in G5 on missing folio D2–4 G1 M तथा (for तदा) —$^d$) Dn D2 4 7 8 सूतपुत्रस्य रक्षिण — After 33, Dn D2 4 5 7 8 ins

1148* बीभत्सुरपि राजेन्द्र पाञ्चालैरभिसवृत ।

[D7 पांचालै Dn2 -सहृत (for -सवृत)]

— After 1148*, D5 reads $34^{cd}$ for the first time, repeating it in its proper place

34 G5 missing (cf v l 33) Dn D2 4 7 8 om $34^{ab}$ —$^a$) Ś1 K (K5 missing) वीर, B Dc1 D1 3 5 6 वीक्ष्य (for दृश्य) —$^b$) Ś1 K (K5 missing) B Dc1 D1 3 5 6 शक्र दैत्य, G1 पुत्र देव-(for वृत्र देव-) G3 4 पुत्र देवचमूरिव — D5 reads $34^{cd}$ for the first time, after 1148* —$^c$) D4 5 (first time) प्रत्युद्ययुस (for °द्ययौ) D2 G3 यथा (for तदा) K4 Dn D4 5 (first time) 7 8 कर्ण, D2 वृत्र (for कर्णो) —$^d$) Ś1 K (K5 missing) B Dc1 D1. 3. 5 (second time) 6 यथा वृत्र (K4 B4 °त्र) शतक्रतुं (K4 B4 °तु), Dn D2. 4 5 (first time) 7 8 यथा वृत्र (D2 पुरा दैत्यं) पुरंदर

35 G5 missing (cf. v l. 33) —$^a$) D5 ससक्त, D7 8 सरथ, T G3 संरब्धा· (G3 °ब्ध) (for संरब्धं) K4 B D फाल्गुनं, G2 पाडव (for फल्गुन) —$35^{cd}$ = (var) $37^{cd}$ —$^c$) B1 T G1 2 M1 2 सूत, G3 कर्ण (for सूत). — Dn1 D2 T G3 om (hapl.)

स ह्यस्पर्धत पार्थेन नित्यमेव महारथः ।
आशंसते च बीभत्सुं युद्धे जेतुं सुदारुणे ॥ ३६
स तु तं महसा प्राप्तं नित्यमत्यन्तवैरिणम् ।
कर्णो वैकर्तनः सूत किमुत्तरमपश्यत ॥ ३७
संजय उवाच ।
आयान्तं पाण्डवं दृष्ट्वा गजः प्रतिगजं यथा ।
असंभ्रान्ततरः कर्णः प्रत्युदीयाद्धनंजयम् ॥ ३८
तमापतन्तं वेगेन वैकर्तनमजिह्मगैः ।
वारयामास तेजस्वी पाण्डवः शत्रुतापनः ॥ ३९
तं कर्णः शरजालेन छादयामास मारिष ।
विव्याध च सुसंक्रुद्धः शरैस्त्रिभिरजिह्मगैः ॥ ४०
तस्य तल्लाघवं पार्थो नामृष्यत महाबलः ।
तस्मै बाणाञ्शिलाधौतान्प्रसन्नाग्रानजिह्मगान् ॥ ४१
प्राहिणोत्सूतपुत्राय त्रिंशतं शत्रुतापनः ।
विव्याध चैनं संरब्धो बाणेनैकेन वीर्यवान् ॥ ४२
सव्ये भुजाग्रे बलवान्नाराचेन हसन्निव ।

C 7 7098
B 7 159 56
K 7 160 54

---

$35^{d}$–$37^{c}$ — $^{d}$) D3 प्रत्यपश्यत (hypermetric) (for °श्यत्)

36 G5 missing (cf v l 33) Dn1 D2 T G3 om 36 (cf. v l 35) — $^{a}$) D1 6 सह, D7 8 यो हि (for स हि) K4 स्पर्धति Dn2 य स्पर्धते च पार्थेन, D4 यो हि स्पर्धतु पा°, G2 4 M3 5 स्पर्धते सह पा° — $^{b}$) G2 4 M3. 5 नित्यकालं (for °मेव) G1 M1 2 4 पदे पदे (for महारथ) — $^{cd}$) D1 च बीभत्सुर् (for °त्सु) Ś1 K1 2 D1 युधा जेतुं, Dn2 D4 7 8 अवजेतु D5 युधा जेतुं, G1 युद्धे जेत्य (for युद्धे जेतुं) Ś1 D4 6 8 सदा रणे, K4 सुदारुणं, Dc1 सुदा रणे, Dn2 सुदक्षिण, D1 स दारुण, G4 सुदारणे (for °रुणे) D3 6 आशसते सदा जेतुं बीभत्सुं तु सदा रणे

37 G5 missing (cf v l 33) Dn1 D2 T G3 om $37^{abc}$ (cf. v l. 35) — $^{a}$) B5 सतत (for स तु त) — $37^{cd}$ = (var) $35^{cd}$ — $^{c}$) Dc1 शूर, D5 M4 सूत (for सूत) — Dc1 reads $37^{d}$–$38^{b}$ on marg — $^{d}$) S (G5 missing) अमन्यत (for अपश्यत) Dn D2 4 7 8 किमन्यत्प्रत्यपश्यत, D5 प्रत्यपश्यत्किमुत्तरं (= $35^{d}$)

38 G5 missing (cf v l 33) Dc1 reads $38^{ab}$ on marg K3 reads the ref on marg — $^{b}$) K4 D3 गज (for गजः) B Dc1 S (G5 missing) गज प्रतिगजो यथा — $^{c}$) Ś1 K (K5 missing) Dn D1 2 4 5 7 8 असम्भ्रान्तस्तत (Ś1 K3 D2 °न्ता) कर्ण, B5 °रत कर्ण, D6 अथ भ्रांततर कर्ण

39 G5 missing (cf v l 33) D5 om $39^{ab}$ — $^{b}$) Dn D2 4 7 8 स्वर्णपुंखैर् (for वैकर्तनम्) — K2 8 om. (hapl) $39^{c}$–$40^{d}$, G2 reads the same twice — $^{c}$) Dn D2–4 6–8 छादयामास पार्थाय (D2 °र्थय, D8 °र्थेय, D4 °र्थो य), — $^{d}$) D5 पाडवं (for पाण्डव) T G1 2 (both times) 4 M -सूदन (for -तापन) Dn D2–4 6–8 कर्णस्तु (D7 8 र्णं सु) विजय शरै — After 39, D3 6 ins 1149*

40 For the repetition in G2, cf. v l 39 G5 missing (cf v l. 33) K2 8 om 40 (cf. v l 39) D3 6 om. 40 — $^{a}$) K4 Dn2 कर्णं (for कर्ण) — $^{b}$) B Dc1 भारत, Dn1 D4 7 8 पार्थिव (D7 8 व), Dn2 D2 5 पाडव (Dn2 °व) (for मारिप) — $^{c}$) B5 विव्यधे; T G2 (both times) विव्याथ (for ध) G2 (both times) शिर क्रुद्ध (for सुसंक्रुद्ध) Dn D4 8 तत कर्ण सुसरब्ध, D2 तत सुसरब्धतर, D7 तत **स्तु संरब्ध — $^{d}$) K4 Dn2 अविध्यत (for अजिह्मगै) — Dn1 D2 4 7 8 ins after 40 D3 6 after 39

1149* गाण्डीवधनुषो मौर्वीं छित्त्वाच्युतमताडयत् ।

[D3 6 [S]थ ज्या (for मौर्वीं) Dn1 गांडीवधनुर्षोग ज्या, D2 व धनुषा गत्वा (for the prior half) D2 ममसु (for अच्युतम्) D7 8 अताडयन् ]

41 G5 missing (cf. v l 33) D1 om (? hapl) $41^{ab}$ — $^{a}$) Dn D4 7 8 S (G5 missing) दृष्ट्वा (for पार्थो) — $^{b}$) Dn D2 4 7 8 S (G5 missing) महारथ (for °बल) — After $41^{ab}$, Dn1 ins

1150* तूर्णं ज्या च समारोप्य गाण्डीवे च नवा दृढाम् ।

— $^{c}$) D4 तस्मिन् (for तस्मै) G1 M प्रसन्नाग्रान् (for शिलाधौतान्) T G2–4 तस्मै प्रसन्नाग्रान्नाराचान् — $^{d}$) Dn2 D2 4 7 8 प्रदीप्ताग्रान्, S (G5 missing) शिलाधौतान् (for प्रसन्नाग्रान्)

42 G5 missing (cf v l 33) — $^{b}$) Ś1 K1 2 त्रिंशत, K3 4 B Dn D3–6 T G1 2 त्रिशत (K3 त), D2 द्वात्रिंशत् (for त्रिंशत) G1 M1 2 सूदन (for तापन) — $^{c}$) T G2 विव्याथ B1 T G1. 2 4 M1 2 सक्रुद्धो, Dn D2 4 सरमाद् (for सरब्धो)

C. 7 7086
B 7 159 87
K 7 160 53

तस्य विद्धस्य वेगेन कराच्चापं पपात ह ॥ ४३
पुनरादाय तच्चापं निमेषार्धान्महाबलः ।
छादयामास बाणौघैः फल्गुनं कृतहस्तवत् ॥ ४४
शरवृष्टिं तु तां मुक्तां सूतपुत्रेण भारत ।
व्यधमच्छरवर्षेण स्मयन्निव धनंजयः ॥ ४५
तौ परस्परमासाद्य शरवर्षेण पार्थिव ।
छादयेतां महेष्वासौ कृतप्रतिकृतैषिणौ ॥ ४६
तदद्भुतमभूद्युद्धं कर्णपाण्डवयोर्मृधे ।
क्रुद्धयोर्वाशिताहेतोर्वन्ययोर्गजयोरिव ॥ ४७
ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमम् ।
मुष्टिदेशे धनुस्तस्य चिच्छेद त्वरयान्वितः ॥ ४८
अश्वांश्च चतुरो भल्लैरनयद्यमसादनम् ।
सारथेश्च शिरः कायादहरच्छत्रुतापनः ॥ ४९
अथैनं छिन्नधन्वानं हताश्वं हतसारथिम् ।
विव्याध सायकैः पार्थश्चतुर्भिः पाण्डुनन्दनः ॥ ५०
हताश्वात्तु रथात्तूर्णमवप्लुत्य नरर्षभः ।
आरुरोह रथं तूर्णं कृपस्य शरपीडितः ॥ ५१
राधेयं निर्जितं दृष्ट्वा तावका भरतर्षभ ।
धनंजयशरैर्नुन्नाः प्राद्रवन्त दिशो दश ॥ ५२
द्रवतस्तान्समालोक्य राजा दुर्योधनो नृप ।
निवर्तयामास तदा वाक्यं चेदमुवाच ह ॥ ५३
अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः ।
एष पार्थवधायाहं स्वयं गच्छामि संयुगे ।
अहं पार्थान्हनिष्यामि सपाञ्चालान्ससोमकान् ॥ ५४

---

43 G5 missing (cf v 1 33) —[a]) D5 7 सव्य (for सव्ये) —[b]) D3 6 स्मयन्, D4 हतन् (sic) (for स्मयन्) —[c]) Bom ed बाणेन (for वेगेन)

44 G5 missing (of v 1 33) —[b]) D5 G3 निमे पार्धं —[d]) K4 B D फाल्गुन Dn2 लघुहस्तवान् (for कृतहस्तवत्)

45 G5 missing (of v 1 33) —[a]) T G1 3 4 M च (for तु) —[c]) T G2 व्यथमत् (for व्यध°)

46 G5 missing (of v 1 33) —[a]) Dn1 D7 8 आच्छाद्य (for आसाद्य) —[b]) S (G5 missing) -जालेन (for वर्षेण) Ś1 K3 भारत, Dc1 D5 मारिष, D3 पार्थिव (for पार्थिव) Dn D2 4 7 8 छादयेतां (Dn1 °यतौ; D2 °यतां) समतत· —[c]) Dn D2 4 7 8 शर जालैर्, D3 आवृण्वता, D6 आत्तबाणौ (for छादयेतां) Dn2 D7 महेष्वासै

47 G5 missing (of v 1 33) —[a]) K3 4 मह युद्धं, D5 अपश्याम (for अभूद्युद्ध) — D2 om 47[cd] —[c]) Dn D4 7 8 उभयोर् (for क्रुद्ध°) K4 B D (except D1 2) वासिताहेतोर् —[d]) S (G5 missing) दन्तिनोर् (for गजयोर्)

48 G5 missing (cf. v 1. 33) —[a]) D5 महाबाहुर् (for महेष्वासो)

49 G5 missing (cf. v 1 33) —[a]) T G3 4 हयांश् (for अश्वाश्) —[d]) Dn2 अहनत् (for °रत्) T G2-4 -सूदन (for तापन)

50 G5 missing (cf v 1 33) —[c]) T G2 वि व्याथ (for °ध) B1 2 5 शायकै D1 तीक्ष्णैश्, D4 पार्थं (for पार्थश्) —[d]) D4 शत्रुभि (for चतुर्भि) S (G5 missing) चतुर्भि· सूतनदन

51 G5 missing (cf v 1 33) —[b]) Dn1 D1 7 8 अ(D4 उ)पद्रुत्य (for अवप्लुत्य) K2 रथर्षभ·, D1 6 नरर्षभ, S (G5 missing) महारथ (for नरर्षभ) —[c]) D3 6 रथश्रेष्ठं, M3 रथ कर्ण (for रथं तूर्णं) —[d]) M3 पार्थस्य (for कृपस्य) — After 51, Dn D2 4 5 ins

1151* स तुन्नोऽर्जुनबाणौघैराचित शल्यको यथा ।
जीवितार्थमभिप्रेप्सु· कृपस्य रथमारुहत् ।

[(L 2) D5 परिप्रेप्सु (for अभि°)]

52 G5 missing (of v 1 33) —[b]) D1 भरतर्षभ —[c]) D6 भिन्ना (for नुन्ना) —[d]) D3 G1-4 M1 2 प्रा(G3 प्र)द्रवति, T प्राद्रवत (for प्राद्रवन्त)

53 G5 missing (cf. v 1 33) —[a]) D5 समा लक्ष्य (for °लोक्य) —[b]) Ś1 K3 तदा, Dn D2 4 5 7 8 स्वयं, M3 नृप (for नृप) —[c]) Ś1 K3 नृप (for तदा) —[d]) K4 एतद् (for चेदम्)

54 G5 missing (of v 1 33) —[b]) Ś1 K3 पुरुष-र्षभा, D4 * नरर्षभ (for क्षत्रियर्षभा) —[c]) B5 D5 एष पार्थवधार्थाय —[d]) D5 शीघ्र (for स्वय) K1 सयुगं; K3 पाडवं (for सयुगे) —[e]) Ś1 K1-3 Dn

अद्य मे युध्यमानस्य सह गाण्डीवधन्वना ।
द्रक्ष्यन्ति विक्रमं पार्थाः कालस्येव युगक्षये ॥ ५५
अद्य मद्बाणजालानि विमुक्तानि सहस्रशः ।
द्रक्ष्यन्ति समरे योधाः शलभानामिवायतीः ॥ ५६
अद्य बाणमयं वर्षं सृजतो मम धन्विनः ।
जीमूतस्येव घर्मान्ते द्रक्ष्यन्ति युधि सैनिकाः ॥ ५७
जेष्याम्यद्य रणे पार्थं सायकैर्नतपर्वभिः ।
तिष्ठध्वं समरे शूरा भयं त्यजत फल्गुनात् ॥ ५८
न हि मद्वीर्यमासाद्य फल्गुनः प्रसहिष्यति ।
यथा वेला समासाद्य सागरो मकरालयः ॥ ५९
इत्युक्त्वा प्रययौ राजा सैन्येन महता वृतः ।
फल्गुनं प्रति दुर्धर्षः क्रोधसंरक्तलोचनः ॥ ६०
तं प्रयान्तं महाबाहुं दृष्ट्वा शारद्वतस्तदा ।
अश्वत्थामानमासाद्य वाक्यमेतदुवाच ह ॥ ६१
एष राजा महाबाहुरमर्षी क्रोधमूर्छितः ।
पतंगवृत्तिमास्थाय फल्गुनं योद्धुमिच्छति ॥ ६२
यावन्नः पश्यमानानां प्राणान्पार्थेन संगतः ।
न जह्यात्पुरुषव्याघ्रस्तावद्वारय कौरवम् ॥ ६३
यावत्फल्गुनबाणानां गोचरं नाधिगच्छति ।
कौरवः पार्थिवो वीरस्तावद्वारय तं द्रुतम् ॥ ६४

C 7 7121
B 7 159 79
K 7 160 77

---

D2 3 6-8 पार्थं (for पार्थान्) D2 वधिष्यामि (for हनि) —f) K4 सपचालान्, B1 पाचालाश्च Ś1 K1-3 D3 5 6 पाचालान्सहसोमकान्, Dn D2 4 7 8 सपाचालं स (Dn1 °पाचालान्स-, D4 7 °पचालं स )मागत (D7 °त)

55 G5 missing (cf v l 33) —a) K1 2 युधि (for अद्य) —b) K1 4 Dn1 D6 धन्विना (for धन्वना) —c) D8 om. (hapl ) from विक्रमं up to द्रक्ष्यन्ति (in 56c)

56 G5 missing (cf. v l. 33) D8 om up to द्रक्ष्यन्ति (cf v l 55) —a) D2 मे (for मद्) D6 वर्षाणि (for जालानि) —c) Dn2 D2 4 7 8 पार्था, M1 2 5 यौधा (for योधा) —d) Ś1 K3 आयत, K1 2 D4 आयता, D1 7 M3 आयति, G1 M1 2 5 आतती, G3 4 आयतिं, M4 आवली (for आयती)

57 G5 missing (cf. v l 33) —b) D2 अस्यत शास्त्रपीडितं —d) Dn1 D4 5 7 8 G1 M द्रक्ष्यते, D3 पश्यति (for द्रक्ष्यन्ति) Dn D2 4 6 S (G5 missing) मम (for युधि)

58 G5 missing up to समरे in (58c) (cf. v l. 33) —b) B2 5 शायकैर् (for साय°) —c) K4 Dn D1 2 4 7 8 S वीरा (for शूरा) —d) M3 त्यजय (for °त) K4 B D फाल्गुनाद् (for फ°)

59 G5 partly damaged K4 D1 om (hapl ) $59^{bc}$ —b) B D (except Dn2, D1 om ) फाल्गुन D2 5 प्रहरिष्यति (for प्रसहि°)

60 G5 partly damaged. —a) D2 राजन् (for राजा) —b) D5 नृप (for वृत) — G2 om $60^{cd}$ —c) K4 B D फाल्गुन Dn1 D2 4 7 8 S (G2 om ) सरब्ध (for दुर्धर्ष) —d) K3 B Dc1 Dn2 क्रोधात् (for क्रोध) T G3-5 क्रोधेन महतावृत

61 G5 damaged —a) G1 M1 2 महाबाहुर् —b) D5 तत (for तदा) —d) K1 ततो वाक्यम्, Dn D2 4 7 8 G1 वाक्यं चेदम् (for वाक्यमेतद्)

62 G5 partly damaged —a) G1 M महाबाहो (for °बाहुर्) —b) Dn1 D2-4 7 8 T G1-4 M1 2 अ(G3 आ)मर्षाद् (D8 °र्षं) (for अमर्षी) —d) K4 B D फाल्गुन

63 G5 partly damaged —a) D8 स (for न) D2. 6 प्रेक्षमानानां (for पश्य°) — D4 om (hapl.) $63^{b}$–$64^{a}$ —b) Dn2 M4 सयुगे (for सगत) —c) Ś1 K1 2 Dc1 D5 M5 -व्याघ्र Dn2 D2 7 8 न जह्या त्पार्थि(D2 °त्पाड )वश्रेष्ठस् —d) Ś1 K1 धारय, T G3 4 पालय (for वारय) Ś1 K (K5 missing) कौरवान्

64 D4 om $64^{a}$ (cf v l 63) G5 partly damaged —a) K4 B D (D4 om ) फाल्गुन- (for फ°) —b) T कौरव, G3. 4 गौरव (for गोचरं) G1 M (except M4) नाभि, Bom ed नाद्य (for नाधि) —c) Dn2 D2 4 5 7 8 कौरव्य (for °व) G2 त्वरितो (for पार्थिवो) Ś1 K3 D4 वीर —d) Dn1 D4. 5 तिष्ठस्व, Dn2 D2 7 8 तिष्ठति (for वारय) K4 तद्रतं, B1. 3-5 Dc1 संयुगात्, B2 Dn D2 4 5 7 8 संयुगे (for तं द्रुतम्) S (G5 damaged) तावद्युद्धान्निवर्त्य( T G3 4 °र्त )ता

65 G5 partly damaged —a) G2 सुकैर् (for

C 7 7121
B 7 159 60
K 7 160 78

यावत्पार्थशरैर्घोरैर्निर्मुक्तोरगसंनिभैः ।
न भस्मीक्रियते राजा तावद्युद्धान्निवार्यताम् ॥ ६५
अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु मानद ।
स्वयं युद्धाय यद्राजा पार्थं यात्यसहायवान् ॥ ६६
दुर्लभं जीवितं मन्ये कौरव्यस्य किरीटिना ।
युध्यमानस्य पार्थेन शार्दूलेनेव हस्तिनः ॥ ६७
मातुलेनैवमुक्तस्तु द्रौणिः शस्त्रभृतां वरः ।
दुर्योधनमिदं वाक्यं त्वरितं समभाषत ॥ ६८
मयि जीवति गान्धारे न युद्धं गन्तुमर्हसि ।
मामनादृत्य कौरव्य तव नित्यं हितैषिणम् ॥ ६९
न हि ते संभ्रमः कार्यः पार्थस्य विजयं प्रति ।
अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन ॥ ७०

दुर्योधन उवाच ।

आचार्यः पाण्डुपुत्रान्वै पुत्रवत्परिरक्षति ।
त्वमप्युपेक्षां कुरुषे तेषु नित्यं द्विजोत्तम ॥ ७१
मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि ।
धर्मराजप्रियार्थं वा द्रौपद्या वा न विद्म तत् ॥ ७२
धिगस्तु मम लुब्धस्य यत्कृते सर्वबान्धवाः ।
सुखार्हाः परमं दुःखं प्राप्नुवन्त्यपराजिताः ॥ ७३
को हि शस्त्रभृतां मुख्यो महेश्वरसमो युधि ।
शत्रून्न क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः ॥ ७४
अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान् ।

---

घोरैर्) —$^{b}$) D6 निर्मुक्तो गण( *inf lin* वण )सनिभै —$^{c}$) Ś1 K1-3 D1 भस्म क्रियते, Dn1 D4 5 7 8 च भस्मीकृतो, D3 6 वध्य क्रियते (for भस्मीक्रियते) D4 राजन् —$^{d}$) B1 निवर्तय, Dn D2 5 8 G1 2 M निवर्त्यता, D4 T G3 4 निवर्तता, D6 निवार्पिता (sic), D7 न्यवर्तता (for निवार्यताम्)

66 G5 partly damaged —$^{a}$) D4 om from अयुक्त up to जीवित (in 67$^{a}$) Dn2 T G2-4 पश्यामस् (for पश्यामि) —$^{d}$) K4 पार्थे, Dn D5 7 8 S (G5 damaged) रण, D2 रणे (for पार्थं)

67 D4 om up to जीवित (of v l 66) —$^{b}$) K1-3 Dn D1 4 6-8 G2-5 M कौरवस्य (for °व्यस्य) —$^{c}$) Dn2 D2 4.5 7 8 S (except G5) समरे (for पार्थेन) —$^{d}$) D2 शार्दूलस्य, Cd °लेन (as in text) Dc1 D2 3 6 हस्तिना (for °न)

68 G5 partly damaged —$^{d}$) T G2-5 जगाद रथिना वर

69 Before 69, M3-5 ins अश्वत्थामा —$^{b}$) Ś1 K3 युद्धे (for युद्ध) Dn D2 4 5 7 8 कर्तुम् (for गन्तुम्) —$^{d}$) D5 नित्यं तव (by transp) Ś1 त्वयि, G2 मम (for तव) B4 D6 M4 नित्य (for नित्यं). Ś1 K (K5 missing) D1 3.6 प्रियैषिणं (for हितै°)

70 G5 partly damaged —$^{a}$) D3 सगम (for सभ्रम) —$^{d}$) D3 6 धनजय (for सुयोधन)

71 G5 partly damaged —$^{a}$) D1 च (for वै) —$^{b}$) S शिष्यत्वाद् (for पुत्रवद्) G5 M4 परिरक्ष्यति —$^{c}$) Dn2 D2 5 8 G2 [अ]वेक्षा, D4 6 G1 3 [अ]पेक्षा, D7 [उ]वेक्षा (for [उ]पेक्षां) —$^{d}$) B2 3 5 Dc1 D5 नित्य तेषु (by transp) Dn2 D2 4 5 7 8 ममारिषु, M1 2 द्विजोत्तम

72 G5 partly damaged —$^{c}$) B1 प्रियार्थे Ś1 वै (for वा) G2 धर्मराजस्य चार्थं वा —$^{d}$) D7 8 वेद्मि (for विद्म)

73 G5 partly damaged —$^{b}$) T G मम (for सर्वे) —$^{c}$) Dn D2 4 5 7 8 सुखकामा प( D2 °दु:खाप्त )र दु:खं —$^{d}$) Dn2 D4.7 8 M3 पराजिता, D5 द्विजात्तय (for [अ]पराजिता)

74 G5 partly damaged —$^{a}$) B3 याहि, T G3 5 M3-5 त्व हि (for को हि) K3 4 B Dc1 D3 6 T G1-4 M1.2 शस्त्रविदा (for °भृता) Dn D2 4 5 7 8 श्रेष्ठो (for मुख्यो) —T G3 om 74$^{c}$-75$^{d}$ —$^{c}$) K4 Dn D1 4 5 7 8 G4 शत्रु (for शत्रून्) Dn1 न (for न) Ś1 अपेक्षयेत्, K3 अक्षेपयेत्, B Dc1 उपेक्षते, D4 न क्षिपयेत्, D5 न क्षमते (for न क्षपयेत्) Dn1 यस्तु, D4 त्वत्तो, S (T G3 om) शक्त्या (for शक्तो)

75 T G3 om 75 (cf v l 74) G5 partly damaged —$^{b}$) K4 D5 7 8 समाहितान्, D4 lacuna, G5 damaged (for ममाहितान्) — D3 om (hapl.) 75$^{c}$-76$^{b}$ —$^{c}$) K1.2 -गोचरा (for -गोचरे) —$^{d}$) G1 2.4 M4 हि (for [अ]पि) Ś1 K3 न प्रभो, K1.2 4 B1-3 D1 नोनघ (for ना°) Dn D2-7 स्यात्तु देवा न दानवा .

तवास्त्रगोचरे शक्ताः स्थातुं देवापि नानघ ॥ ७५
पाञ्चालान्सोमकांश्चैव जहि द्रौणे सहानुगान् ।
वयं शेषान्हनिष्यामस्त्वयैव परिरक्षिताः ॥ ७६
एते हि सोमका विप्र पाञ्चालाश्च यशस्विनः ।
मम सैन्येषु सरब्धा विचरन्ति दवाग्निवत् ॥ ७७
तान्वारय महाबाहो केकयांश्च नरोत्तम ।
पुरा कुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ॥ ७८
आदौ वा यदि वा पश्चात्तवेदं कर्म मारिष ।
त्वमुत्पन्नो महाबाहो पाञ्चालानां वधं प्रति ॥ ७९
करिष्यसि जगत्सर्वमपाञ्चालं किलाच्युत ।
एवं सिद्धाब्रुवन्वाचो भविष्यति च तत्तथा ॥ ८०
न तेऽस्त्रगोचरे शक्ताः स्थातुं देवाः सवासवाः ।
किमु पार्थाः सपाञ्चालाः सत्यमेतद्वचो मम ॥ ८१

C 7 7139
B 7 159 97
K 7 160. 95

इति श्रीमहाभारते द्रोणपर्वणि चतुस्त्रिंशत्यधिकशततमोऽध्यायः ॥ १३४ ॥

---

76 D5 om 76[ab] (cf. v 1 75) G5 partly damaged —[b]) Dn1 D4 7 G1 M1. 2 द्रोण (sic) (for द्रौणे) Ś1 K1 3 D5 समागतान् (for सहानुगान्) —[c]) D3 तान्वै (for शेषान्) D3 G1 M1 2 हनिष्यामि

77 G5 partly damaged —[a]) G1 वीर (for विप्र) —[b]) B1 मनस्विन (for यश°) —[c]) K3 B Dc1 समुद्धा (for सरब्धा) —[d]) D5 यथाग्निवत् (for दवा°)

78 G5 partly damaged Dn1 om (hapl.) 78[b]–79[c] —[b]) B3 Dn2 D4. 5 कैकयान्, D1–3 6–8 M3–5 कैके° (for केक°) S महारथान् (for नरोत्तम) —[c]) Cv परा (for पुरा) D4 5 7 8 निःशेषान्, T G3–5 न शेषं, Cv निःशेषं (as in text) —[d]) K3 4 B3 Dc1 Dn2 D5–8 रक्षमाणा (for रक्ष्य°) — After 78, B Dc1 Dn2 D3 4–8 ins

1152* अश्वत्थामस्त्वरायुक्तो याहि शीघ्रमरिंदम ।

[ B1 4 जहि (for याहि) Dn2 om मरिंदम ]

79 Dn1 om 79[abc] (cf v 1 78) G5 partly damaged —[a]) Dn2 om. from आदौ up to पाञ्चालाना (in 79[d]) Cv as in text —[b]) S [ए]तत् (for [इ]-द) D2 4 5 ब्राह्मण (for मारिष) —[c]) D5 महाबाहु —[d]) D7 पचालाना Dn D2 4 6 7 8 वधाय वै (for वधं प्रति)

80 G5 damaged —[a]) Dn D2 6 7 8 कृत्स्नम्, D4 कृष्णम् (for सर्वम्) —[b]) K3 D3 अपचाल, M1 2 अपाचाला B1–3 D8 M1 2 [अ]च्युत, Dn2 [इ]यत, D2 7 corrupt (for [अ]च्युत) —[c]) Ś1 K (K5 missing) D1 इति (for एवं) M4 om from त्वाचो up to गोचरे (in 81[a]) Dn2 D2 4. 5 भार्या (Dn2 °र्यो) (for वाचो) D3 ० एव वाचोब्रुवन्सिद्धा —[d]) D3 भविष्यति T G2–4 हि (for च) — After 80, B Dc1 Dn2 D6 ins

1153* तस्मात्त्व पुरुषव्याघ्र पाञ्चालाञ्जहि सानुगान् ।

[ Bom ed पचालाम् ]

81 M4 om up to गोचरे (cf v 1 80) G5 partly damaged —[ab]) Ś1 K1–3 D1–3 6 स्थातु शक्ता (by transp) —[c]) B4 के नु, Dn1 D4. 7 8 किं नु (for किमु) K4 सपचाला, D4 स पाचाला —[d]) B2 4 ब्रवीमि ते (for वचो मम) — After 81, B Dc1 Dn2 D3 6 ins

1154* न त्वा समर्था सग्रामे पाण्डवा सह सोमकैः ।
बलाद्योधयितु वीर सत्यमेतद्ब्रवीमि ते ।
गच्छ गच्छ महाबाहो न न कालात्ययो भवेत् ।
इयं हि द्रवते सेना पार्थसायकपीडिता ।
शक्तो ह्यसि महाबाहो दिव्येन स्वेन तेजसा । [ 5 ]
निग्रहे पाण्डुपुत्राणा पाञ्चालाना च मानद ।

[ (L 1) D3 पाचाला सग्रामे (for सग्रामे पाण्डवा) B4 D3 सहसोमका —(L 4) B2 3 -शायक- (for सायक) B3 6 Dc1 -ताडिता (for -पीडिता) — B4 om line 6 —(L 6) Bom. ed पचालाना ]

Colophon Ś2 K5 missing —*Sub-parvan* Editions घटोत्कचवध, D6 जयद्रथवध —*Day of Droṇa's Generalship* K4 चतुर्थदिवसे —*Adhy name* K1. 3 4 B Dc1 Dn2 D1–5 7 8 रात्रियुद्ध, D6 रात्रियुद्धे संकेतविमर्द, T G3 4 कर्णपराजय; G1 M (except M4) रात्रियुद्धे कर्णपराजय, G5 damaged, Bom ed रात्रियुद्धे दुर्योधनवाक्य —*Adhy no* (figures, words or both) Dn1 159, D2 158, D8 54, T G M1–3 5 155, M4 154 —*Śloka no* Dc1 99.

# १३५

C 7 7143
B 7 160 1
K 7 161 1

संजय उवाच ।
दुर्योधनेनैवमुक्तो द्रौणिराहवदुर्मदः ।
प्रत्युवाच महाबाहो यथा वदसि कौरव ॥ १
प्रिया हि पाण्डवा नित्यं मम चापि पितुश्च मे ।
तथैवावां प्रियौ तेषां न तु युद्धे कुरूद्वह ।
शक्तितस्तात युध्यामस्त्यक्त्वा प्राणानभीतवत् ॥ २
अहं कर्णश्च शल्यश्च कृपो हार्दिक्य एव च ।
निमेषात्पाण्डवीं सेनां क्षपयेम नृपोत्तम ॥ ३
ते चापि कौरवीं सेनां निमेषार्धात्कुरूद्वह ।
क्षपयेयुर्महाबाहो न स्याम यदि संयुगे ॥ ४
युध्यतां पाण्डवाञ्शक्त्या तेषां चास्मान्युयुत्सताम् ।
तेजस्तु तेज आसाद्य प्रशमं याति भारत ॥ ५
अशक्या तरसा जेतुं पाण्डवानामनीकिनी ।
जीवत्सु पाण्डुपुत्रेषु तद्धि सत्यं ब्रवीमि ते ॥ ६
आत्मार्थं युध्यमानास्ते समर्थाः पाण्डुनन्दनाः ।
किमर्थं तव सैन्यानि न हनिष्यन्ति भारत ॥ ७

---

## 135

☞ This adhy is missing in Ś2 K5 (cf v 1 7 132 20, 125 14)

1 [a]) G5 is damaged from क्तो up to चापि (in 2[b]) — [b]) B4 दुर्मदं (for -दुर्मदः) — After 1[ab], K4 D1 5 ins

1155* चकारारिवधे यत्नमिन्द्रो दैत्यवधे यथा ।
[ D1 च तदा (for चकार) D1 दैत्य (for दैत्य-) ]

— [c]) K4 B D (except D1) महाबाहुस् (for °बाहो) — After 1[abc], N (Ś2 K5 missing) ins

1156* तव पुत्रमिदं वचः ।
सत्यमेतन्महाबाहो
[ Before line 2, D6 ins अश्वत्थामोवाच ]

2 G5 is damaged up to चापि — [a]) D1 प्रयाहि (for प्रिया हि) S (G5 damaged) राजन् (for नित्य) — [b]) S (G5 damaged) चैव (for चापि) — [c]) B1 अथ (for तथा) D8 S [अ]ह प्रियस् (for [आ]वां प्रियौ) Ś1 K3 युद्धे (for तेषां) — [d]) The portion from द्धे कुरु up to युद्ध (in 29[b]) is lost in G5 on missing folio Ś1 K3 तु तेषां, Dn2 युद्धे तु (by transp) Dn2 D1 4 5 7 8 कथंचन (for कुरूद्वह) — D1 om. (hapl) 2[e]-3[f] — [e]) D2 शक्तिवाद् (for °तस्) B1 Dn1 युध्यावस् (for मस्) — [f]) D6 मत्वा (for त्यक्त्वा)

3 G5 missing (cf v 1 2) D1 om 3 (cf v 1 2) — [a]) D2 transp कर्णश् and शल्यश् — [b]) B2 वा (for च) — [c]) T G2 8 विशेषाद् (for निमे°) — [d]) B1 D6 क्षययेम, Dn2 क्षपयेयुर्, D4 5 °येय, G8 °येव, M4 °यामो (for °येम) Ś1 K (K5 missing) कुरूद्वह, D3 6 नरोत्तम (for नृपो°)

4 G5 missing (cf. v 1 2) — [a]) D2 [s]वधीत् (for चापि) — [b]) Dn1 निमेषार्धान् (for °र्धात्) Dn2 D2 4 5 7 8 निमेषात्कुरुसत्तम — [c]) B1 क्षययेयुर्, D2 4 5 7 8 क्षपयेरन् (for °येयुर्) — [d]) Ś1 K3 D1 8 M4 नस्यामो (sic), K1 2 नश्यामो (for न स्याम) K1 युधि, G2 इति (for यदि) Dn2 D2 4 5 7 8 G1 M1-3 5 यदि न स्याम संयुगे

5 G5 missing (cf v 1 2) — [a]) Dn2 D2 4 5 युध्यत, S (G5 missing) युध्याम (T G3 4 °म) (for युध्यतां) — [b]) D8 हि युध्यता (for युयुत्सताम्) Dn2 D5 तेपि चास्मान्युयुत्सव, D2 4 ते चाप्य (D4 om प्य)-स्मान्युयुत्सवः, D6 तेषां चास्मासु युध्यतां, S (G5 missing) ते चाप्यस्मान्यथाबलं — [c]) Ś1 K3 स्व, K1 3 4 D1 हि (for तु) B Dn1 Dn1 तेजस्तेज समासाद्य — [d]) T G2-4 यातु (for याति) K4 कौरव (for भारत)

6 G5 missing (cf v 1 2) — [a]) K4 D1 अशक्यं, D4 6 °क्ता (for °क्या) K1 उरसा (sic) (for त°) — [b]) D8 om. (hapl) from पाण्ड up to जीवत्सु (in 6[c]) — [d]) Dn2 तिष्ठ, T G3 4 विद्धि (for तद्धि) D2 प्रचक्षते (for ब्रवीमि ते) D8 तद्धि मां*****

7 G5 missing (cf v. 1 2) — [a]) K1 2 आत्मानं; Dn °र्थे (for °र्थं)

त्वं हि लुब्धतमो राजन्निकृतिज्ञश्च कौरव ।
सर्वातिशङ्की मानी च ततोऽस्मानतिशङ्कसे ॥ ८
अहं तु यत्नमास्थाय त्वदर्थे त्यक्तजीवितः ।
एष गच्छामि संग्रामं त्वत्कृते कुरुनन्दन ॥ ९
योत्स्येऽहं शत्रुभिः सार्धं जेष्यामि च वरान्वरान् ।
पाञ्चालैः सह योत्स्यामि सोमकैः केकयैस्तथा ।
पाण्डवेयैश्च संग्रामे त्वत्प्रियार्थमरिंदम ॥ १०
अद्य मद्बाणनिर्दग्धाः पाञ्चालाः सोमकास्तथा ।
सिंहेनेवार्दिता गावो विद्रविष्यन्ति सर्वतः ॥ ११

अद्य धर्मसुतो राजा दृष्ट्वा मम पराक्रमम् ।
अश्वत्थाममयं लोकं मंस्यते सह सोमकैः ॥ १२
आगमिष्यति निर्वेदं धर्मपुत्रो युधिष्ठिरः ।
दृष्ट्वा विनिहतान्संख्ये पाञ्चालान्सोमकैः सह ॥ १३
ये मा युद्धेऽभियोत्स्यन्ति तान्हनिष्यामि भारत ।
न हि ते वीर मुच्येरन्मद्बाहून्तरमागताः ॥ १४
एवमुक्त्वा महाबाहुः पुत्रं दुर्योधनं तव ।
अभ्यवर्तत युद्धाय द्रावयन्सर्वधन्विनः ।
चिकीर्षुस्तव पुत्राणां प्रियं प्राणभृतां वरः ॥ १५

C. 7 7161
B. 7 160 18
K. 7 161 17

---

8 G5 missing (cf v l 2) — a) Dc1 Dn1 लुब्धतरो (for °तमो) — b) Some MSS निष्कृतिज्ञश्, Cd निकृति° (as in text) B1 S (G5 missing) भारत (for कौरव) — c) K4 B (except B2) Dn D1 2 4–8 सर्वाभिशकी (for °तिशङ्की) Dc1 सर्वाभिमानी शकी च — d) Ś1 K1. 4 B D (except D3) अभि- (for अति) — After 8, Dc1 Dn2 D2 4. 5 7 8 ins

1157* मन्ये त्व कुत्सितो राजन्पापात्मा पापपूरुष ।
अन्यानपि स न क्षुद्र शङ्कसे पापभावित ।

[(L 1) D3 नान्यस् (for मन्ये) D4 5 -पौरुष (for -पूरुष) — (L 2) D2 न त, D4. 7 मत (for स न) D1 क्रुद्ध (for क्षुद्र) ]

9 G5 missing (cf v l 2) — a) D3 6 प्र- (for तु) K1. 2 आमाद्य (for आस्थाय) D2 अहं तु यत्र योत्स्यामि — b) S (G5 missing) त्वदर्थं (for °र्थे) — c) Ś1 K1–3 D1. 3. 6 संग्रामे (for °म) — d) D1. 5 त्वदर्थे (for त्वत्कृते) K1 2 4 B Dn2 D1 3 6 कुरुसत्तम, Dc1 Dn1 पुरुषर्षभ, D2 4. 5 7 8 पुरुषाधम (for कुरुनन्दन)

10 G5 missing (cf. v l. 2) — a) Dn2 D2 4 5 7 8 योत्स्यामि (for योत्स्येऽहं) — b) Dn2 D2 4 5–8 हनिष्यामि, D3 6 वधिष्यामि, G2 जयिष्यामि (for जेष्यामि च) B1 वारान् (sic), Dn2 S (G5 missing) परान् (for वरान्) Dn2 बहून्, D1 परान् (for वरान्) — c) K4 Dn2 पचालैः — d) Dc1 Dn2 D1–3 5–8 कैकयैस् (for के°) D1 योत्स्यामि सोमकैः सह, D5 कैकेयैः सोमकैः सह — D1 om. 10e–11d — e) G1 M पाण्डवैः सह संग्रामे — f) D7 8 अरिंदम

11 G5 missing (cf v l. 2) D1 om 11 (cf. v l. 10) — a) D3 बाणवि (for मद्बाण) K1 निर्दग्ध, D4 5 8 निर्भिन्नाश् (for निर्दग्धा) D7 अद्य मद्बाणाभिर्भिन्नाश् (sic) — b) K1 पाचाल, Bom. ed पचाला Dn2 D2 4 5 7 8 चेदिपाचालसोमका (D2 °कैकया) — c) Dn2 D5 सिंहेनैव, G4 सिंहैरेव (for सिंहेनेव) — d) K1 2. 4 B D (except Dn2, D1 om) G1 M1 2 सर्वश (for °त) T G3. 4 वित्रासिष्यति सर्वत

12 G5 missing (cf v l. 2) — a) D1 ततो (for अद्य) D4. 5 राजन् (for राजा) — c) D4. 5 7 8 विश्वं (for लोकं) — d) D2 स हि (for सह) T G2–4 मंस्यते स सुयोधन

13 G5 missing (cf. v l. 2) — c) D3 6 सर्वान्, G1. 4 M संख्ये (for सख्ये) — d) Bom ed पचालान् K4 Dn2 D2 4 5 7 8 S (G5 missing) transp सोमकैः and सह

14 G5 missing (cf. v l. 2) — a) K1. 2 मा (for मा) K (K5 missing) [ऽ]भियोक्ष्यति, Dn2 प्रयास्यति; D2 7 8 प्रयोत्स्यति, T G2–4 M3. 5 [ऽ]भियास्यति, M4 हियास्यति (for ऽभियोत्स्यन्ति) D4 5 ये मा प्रयोत्स्यति सदा — b) S (G5 missing) निहनिष्यामि तानह — c) D2 मे (for हि) B Dn D1. 2 4. 6 मोक्ष्यते, Dc1 वक्ष्यते (for मुच्येरन्) D7 8 न ते निवर्तयिष्यति — d) Ś1 K3 आश्रिता (for आगता) Dn2 D2 4 5 7 8 S (G5 missing) मद्बाहु( S [ G5 missing ] °ण )बलपीडिता (D4 °त)

15 G5 missing (cf v l. 2) Before 15, D7 8 M4 ins संजय उवाच — c) K1. 2 G2 अभ्यद्रवत युद्धाय — d) B5 त्रासयन् (for द्रावयन्) K4 -धन्विना; D2 -देहिन (for -धन्विन) — e) G1 M चिकीर्षंस् (for °र्षुस्) — f) D8 वर

मध्वर्थिन इवोद्दामा भ्रमराः पुष्पितं द्रुमम् ॥ २५
सोऽतिविद्धो भृशं क्रुद्धः पदाक्रान्त इवोरगः ।
मानी द्रौणिरसंभ्रान्तो बाणपाणिरभाषत ॥ २६
धृष्टद्युम्न स्थिरो भूत्वा मुहूर्तं प्रतिपालय ।
यावत्त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ २७
द्रौणिरेवमथाभाष्य पार्षतं परवीरहा ।
छादयामास बाणौघैः समन्ताल्लघुहस्तवत् ॥ २८
स छाद्यमानः समरे द्रौणिना युद्धदुर्मदः ।
द्रौणिं पाञ्चालतनयो वाग्भिरातर्जयत्तदा ॥ २९
न जानीषे प्रतिज्ञां मे विप्रोत्पत्तिं तथैव च ।
द्रोणं हत्वा किल मया हन्तव्यस्त्वं सुदुर्मते ।
ततस्त्वाहं न हन्म्यद्य द्रोणे जीवति संयुगे ॥ ३०
इमां तु रजनीं प्राप्तामप्रभातां सुदुर्मते ।
निहत्य पितरं तेऽद्य ततस्त्वामपि संयुगे ।
नेष्यामि मृत्युलोकायेत्येवं मे मनसि स्थितम् ॥ ३१
यस्ते पार्थेषु विद्वेषो या भक्तिः कौरवेषु च ।
तां दर्शय स्थिरो भूत्वा न मे जीवन्विमोक्ष्यसे ॥ ३२
यो हि ब्राह्मण्यमुत्सृज्य क्षत्रधर्मरतो द्विजः ।
स वध्यः सर्वलोकस्य यथा त्वं पुरुषाधम ॥ ३३
इत्युक्तः परुषं वाक्यं पार्षतेन द्विजोत्तमः ।

C 7 7152
B 7 160 9
K 7 161 33

सर्वतोपाणाभि (K1 °भाति, K5 °भिता), D1 2 °कायशिरसा — $^f$) D मतता (for भ्रमरा) D 3 4 S (except M, G missing) पुष्पित (for °तं) Ś1 K1 नग, M1 2 द्रुमान (for द्रुमम्)

26 G missing (cf v 1 2) — $^a$) D 1 3 सोपि (for सोऽति°) D1 दन्यसा (for भृशं क्रुद्ध) — $^b$) D1 पदाहत, D1 2 M3 पादाक्रान्त — $^c$) T G1 श्रय (for मानी) — $^d$) Dn D 4 7 3 शर (for बाण)

27 G missing (cf v 1 2) — $^a$) G1 M (except M1) स्थिरो G1 स्थितो (for स्थिरो) — $^b$) K1 प्रतिपाल्यतां D G परिपालय (for प्रति°) — $^c$) K1 Dn1 च K4 G1 M1 2 त्वा (for त्वां) D1 Cd निशितैर् (for निशितैर्) Dn2 D1 4 5 6 8 भ्दैर् (for बाणैः) — D om 27$^d$–28$^c$ — $^d$) Ś1 K4 प्रापयिष्ये (for °यामि)

28 G missing (cf v 1 2) D om 28$^{ab}$ (cf v 1 27) — $^a$) K2 समाभाष्य (sic), T G2-4 मया भाष्य, G1 M समा° (for अथा°) — $^b$) G1 पार्षत (for °तं)

29 G missing up to युद्ध (cf v 1 2) — $^a$) K1 2 B1 Dn D1-4 6 8 S (G missing) से (for स) Bom ed छाद्यमान (for छाद्य°) — $^c$) K2 G1 द्रौणि K4 B1 Dc1 पञ्चाल, D2 पाञ्चाल्य (for °ल) — $^d$) G partly damaged Ś1 K1 2 आतर्जयत्, Dc1 Dn1 अभ्यर्ज° (for आत°)

30 Before 30, G1 M ins धृष्टद्युम्न 30$^{ab}$ is damaged in G2 — $^b$) D1 2 त्वयस्तिम (for °स्तिं) — 30$^{cd}$ is damaged in G2 B3 reads 30$^c$–31$^d$ on marg — $^c$) Ś1 K1 2 अहम् (for त्व) Dc1 Dn1 त्वद्य, D1 2 7 8 त्वा तु (for त्वाह) D3-6 T G-4 निहन्मि (for न हन्मि) — $^f$) T G1 3 द्रोणे (for द्रोणे) T G3 निहते G2 4 M1 2 4 निहन्य, M3 निहते (for जीवति) Dn1 समरे (for संयुगे)

31 K4 D2 om (hapl) 31$^{a3-d}$, B3 reads the same on marg — $^a$) D1 2 7 8 इदानीं (for इमां तु) — $^b$) Dn D1 4 - 7 8 सुप्रभाता, G1 M1 2 प्रभाते त, M3 6 प्रभातायां, M4 अप्रभाते (sic) (for अप्रभातां) — $^c$) S तुभ्य (for तेऽद्य) — $^e$) B1 निहत्य (for नेष्यामि) Ś1 K (K4 missing) D1 2 6 पर, Dc1 मृत्योर्, Dn2 D2 4 5 6 8 प्रेत (for मृत्यु) — $^f$) K4 [इ]त्येव, B1-4 Dc1 Dn1 [इ]त्यैव, B Dn2 D 7 8 सान्, Dn1 D2 शेवन D1 तन्ने (for [इ]त्येवं) D1 हि, D3 नो (for मे)

32 $^a$) B1 Dn2 यत् (for यस्) Ś1 पार्थस्य (for पार्थेषु) — $^b$) Ś1 K1-3 D1 भक्ता, D3 6 भक्तिर्या (by transp) — $^c$) K1 2 D1 तद् (for ता) D6 स्थितो, M3 स्थिरौ (for स्थिरो) D2 दर्शयस्व स्थिरो भूत्वा — $^d$) A few MSS विमोक्षसे, Dn2 D1 5 7 8 गमिष्यसि, D3 विमोक्षसि

33 $^b$) Ś1 K1-3 D1 धर्मरतिर् (for °रतो) D1 द्विज — $^c$) Dn2 D 4 6 7 8 क्षत्र (for सर्व) Ś1 K1-3 D1 लोकेषु (for लोकस्य) — $^d$) K4 B2 G2 M3 6 पुरुषाधम

34 $^a$) Ś1 K2 M3 इत्युक्त्वा (for °क्त) K2 D1 पुरुष (for प°) — $^b$) Ś1 K3 4 D1 3 6 नृपोत्तम, K1 2 नरोत्तम, D1 5 7 8 मुनिपुङ्गव, D2 युधिष्ठिर (for

C 7 7182
B 7 160 40
K 7 161 35

क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३४
निर्दहन्निव चक्षुर्भ्यां पार्षतं सोऽभ्यवैक्षत ।
छादयामास च शरैर्निःश्वसन्पन्नगो यथा ॥ ३५
स छाद्यमानः समरे द्रौणिना राजसत्तम ।
सर्वपाञ्चालसेनाभिः संवृतो रथसत्तमः ॥ ३६
नाकम्पत महाबाहुः स्वधैर्यं समुपाश्रितः ।
सायकांश्चैव विविधानश्वत्थाम्नि मुमोच ह ॥ ३७
तौ पुनः संन्यवर्तेतां प्राणद्यूतपरे रणे ।
निवारयन्तौ बाणौघैः परस्परममर्षिणौ ।
उत्सृजन्तौ महेष्वासौ शरवृष्टीः समन्ततः ॥ ३८
द्रौणिपार्षतयोर्युद्धं घोररूपं भयानकम् ।
दृष्ट्वा संपूजयामासुः सिद्धचारणवातिकाः ॥ ३९
शरौघैः पूरयन्तौ तावाकाशं प्रदिशस्तथा ।
अलक्ष्यौ समयुध्येतां महत्कृत्वा शरैस्तमः ॥ ४०
नृत्यमानाविव रणे मण्डलीकृतकार्मुकौ ।
परस्परवधे यत्तौ परस्परजयैषिणौ ॥ ४१
अयुध्येतां महाबाहू चित्रं लघु च सुष्ठु च ।
संपूज्यमानौ समरे योधमुख्यैः सहस्रशः ॥ ४२
तौ प्रयुद्धौ रणे दृष्ट्वा वने वन्यौ गजाविव ।
उभयोः सेनयोर्हर्षस्तुमुलः समपद्यत ॥ ४३

---

द्विजोत्तम ) — $^{d}$ ) Dn2 om इति

35 $^{b}$ ) M3 पार्षत समवैक्षत — $^{c}$ ) Dn2 D2-6 समरे (for च शरैर्) — D3 6 om (hapl ) 35$^{d}$–36$^{a}$ — $^{d}$ ) B Dn D1 8 G3 4 निश्वसन Dn2 D2 4 7 8 T G2-4 M3. 5 उरगो (for पन्नगो )

36 D3 6 om 36$^{a}$ (cf. v 1 35) — $^{a}$ ) K1 B3 S (except G1. 5 M2 ) स (for स) Dn2 D2 4 5 7 8 वाध्यमान , M2 शाय° (for छाद्य° ) — $^{b}$ ) M4 नर (for राज ) Dn1 T G3 4 सत्तम Dn2 D2-6 द्रौणिना ( D3 6 °स्तं ) पार्षत ( D2 °तै ) शरैः, D7 8 °ना पार्षत-स्तदा — $^{d}$ ) K3 समृत्तो (for °तो ) D1 -सत्तम B2 सवृत स रथोत्तम , S संवृतो गिरिराडिव

37 $^{b}$ ) K4 B D ( except D1 ) T G2-5 M3 5 स्ववीर्यं (for स्वधैर्यं ) D2 4 7 8 समुपस्थित (for °पाश्रित ) — $^{c}$ ) B2 5 शायकान् B4 चापि (for चैव) Ś1 K2 निशितान (for विविधान् )

38 $^{a}$ ) G5 damaged T G3 4 M3 5 न (for तौ ) K2 सन्यवर्तेता (sic), D2 M4 सनि°, D1 स स व° (for सन्यव° ) — $^{b}$ ) K4 B ( except B5 ) Dn1 D6 G1 M1 2 4 -पणे रणे, T G2-4 M3. 5 (inf lin as in text) -परायणौ ( M5 °ण ) (for परे रणे) Dn2 D2 4 5 7 8 प्राणद्यूतामिदेवि( Dn2 देव ; D1 °येदि )नौ, D3 प्राणपातयले यले — $^{c}$ ) K4 निवार्ययंतौ (sic), B Dc1 Dn1 निपीड° (for निवार° ) Dn2 D2 4 5 7 8 बाणौघान् (for °घै ) — $^{d}$ ) B5 Dn2 D3 अमर्षणौ, G1 M1-3 5 (sup lin as in text) अमर्षितौ (for °र्षिणौ) Ś1 K1-3 परस्परवधैषिणौ — $^{e}$ ) S विसृजतौ (for उत्सृ° ) — $^{f}$ ) D. 2 6 S ( except G1 M1. 3 ) शरवृष्टिं (for °वृष्टी )

39 39$^{ab}$ is partly damaged in G5 — $^{b}$ ) K2 Dn2 D2 4 5 7 8 भयावह (for °नकम् ) — $^{d}$ ) K1 -वातिकाः (sic), K4 वर्त्तिका (sic), B2 2 D ( except Dn2 D5 ) Cd वार्तिका , S -चारिका , Cdp -वातिका ( as in text )

40 $^{a}$ ) Ś1 K1-3 D1 शरैस्त( Ś1 K2 °रै स )पूरयंतौ ताव्; K4 शरैरापूरयेता ताव् — $^{b}$ ) K1. 2. 4 D1 7 8 च (for प्र ) — $^{c}$ ) D1 अलक्ष्यौ (for अलक्ष्यौ ) Ś1 (sup lin. as in text ) D1 7 8 समयुध्येता, B1 सह युध्येता (for समयु° ) — $^{d}$ ) G5 damaged Ś1 K1. 2 4 Dn1 D1 तत (for तम ) S ( G5 damaged ) शरै कृत्वा महत्तया

41 41$^{ab}$ is partly damaged in G5 — $^{c}$ ) Dn2 D2 4 5 7 8 युक्तौ (for यत्तौ) — $^{d}$ ) B5 Dc1 Dn1 S वधैषिणौ (for जयैषिणौ ) Dn2 D2 4 5. 7 8 सर्वभूतभयकरौ

42 $^{b}$ ) D2 6 transp लघु and च — $^{d}$ ) G5 damaged G1 M योधमुख्यै K1. 2 4 D1 समंतत (for सहस्रश )

43 $^{a}$ ) G5 damaged B1 ( marg as in text ) प्रयुद्धौ, B2 4 5 D5 प्रयुक्तौ, D2 प्रवृद्धौ (for प्रयुद्धौ) S ( G5 damaged ) तथा (for रणे ) B1 शूरौ (for दृष्ट्वा) — $^{b}$ ) Dn2 घन (for वन्यौ ) Ś1 K1-3 D1. 2. 6 तदा वनगजाविव — $^{c}$ ) B2 सैन्ययोर्, D2 समयोर् (for सेनयोर्) T G2-5 घोषस् (for हर्षस्) — $^{d}$ ) D1 7 8 तुमल

44 $^{a}$ ) S सिंहनादास्तथैवासन् — $^{b}$ ) K2 3 B2-5 Dc1 D8 G1 5 M2 शंखाद्य Dn2 D2 4 5. 7 8 सैनिका

सिंहनादरवाश्चासन्दध्मुः शङ्खांश्च मारिष ।
वादित्राण्यभ्यवाद्यन्त शतशोऽथ सहस्रशः ॥ ४४
तस्मिंस्तु तुमुले युद्धे भीरूणां भयवर्धने ।
मुहूर्तमिव तद्युद्धं समरूपं तदाभवत् ॥ ४५
ततो द्रौणिर्महाराज पार्षतस्य महात्मनः ।
ध्वजं धनुस्तथा छत्रमुभौ च पार्ष्णिसारथी ।
सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे ॥ ४६
पाञ्चालांश्चैव तान्सर्वान्बाणैः संनतपर्वभिः ।
व्यद्रावयदमेयात्मा शतशोऽथ सहस्रशः ॥ ४७
ततः प्रविव्यथे सेना पाण्डवी भरतर्षभ ।
दृष्ट्वा द्रौणेर्महत्कर्म वासवस्येव संयुगे ॥ ४८
शतेन च शतं हत्वा पाञ्चालानां महारथः ।
त्रिभिश्च निशितैर्बाणैर्हत्वा त्रीन्वै महारथान् ॥ ४९
द्रौणिर्द्रुपदपुत्रस्य फल्गुनस्य च पश्यतः ।
नाशयामास पाञ्चालान्भूयिष्ठं ये व्यवस्थिताः ॥ ५०
ते वध्यमानाः पाञ्चालाः समरे सह सृञ्जयैः ।
अगच्छन्द्रौणिमुत्सृज्य विप्रकीर्णरथध्वजाः ॥ ५१
स जित्वा समरे शत्रून्द्रोणपुत्रो महारथः ।
ननाद सुमहानादं तपान्ते जलदो यथा ॥ ५२
स निहत्य बहूञ्शूरानश्वत्थामा व्यरोचत ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ ५३
संपूज्यमानो युधि कौरवेयै-
र्विजित्य संख्येऽरिगणान्सहस्रशः ।
व्यरोचत द्रोणसुतः प्रतापवा-
न्यथा सुरेन्द्रोऽरिगणान्निहत्य ॥ ५४

C 7 7203
B. 7 160 60
K 7 161 58

इति श्रीमहाभारते द्रोणपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

(for मारिष) — After $44^{ab}$, Ś1 reads $45^{cd}$ — $^{c}$) B वदित्राणि (sic) (for वादि°) Ś1 अभ्यनदत, D4 5 अभिवाद्यत (for अभ्य°) — $44^{d}$ is damaged in G5

45 B1 om (hapl) 45–47 — $^{a}$) B3 Dc1 Dn1 D2 G1 M तु- (for तु) Dn1 D4 5 7 8 तुमले — Ś1 reads $45^{cd}$ after $44^{ab}$ — $^{c}$) K3 B3 Dn1 D1 अपि, K1 एव (for इव) G2 अभवद् (for इव तद्) — $^{d}$) Dn2 D2 4 5 7 8 इव (for तदा) T G2–5 घोरयोर्भरतर्षभ, G1 M घोररूप बभूव ह

46 B1 om 46 (cf v l 45) — $^{b}$) Ś1 K3 सम तत (for महात्मन) — $^{c}$) B3 ध्वज रथ, Dn2 D4 5 7 8 S धनुर्ध्वज (by transp) — $^{d}$) Dn2 D4 5 7 8 तयो(Dn2 °तो)भौ, D5 उभौ वा (for उभौ च) K3 M4 प्राष्टिसारथी, G1 4 M1–3 5 प्राष्टि°, G3 प्लाष्टि°, G5 lacuna (for पार्ष्णि°) — $^{f}$) D7 8 विहत्य (D8 °न्य) (for निहत्य) T G2–4 अभ्यहनद्, G1, 5 M1–3, 5 °नदद् (for °द्रवद्) D4 वाहान्याभ्यद्रवद्रणे (sic)

47 B1 om 47 (cf. v l 45) — $^{a}$) Ś1 K3 D4 7 पचालाम् — $^{b}$) Ś1 K3 Dn2 D4 7 8 शरै (for बाणै) — $^{c}$) D5 विद्रावयद्, S प्रा(G5 प्र)द्रा (for व्यद्रा°)

48 $^{a}$) B Dc1 Dn1 D1 तु (for प्र) — $^{b}$) Ś1 K (K5 missing) D1 पाण्डवी तत्र भारत

49 $^{a}$) D4 त्रि (for च) M3 5 शतान — $^{b}$) K3 B2 Dc1 पचालाना D3 6 S महारथान् (for रथ) — K3 T G1 3–5 om (hapl) $49^{cd}$ — $^{d}$) B6 वै त्रीन (by transp), D3 6 त्रींश्च Dn2 D4 5 7 8 नरर्षभान् (for महारथान्)

50 $^{b}$) K1 2 D1 पाचालस्य, K4 B Dc1 Dn D2–8 G4 फाल्गुनस्य — $^{c}$) Bom ed पचालान् — $^{d}$) D3 भूयिष्ठा ये, G4 ये भूयिष्ठ (by transp)

51 $^{ab}$) Ś1 K1–3 D1 3 6 transp पाञ्चाला and समरे Bom. ed पचाला Ś1 K (K5 missing) सृजया (for सृञ्जयै) — $^{c}$) D5 आगच्छन् — $^{d}$) G1 M (except M4) द्विपा (for ध्वजा)

52 $^{c}$) B3 स (for सु) D3 4 6 सुमहन्नादं

53 $^{a}$) D3 4 7 8 G4 स (for स) G1 महान् (for बहून्) B1 D4 5 7 8 शत्रून् (for शूरान्) B2 निहत्य समरे शत्रून् — $^{d}$) Dn2 D4 7 8 प्रदहन्निव पावक

54 $^{a}$) B2 Dc1 Dn D- G5 स (for स) — $^{b}$) K4 Dn2 D2 4 5 7 8 G1 4 M निर्जित्य (for विजित्य) G1 M1, 2 4 संबे, G4 M3 5 सखे (for संख्ये) — $^{c}$) B5

# १३६

C 7 7204
B. 7 161 1
K 7 162. 1

संजय उवाच ।

ततो युधिष्ठिरश्चैव भीमसेनश्च पाण्डवः ।
द्रोणपुत्रं महाराज समन्तात्पर्यवारयन् ॥ १
ततो दुर्योधनो राजा भारद्वाजेन संवृतः ।
अभ्ययात्पाण्डवान्संख्ये ततो युद्धमवर्तत ।
घोररूपं महाराज भीरूणां भयवर्धनम् ॥ २
अम्बष्ठान्मालवान्वङ्गाञ्शिबींस्त्रैगर्तकानपि ।
प्राहिणोन्मृत्युलोकाय गणान्क्रुद्धो युधिष्ठिरः ॥ ३
अभीषाहाञ्शूरसेनान्क्षत्रियान्युद्धदुर्मदान् ।
निकृत्य पृथिवीं चक्रे भीमः शोणितकर्दमाम् ॥ ४
यौधेयारट्टराजन्यान्मद्रकांश्च गणान्युधि ।
प्राहिणोन्मृत्युलोकाय किरीटी निशितैः शरैः ॥ ५
प्रगाढमञ्जोगतिभिर्नाराचैरभिपीडिताः ।
निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्वताः ॥ ६
निकृत्तैर्हस्तिहस्तैश्च लुठमानैस्ततस्ततः ।
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः ॥ ७

---

om प्रतापवा —[d]) B1 3 Dc1 Dn1 [अ]मरेंद्रो (for सुरेन्द्रो) K4 B1 2 Dc1 Dn1 D2 G1 M निहत्य च (B1 3 Dc1 Dn1 ह), Dn2 D4 5 7 8 निपात्य च (for निहत्य)

Colophon Ś2 K5 missing — *Sub parvan* Editions घटोत्कचवध — *Day of Droṇa's Generalship* K4 चतुर्थदिवसे — *Adhy name* K1 2 4 B Dc1 Dn D1-5 7 8 G1 M रात्रियुद्धं, D6 रात्रियुद्धे अश्वत्थामविजय, Bom ed रात्रियुद्धे अश्वत्थामपराक्रम — *Adhy no* (figures, words or both) Dn1 160, D2 159, D8 55, T G M1-3 5 156, M4 5 (inf lin) 155 — *Śloka no* Dc1 60, Dn1 59

## 136

☞ This adhy is missing in Ś2 K5 (cf. v l 7 132 20, 125 14)

1 [a]) Dn2 D2, 4 5 7 8 T G3 राजा (for चैव). —[b]) T G3 पाडवा —[d]) Ś1 K1 2 B2-4 Dc1 D3 7 M8 पर्यवारयस् (for °वारयन्)

2 2[a]-3[b] is damaged in G5 —[a]) G1 2 4 M1 2. 4. 5 तथा (for ततो) —[b]) Ś1 K (K5 missing) D1 संयुत (for संवृत) —[c]) B5 D2 4 5 7 8 G1 M1. 2 4 पाडवं (for °वान्) K4 सर्वे, B4 D8 6 युद्धे, Dn2 G1 M1 2 4 सघे, M3 5 संखे (for संख्ये) —[e]) Dn2 महाभीम (for °राज)

3 3[ab] is damaged in G5 —[a]) Dn2 om from न्मालवा up to निकृत्य (in 4[c]) G1 M माळवान् T G3, 4 वकान् (for वङ्गान्). —[b]) K2 D1 शिनींस्, D4 8 शिबिं (for शिबींश्च) —[c]) Ś1 K3 पर (for मृत्यु) —[d]) D2 गणा (for गणान्) D2 4 7 8 क्रोधाद् (for क्रुद्धो) Dn1 D2 4 5 7 8 S वृकोदर (for युधिष्ठिर)

4 Dn2 om up to निकृत्य (cf v l 3) G5 partly damaged —[a]) D- अभिपाहाञ्, G1 4 M अभीपहाञ् (for °षाहाञ्) D- शूरसेनान (for शूर°) —[b]) Dc1 -दुर्मद (for -दुर्मदान्) D4 गणान्युद्धविशारदान् —[c]) B4 T G निहत्य, D4 निवृत्य (for निकृत्य)

5 [a]) Ś1 K1-3 G- योधेयारट्ट, K4 योधायारद (for यौधेयारट्ट) Dc1 D1 यौ(D1 यो)धेयारट्टजाश्राजन, Dn1 D7 8 यो(Dn1 यौ)धेयान्दरदाश्राजन्, Dn2 D2 यौ(D2 यो)धेयानद्रिजाश्राजन्, D3 योधेयान्प्राग्धि राजन्यान्, D4 योधेयान्मद्रकान् * * *, D5 योधेयायष्टकाश्राजन्, D6 योधेयानद्रिराजन्यान् —[b]) Ś1 K (K5 missing) D1 मद्रकान्मागधानपि, B Dc1 Dn D2-6 °कान्मालवानपि (B1 3 5 Dc1 Dn1 °न्युधि); D7 8 °कान्केरलानपि —[c]) Ś1 K3 पर (for मृत्यु-) —[d]) Dn2 D2 5 7 8 किरीटी श्वे(Dn2 श्वे)तवाहन

6 [a]) B4 आंजोगतिभिर्, D8 यत्न° (for अञ्जो°) D6 प्रगाढशीघ्रगतिभिर्, T G3, 4 प्रगाढमंतगं(G4 °मत्तग)-तिभिर् —[b]) K1 2 D1 अति (for अभि) K4 B Dc1 Dn D2 4 5 7 8 G1 M -ताडिता (for पीडिता) —[d]) Dn2 D2 4 5 7 8 सशृङ्गा (for द्विशृङ्गा)

7 [a]) K2 निकृत्त (for °त्तैर्) —[b]) K1 लुठ्यमानैस्, K4 D1 3 6 लुठ°; B1-3 5 Dc1 लल°, B4 Dn D2 5 7 8 चेष्ट°, D4 वेष्ट°, G1 M लूय° (for लुठ°) K4 B Dc1 Dn1 D2 इतस्तत (for तत°) —[d]) Dn2 विसर्पिभिर् (for °पद्भिर्)

क्षिप्तैः कनकचित्रैश्च नृपच्छत्रैः क्षितिर्बभौ ।
द्यौरिवादित्यचन्द्राद्यैर्ग्रहैः कीर्णा युगक्षये ॥ ८
हत प्रहरताभीता विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दः शोणाश्वस्य रथं प्रति ॥ ९
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण संयुगे ।
व्यधमत्तान्यथा वायुर्मेघानिव दुरत्ययः ॥ १०
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥ ११
ततः किरीटी भीमश्च सहसा संन्यवर्तताम् ।
महता रथवंशेन परिगृह्य बलं तव ॥ १२
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं तु वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ १३
तौ तदा सृञ्जयाश्चैव पाञ्चालाश्च महारथाः ।
अन्वगच्छन्महाराज मत्स्याश्च सह सोमकैः ॥ १४
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
महत्या सेनया सार्धं जग्मुर्द्रोणरथं प्रति ॥ १५
ततः सा भारती सेना वध्यमाना किरीटिना ।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ १६
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च ।
न शक्यन्ते महाराज योधा वारयितुं तदा ॥ १७
सा पाण्डुपुत्रस्य शरैर्दार्यमाणा महाचमूः ।
तमसा संवृते लोके व्यद्रवत्सर्वतोमुखी ॥ १८

C 7 7222
B 7. 161 19
K 7 162. 18

8 $^a$) D6 क्षिप्तैश्, S (except G1) चक्रैश् (for चित्रैश्) —$^b$) Dn2 D2 4 5 7 8 S च भूर् (for क्षितिर्) —$^c$) D6 चद्रार्द्यैर् (sic) (for चन्द्रा°) D4 द्यौरिव चद्रादित्याद्यैर् —$^d$) Dn1 इवाबभौ (for युगक्षये)

9 S om. 9$^{ab}$ —$^a$) Dn1 घ्नत (for हत) Ś1 K3 प्रहरताभीत, D4 6 7 8 °तावी(D7 8 °ता वी)रा (sic) (for °ताभीता) D2 हत प्रहारं वे वीरा —$^b$) D3 वध्येत (for विध्यत) Dn2 विध्यत व्यवकृत्यत, D4 5 8 वध्यता विनि कृतत —$^c$) K1 4 B1 2 5 Dc1 Dn1 D1 8 6 सुमहान्, D4 6 7 8 तुमल (for तुमुल) B3 प्रम्यासस्तुमहान्शब्द, S इत्यासीत्सक्षयस्तत्र

10 B3 reads 10$^a$–11$^b$ on marg —$^a$) Ś1 ततस् (for द्रोणस्) —$^c$) B Dc1 Dn महा- (for यथा) —$^d$) Ś1 K1 2 D1 8 6 दिवि (for इव)

11 B3 reads 11$^{ab}$ on marg —$^b$) D1 पचाला D3 6 व्यद्रवन्, D7 8 प्रद्र° (for प्राद्र°) — Dc1 Dn1 om 11$^{cd}$ —$^c$) D4 पश्यता भीमसेनेन —$^d$) D2 पार्थतस्य (for पार्थस्य च) D4 महात्मना

12 $^a$) K2 तत्र (for तत) Dn2 किरीटी भीमसेनश्च, D8 तत किरीटिमाश्वास्य —$^c$) B1 (marg as in text) शरवर्षेन (sic), D8 शरवशेन (for रथ°) —$^d$) K4 Dn2 महद्, G6 damaged (for तव)

13 13$^a$ is damaged in G5 —$^b$) D4 उदरं (for उत्तर) B (except B5) D (except Dn1 D1) च (for तु) —$^d$) Ś1 K1–3 अभ्यवर्षत, K4 °वर्तित ; D1 °वर्तत, G4 अभिवर्षतां, M1 2 अस्य° (for अभ्य°)

14 $^a$) Ś1 K3 Dn D1 2 4 5 7 8 G4 तथा, G3 सदा (for तदा) —$^b$) Bom ed पचालाश् Ś1 K3 सहस्रश°, B Dc1 Dn1 D1 8 6 महौजस (for महारथा) —$^c$) K2 अभ्यगच्छन् (for अन्व ) —$^d$) G5 damaged. K3 Dn D1 2 4 5 7 8 मत्स्यैश्, K4 मत्स्यश् (for मत्स्याश्) Ś1 K (K5 missing) D1 8 6 के(K3 4 D1 कै)कयै, T G3 4 -सोमका (for सोमकै°)

15 $^a$) D1 तत्र वै (for तथैव) D4 om तव —$^b$) K4 प्रहारिण —$^c$) K4 महता (for त्या) Dn D1 2 4 5 7 8 राजन्, M1 2 पार्थं (for सार्धं)

16 $^a$) G5 om सेना —$^b$) K3 4 B2 5 S हन्यमाना, D4 व्यध (for वध्य) — 16$^{cd}$ is damaged in G5 —$^d$) D5 प्रभज्यत (for व्यदीर्यत)

17 $^a$) Ś1 K1 2 D1 धार्यमाणास् (for वार्य ) B Dc1 Dn1 G5 तु (for ते) —$^c$) Ś1 K3 न शक्यास्तु, K1. 2 न शक्य(K2 °क्या)स्ते, K4 B1 Dn2 नाशक्यत; B5 D3 नाशक्य ते, D1 नाशक्यास्ते, M3 अशक्य ते, M4 न शक्तास्ते (for °क्यन्ते) —$^d$) G1 M योधा धारयितु सदा

18 G5 partly damaged —$^b$) K3 4 B Dn1 D1 6 M3–5 दीर्यमाणा; Dn2 D2 4 5 7 8 वध्यमाना, D3 वार्यमाणा (for दार्य ) D1 महात्मना, S चमूस्त(G1 M1. 2 °मू त)त्र (for महाचमू°) —$^d$) D3 6 8 सर्वतोमुखं, D4 सवृतोमुखी (for सर्वतो°)

19 $^b$) D3–8 महारथा (for नराधिपा) —$^c$) K4

C 7 7222
B 7 161 19
K 7 162 19

उत्सृज्य शतशो वाहांस्तत्र केचिन्नराधिपाः । प्राद्रवन्त महाराज भयाविष्टाः समन्ततः ॥ १९

इति श्रीमहाभारते द्रोणपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

# १३७

संजय उवाच ।
सोमदत्तं तु संप्रेक्ष्य विधुन्वानं महद्धनुः ।
सात्यकिः प्राह यन्तारं सोमदत्ताय मा वह ॥ १
न ह्यहत्वा रणे शत्रुं बाह्लीकं कौरवाधमम् ।
निवर्तिष्ये रणात्सूत सत्यमेतद्वचो मम ॥ २
ततः संप्रेषयद्यन्ता सैन्धवांस्तान्महाजवान् ।
तुरगमाञ्शङ्खवर्णान्सर्वशब्दातिगान्रणे ॥ ३
तेऽवहन्युयुधानं तु मनोमारुतरंहसः ।
यथेन्द्रं हरयो राजन्पुरा दैत्यवधोद्यतम् ॥ ४
तमापतन्तं संप्रेक्ष्य सात्वतं रभसं रणे ।
सोमदत्तो महाबाहुरसंभ्रान्तोऽभ्यवर्तत ॥ ५
विमुञ्चञ्शरवर्षाणि पर्जन्य इव वृष्टिमान् ।
छादयामास शैनेयं जलदो भास्करं यथा ॥ ६
असंभ्रान्तश्च समरे सात्यकिः कुरुपुंगवम् ।
छादयामास बाणौघैः समन्ताद्भरतर्षभ ॥ ७
सोमदत्तस्तु तं पष्ट्या विव्याधोरसि माधवम् ।

D1 प्रावर्त(D1 °र्तं)त, Dn2 D2 4 5 7 8 व्यद्रवत (for प्राद्रवन्त) —$^{d}$) K1 D8 भयाविष्ट, D8 भयोद्विग्ना (for भयाविष्टा)

Colophon om in Ś1 K1–3 Ś2 K5 missing —*Sub-parvan* Editions घटोत्कचवध —*Day of Drona's Generalship* K4 चतुर्थदिवस —*Adhy name* K4 B D (except D3) G1 2 M1-3 5 रात्रियुद्धं, Bom ed रात्रियुद्धे सङ्कुलयुद्ध —*Adhy no* (figures, words or both) Dn1 161, D2 160, D8 56, T G M1–3 5 157, M4 5 (*sup lin*) 156 —*Śloka no* Dn1 18, D2 17

## 137

☞ This adhy is missing in Ś2 K5 (cf v l 7 132 20, 125 14)

1 $^{a}$) Dn2 D2 4 5 सोमदत्ताय सक्रुद्धो —$^{b}$) Dn2 D2 4 5 7 8 विधुन्वानो, S विधून्वान (for विधु°) D2 5 महा (for महद्) —$^{d}$) D6 G3 मा (for मा) D3. 6 नय (for वह)

2 $^{b}$) Ś1 K1–3 B5 D3 6 वाह्लिक, D7 वाह्लीकिं (for °कं) D5 सोमदत्त महाबल —$^{c}$) D4 M1 2 निवर्तयिष्ये (hypermetric) (for निवर्तिष्ये) B3 Dn D2 4 5 7 8 रणे (for रणात्) —$^{d}$) D5 S ब्रवीमि ते (for वचो मम)

3 $^{a}$) K1 2 4 D1 प्राचोदयद्; B1 4 Dc1 सप्रैषयद्, Dn2 D2 त प्रे, D4 5 तान्प्रे°, D7 8 स प्रे° (for सप्रे°) —$^{b}$) B Dc1 Dn1 D3 6 S मनोजवान् (for महाजवान्)

4 $^{a}$) D2 तमूहुर् (for तेऽवहन्) B1 3 युध्यमान (for युयुधान) —$^{c}$) K1 D2 4–8 यथेंद्र- (for यथेन्द्रं) —$^{d}$) Dn1 पर, Dn2 D2 4 5 7 8 शक्र (for पुरा) K3 D1 -वधोद्धतं (for °द्यतम्)

5 $^{b}$) M4 सात्वत युद्धदुर्मद —$^{c}$) Dn2 D2 3 5 7 8 महाराज (for °बाहुर्) —$^{d}$) Dn2 ह्यसभ्रांतो; D2 4 7 न स (for ऽसं°) Ś1 K2 3 Dn D2 4 G2 न्य(Ś2 K2 व्य)वर्तत, D5 [ऽ]भ्यभाषत (for ऽभ्यवर्तत)

6 $^{a}$) K1 2 व्यमुचन् (for वि°) —B2 reads $6^{c}$–$7^{b}$ on marg —$^{d}$) K2 भास्करो (for °रं) Dn2 D2 5 7 8 भास्कर जलदो यथा, D4 भास्कर*****

7 B2 reads $7^{ab}$ on marg —$^{c}$) S बाणैः संछादयामास

8 K4 om $8^{a}$–$9^{b}$ —$^{a}$) G5 damaged D4 7 8 पश्चाद् (for पष्ट्या) —K1 om. $8^{cd}$ —$^{d}$) D1 5 7 8 सितैः (for शितैः) Ś1 K3 विव्याध विशिखैः शितैः, D3 6 ऽविध्यत्सायकोत्तमैः —For $8^{cd}$, D1 subst.

1158* सात्यकिं प्रतिविव्याध सोमदत्त शितैः शरैः ।

सात्यकिश्चापि तं राजन्नविध्यत्सायकैः शितैः ॥ ८
तावन्योन्यं शरैः कृत्वा व्यराजेतां नरर्षभौ ।
सुपुष्पौ पुष्पसमये पुष्पिताविव किंशुकौ ॥ ९
रुधिरोक्षितसर्वाङ्गौ कुरुवृष्णियशस्करौ ।
परस्परमवेक्षेतां दहन्ताविव लोचनैः ॥ १०
रथमण्डलमार्गेषु चरन्तावरिमर्दनौ ।
घोररूपौ हि तावास्तां वृष्टिमन्ताविवाम्बुदौ ॥ ११
शरसंभिन्नगात्रौ तौ सर्वतः शकलीकृतौ ।
श्वाविधाविव राजेन्द्र व्यदृश्येतां शरक्षतौ ॥ १२
सुवर्णपुङ्खैरिषुभिराचितौ तौ व्यरोचताम् ।
खद्योतैरावृतौ राजन्प्रावृषीव वनस्पती ॥ १३
संप्रदीपितसर्वाङ्गौ सायकैस्तौ महारथौ ।
अदृश्येतां रणे क्रुद्धावुल्काभिरिव कुञ्जरौ ॥ १४
ततो युधि महाराज सोमदत्तो महारथः ।
अर्धचन्द्रेण चिच्छेद माधवस्य महद्धनुः ॥ १५
अथैनं पञ्चविंशत्या सायकानां समार्पयत् ।
त्वरमाणस्त्वराकाले पुनश्च दशभिः शरैः ॥ १६
अथान्यद्धनुरादाय सात्यकिर्वेगवत्तरम् ।
पञ्चभिः सायकैस्तूर्णं सोमदत्तमविध्यत ॥ १७
ततोऽपरेण भल्लेन ध्वजं चिच्छेद काञ्चनम् ।
बाह्लीकस्य रणे राजन्सात्यकिः प्रहसन्निव ॥ १८
सोमदत्तस्त्वसंभ्रान्तो दृष्ट्वा केतुं निपातितम् ।

C 7 7242
B 7 162. 19
K 7 163 19

9 K4 om 9ab (cf v 1 8) — a) The portion from न्योन्य up to the end of the parvan (adhy 173) is lost in G on missing folios D2 4 T G1-4 अन्योन्य (for न्यं) K1 B1-3 Dc1 D3 S शरोत्कृत्तौ, B1 शरान्कृत्तौ, D1 शरैर्कृत्तौ (for शरैः कृत्वा) — b) D3 व्यरोचेतां, D1 विराजेतां, T G2-4 चकाशाते, G1 M चकाशेतां (for व्यराजेतां) Dc1 नरोत्तमौ (for नरर्षभौ) Dn2 D2 4 6 7 8 व्यरोचेतां परस्पर — c) Ś1 K1-3 D1 सु(Ś1 स्व, D1 स)पुष्पे, Dn2 D1-8 स(D3 स)पुष्पौ (for सु°)

10 G5 missing (cf v 1 9) — a) K1 3 4 D1 सायकाचितसर्वांगौ — B3 reads 10b-14a on marg — c) Ś1 K1-3 B1. 2 D3 अवेक्षेतां (for अवे°)

11 G5 missing (cf v 1 9) B3 reads 12 on marg — a) Ś1 K3 मार्गेण, Dc1 गर्भेषु (for -मार्गेषु) — b) Ś1 K3 S (G5 missing) विचरतावरिंदमौ — c) T G2-4 घोररूपध(G1 °त)रावास्तां, G1 M °रूपनिभावास्तां — d) A few MSS वृष्टिमन्तावि

12 G5 missing (cf v 1 9) B3 reads 12 on marg — a) Dn1 गात्रौर्मा, Bom ed गात्रा तु (for -गात्रौ तौ) — c) K4 श्वाविदाविव, Dn1 G2 द्वाविव, Dn2 °श्वाविव, T G1 2 4 M डाविव (for धाविव) Cd cites श्वाविधौ D1 8 श्वाविधा किल राजेंद्र (sic) — d) K3 D1 शरक्षितौ, T G1 2 4 M शराचितौ, G2 रणाजिरे (for शरक्षतौ) K4 B Dc1 Dn D3 4-8 ददृशतां शरविक्ष(D1-8 °क्षि)तौ

13 G5 missing (cf v 1 9) Dc1 om 13, B3 reads it on marg — a) D1 7 स्वर्ण (submetric) (for सुवर्ण) D3 स्वर्णपुंखैश्च इषुभिर् — b) D6 आचितौ, S (G5 missing) विक्षतौ (for आचितौ) K4 B Dn1 D2 S व्यराजतां (for व्यरोचताम्) — c) T G2-4 खद्योतैरिव राजेंद्र

14 G5 missing (cf v 1 9) B3 reads 14a on marg — a) T G1-4 संप्रदा(G4 °सा)रितसर्वांगौ — b) K4 B1 D2 T G2 तैर् (for तौ) D5 स्वर्णपुंखैर्महारथौ — B3 reads 14cd twice — c) G2 अदृश्येतां, M3-5 व्यदृश्येतां (for अदृ°) Ś1 K3 om क्रुद्धा — d) Ś1 K (K5 missing) D1 तोयदौ (for कुञ्जरौ)

15 G5 missing (cf v 1 9) — a) D2 युद्धे (for युधि) — b) T G2-4 महाबल (for °रथ)

16 G5 missing (cf v 1 9) — b) K1 2 D1 5 6 समार्द(K1 र्ध)यत्, D5 S (G5 missing) समर्पयत् (for समा°) — B3 repeats 16cd after 19

17 G5 missing (cf. v 1 9) M3 om. (hapl) 17d-20a

18 G5 missing (cf v 1. 9) M3 om 18 (cf v 1 17) — c) Ś1 K1-3 B1 Dc1 D1 6-8 G1 M1. 2-5 बाह्लिकस्य, T G2-4 बाह्लि(G3 4 ह्ली)केस्तु (for बाह्लीकस्य)

19 G5 missing (cf v 1 9) M3 om 19 (cf. v 1 17) — a) Ś1 K (K5 missing) सभ्रान्तो (for [अ]संभ्रान्तो) S (M3 om, G5 missing) पिता तव च

C 7 7242
B 7 162. 19
K 7 163 19

शैनेयं पञ्चविंशत्या सायकानां समाचिनोत् ॥ १९
सात्वतोऽपि रणे क्रुद्धः सोमदत्तस्य धन्विनः ।
धनुश्चिच्छेद समरे क्षुरप्रेण शितेन ह ॥ २०
अथैनं रुक्मपुङ्खानां शतेन नतपर्वणाम् ।
आचिनोद्बहुधा राजन्भग्नदंष्ट्रमिव द्विपम् ॥ २१
अथान्यद्धनुरादाय सोमदत्तो महारथः ।
सात्यकिं छादयामास शरवृष्ट्या महाबलः ॥ २२
सोमदत्तं तु संक्रुद्धो रणे विव्याध सात्यकिः ।
सात्यकिं चेषुजालेन सोमदत्तो *अपीडयत् ॥ २३
दशभिः सात्वतस्यार्थे भीमोऽहन्बाह्लिकात्मजम् ।
सोमदत्तोऽप्यसंभ्रान्तः शैनेयमवधीच्छरैः ॥ २४
ततस्तु सात्वतस्यार्थे भैमसेनिर्नवं दृढम् ।
मुमोच परिघं घोरं सोमदत्तस्य वक्षसि ॥ २५
तमापतन्तं वेगेन परिघं घोरदर्शनम् ।
द्विधा चिच्छेद समरे प्रहसन्निव कौरवः ॥ २६
स पपात द्विधा छिन्न आयसः परिघो महान् ।
महीधरस्येव महच्छिखरं वज्रदारितम् ॥ २७
ततस्तु सात्यकी राजन्सोमदत्तस्य संयुगे ।
धनुश्चिच्छेद भल्लेन हस्तावापं च पञ्चभिः ॥ २८
चतुर्भिस्तु शरैस्तूर्णं चतुरस्तुरगोत्तमान् ।
समीपं प्रेषयामास प्रेतराजस्य भारत ॥ २९
सारथेश्च शिरः कायाद्भल्लेन नतपर्वणा ।

---

सक्रुद्धो —$^{d}$) B2 समार्पयत् (for °चिनोत्) —After 19, B2 repeats 16$^{cd}$

20 G5 missing (cf v 1 9) M3 om 20$^{a}$ (cf v 1 17) —$^{a}$) B1 स्वरायुक्त (for रणे क्रुद्ध) —$^{c}$) Dn1 भल्लेन (for समरे) —$^{d}$) D4 सितेन (for शि ) K1 2 4 B2–4 D (except D1 4 5) M4 च (for ह) B1 क्षुरप्रेण महाबल ; G2 °प्रेण हसन्निव

21 G5 missing (cf v 1 9) —$^{b}$) S (G5 missing) शराणां (for शतेन) B3 4 5 D5 [आ]नत (for नत-) —$^{c}$) D3 4 6 अचिनोद् (for आचि°) Dn2 D2 4 त महाराज, D7 8 बहुल राजन्; G1 M बहु साहस्रैर् (for धा राजन्) —$^{d}$) Do1 Dn1 उग्र (for भग्न) Dn2 D2 4 G1 M [उ]रग (for द्विपम्)

22 G5 missing (cf. v 1 9) —$^{b}$) S (G5 missing) नराधिप (for महारथ) D5 तस्मिन्घोरे रणाङ्गणे — D5 om. 22$^{cd}$

23 G5 missing (cf v 1 9) —$^{a}$) Dn2 D2 4. 7 8 च (for तु) D1 संप्रेक्ष्य, T G3 त क्रुद्धो (for सक्रुद्धो) D5 सोमदत्ताय सक्रुद्धो —$^{b}$) T G2 विव्याथ (for °ध) —$^{c}$) B Do1 Dn1 शर (for चेषु) —$^{d}$) Ś1 K (K4 missing) D1 न्यपोथयत्, B Do1 Dn1 G1 4 M1–3 5 [s]भ्यपीडयत्, Dn2 [s]भ्यवद्रवत्, D2–5 7 8 T G3 [s]भ्यपीडयत्, D6 न्यपीडयत्, G2 M4 ह्यपी° (for *अपी°)

24 G5 missing (of v 1 9) —$^{a}$) D8 [अ]र्थं —$^{b}$) B1 D1 5 7 8 घ्नन् (for ऽहन्) K1 भीमो हत्वा-त्मकात्मज, S (G5 missing) भीमो विव्याध बाह्लिकिं (G2 M1–3 5 °क) —$^{c}$) D3 [s]थ सभ्रान्तो, G1 ह्यसभ्रांत (for ऽप्य°) —$^{d}$) Dn2 D2 4 5 7 8 भीममार्छच्छितै शरै

25 G5 missing (cf v 1 9) —$^{a}$) Dn2 D2 4 5 7 8 ततस्तु सात्वत क्रुद्धो —$^{b}$) K4 B (except B1) Do1 Dn1 D3 6 भीमसेनो, Dn2 D2 4 5 7 8 हेमदंडं (for भैमसेनिर्) —$^{d}$) D8 सोमदत्ताय वक्षसि

26 G5 missing (cf. v 1 9) —$^{a}$) S (G5 missing) सहसा (for वेगेन) —$^{b}$) S (G5 missing) घोर-रूपं भयावह (G2 महाबलं) —$^{c}$) S (G5 missing) सहसा (for समरे)

27 G5 missing (cf v 1 9) —$^{b}$) D3 6 ह्यग्रत (for आयस) —$^{d}$) Dn2 D2 4 5 7 8 -ताडितं (for -दारितम्)

28 G5 missing (cf v 1 9) M3 om 28$^{b}$–29$^{c}$ —$^{c}$) D2 ध्वज (for धनुश्) D4 5 समरे (for भल्लेन) —$^{d}$) Dn2 om (hapl) from हस्तावाप up to भ (in 30$^{b}$) D1–8 3 हस्ताच्चापं (for °वाप)

29 G5 missing (cf v 1 9) Dn2 om. 29, M3 om 29$^{abc}$ (for both, cf v 1 28) —$^{a}$) Ś1 K (K5 missing) B Do1 Dn1 D1 3 6 च (for तु) D2 om तूर्णं D4 5 7 8 Bom ed ततश्चतुर्भिस्तु (Bom. ed °र्भिश्च) शरैस् —$^{b}$) D4 5 7 8 तूर्णं तास् (for चतुरस्) Do1 Dn1 चतुरस्तुरगान्रथान्, D2 स्वर्णतीक्ष्णोरगोत्तमान् —$^{c}$) Ś1

जहार रथशार्दूलः प्रहसञ्शिनिपुंगवः ॥ ३०
ततः शरं महाघोरं ज्वलन्तमिव पावकम् ।
मुमोच सात्वतो राजन्स्वर्णपुङ्खं शिलाशितम् ॥ ३१
स विमुक्तो बलवता शैनेयेन शरोत्तमः ।
घोरस्तस्योरसि विभो निपपाताशु भारत ॥ ३२
सोऽतिविद्धो बलवता सात्वतेन महारथः ।
सोमदत्तो महाबाहुर्निपपात ममार च ॥ ३३
तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथाः ।
महता शरवर्षेण युयुधानमुपाद्रवन् ॥ ३४
छाद्यमानं शरैर्दृष्ट्वा युयुधानं युधिष्ठिरः ।
महत्या सेनया सार्धं द्रोणानीकमुपाद्रवत् ॥ ३५
ततो युधिष्ठिरः क्रुद्धस्तावकानां महाबलम् ।
शरैर्विद्रावयामास भारद्वाजस्य पश्यतः ॥ ३६
सैन्यानि द्रावयन्तं तु द्रोणो दृष्ट्वा युधिष्ठिरम् ।
अभिदुद्राव वेगेन क्रोधसंरक्तलोचनः ॥ ३७
ततः सुनिशितैर्बाणैः पार्थं विव्याध सप्तभिः ।
सोऽतिविद्धो महाबाहुः सृक्किणी परिसंलिहन् ।
युधिष्ठिरस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ ३८

C 7 7 62
B 7 162 39
K. 7 163 39

---

K (K5 missing) स्वरूप (for समीप) K1.2.4 प्रययामास (for प्रेष°) —d) Dc1 Dn1 मारिष (for भारत) D1 प्रेतराजाय भारत

30 G missing (cf. v. l. 9) Dn2 om. up to म (cf. v. l. 28) —b) Ś1 K3 शरेणानतपर्वणा —c) B Dc1 Dn1 D5 8 नर, D2 रथि- (for रथ) —d) K4 इव (for शिनि) Dn2 D2.4.5.7.8 प्रहसन्निव भारत

31 G missing (cf. v. l. 9) —c) Ś1 K3 [अ]थ ध्वज, K1.2 [अ]थ रणे, D1 [अ]थ ध्वरे (for सात्वतो) Dn2 D2.4.5.7.8 मुमोच स्वर्णपुङ्ख तं (D4 °सात) —d) Dn2 D2.4-7.8 तैलधौत (for स्वर्णपुङ्ख) Dn1 D1.7 शिलाशित

32 G5 missing (cf. v. l. 9) D4 om. (hapl.) 32b–33a —b) T G3.4 नरोत्तम (for शरोत्तम) —c) D2-8 S (G5 missing) पितुस्तव (for घोरस्तस्य) —d) Dn2 D2 श्येनवत् (for भारत)

33 G5 missing (cf. v. l. 9) D1 om. 33a (cf. v. l. 32) —a) B Dc1 Dn1 महाराज (for बलवता) —b) D2.6 महाबल (for °रथ) —c) Dn2 D2.4.5.7.8 महाराज (for °बाहुर्) —d) Dn2 D2.4.5.7.8 पपात च (for निपपात) — After 33, G1 M1.2.6 ins an addl. colophon [*Adhy. no.* G1 M1.2 158, M3 167]

34 G5 missing (cf. v. l. 9) Before 34, G1 M1.2.5 ins सञ्जय —a) Ś1 K (K5 missing) D1 ते (for त) D2 दृष्ट्वा वि (for त दृष्ट्वा) S (G5 missing) दृष्ट्वा निपतितं तत्र —b) Dn2 D1.5-8 M4 महारथं, M1 रथ (for °रथा) —c) Dn2 D2.4.7.8 तावका (for महता) D (except Dn1 D1) S (G5 missing) रथवंशेन (for शरवर्षेण) — After 34ab, Dn2 D2.4.5.7.8 ins

1159* पाण्डवाश्च महाराज सह मद्रैः प्रभद्रकैः ।

[D2 पाडवो D2.4.5.7.8 [अ]पि (for च) D2 मद्र, D7 माद्रेः (for मद्रैः) D5 ससोमकैः (for प्रभद्रकैः)]

35 G5 missing (cf. v. l. 9) K4 D1 om. (hapl.) 35 Dn2 D2.4.5.7.8 om. 35ab D6 om. 35cd —d) S (G5 missing) युयुधानम् (for द्रोणानीकम्) K3 B1 Dn2 D1.5.7 M उपाद्रवन् (for द्रवत्) B8 द्रोणानीक महद्बल

36 G5 missing (cf. v. l. 9) —b) K1.2.4 B3.5 D2.6 S (G5 missing) महद् (for महा) Dn2 D2.4.5.7.8 भारद्वाजस्य सैनिकान् —c) T G2-4 शरैर्विदार यामास —d) K4 सत्तम (for पश्यत)

37 G5 missing (cf. v. l. 9) —a) D2 T G2-4 सैन्य वि (for सैन्यानि) D5 द्रावमाण (for °यन्त) Dn2 D1.7.8 च, D5 S (G5 missing) तं (for तु) D3.6 सैन्यानि विद्रावयंत —b) B1.8 Dc1 Dn1 T G (G5 missing) M3.5 transp. द्रोणो and दृष्ट्वा

38 G5 missing (cf. v. l. 9) —a) Ś1 K1.3 D3.6 G1 M1.2 स (for सु-) —b) T G2 विव्याय (for °ध) Ś1 K3 S (G5 missing) पञ्चभि (for सप्तभिः) — After 38ab, N (except B1, Ś2 K5 missing) ins

1160* युधिष्ठिरोऽपि संक्रुद्ध प्रतिविव्याध पञ्चभि ।

[Ś1 K3 नवभि (for पञ्चभि)]

—c) Dn2 D2.6.7.8 महेष्वास (for महाबाहु) S स त विद्धो महेष्वास —d) Ś1 K1 G1 सृक्किणी, B1.2.5 सृक्कणी, B3 G3 M1.2.5 सृक्कणी, G1 M3.4 स्रक्कणी (for सृक्किणी) B4 D2.6 T G2-4 M4 -छेलिहन् (for

चिक्षेप भरतश्रेष्ठ रथे न्यस्य महद्धनुः ॥ ३१
सा हेमचित्रा महती पाण्डवेन प्रवेरिता ।
निर्भिद्य दक्षिणं बाहुं प्राविशद्धरणीतलम् ॥ ३२
एतस्मिन्नेव काले तु गृह्य पार्थः पुनर्धनुः ।
हार्दिक्यं छादयामास शरैः संनतपर्वभिः ॥ ३३
ततस्तु समरे शूरो वृष्णीनां प्रवरो रथी ।
व्यश्वसूतरथं चक्रे निमेषार्धाद्युधिष्ठिरम् ॥ ३४
ततस्तु पाण्डवो ज्येष्ठः खड्गचर्म समाददे ।
तदस्य निशितैर्बाणैर्व्यधमन्माधवो रणे ॥ ३५
तोमरं तु ततो गृह्य स्वर्णदण्डं दुरासदम् ।
प्रेषयत्समरे तूर्णं हार्दिक्यस्य युधिष्ठिरः ॥ ३६
तमापतन्तं सहसा धर्मराजभुजच्युतम् ।
द्विधा चिच्छेद हार्दिक्यः कृतहस्तः स्मयन्निव ॥ ३७
ततः शरशतेनाजौ धर्मपुत्रमवाकिरत् ।
कवचं चास्य संक्रुद्धः शरैस्तीक्ष्णैरदारयत् ॥ ३८
हार्दिक्यशरसंछिन्नं कवचं तन्महात्मनः ।
व्यशीर्यत रणे राजंस्ताराजालमिवाम्बरात् ॥ ३९
स छिन्नधन्वा विरथः शीर्णवर्मा शरार्दितः ।

C 7. 7295
B 7. 165. 40
K 7. 166. 40

---

Dn2 D1 4 पाडवेन तया ( Dn2 °दा )क्षिप्ता — d ) Ś1 *यानीय, K ( K5 missing ) D1 अयानीय ( for रथे न्यस्य ) B2 महात्मन, D1 महाधनु ( for महद्धनु )

32 D4 reads 32a–33b twice — a ) D4 ( both times ) 6 स ( for सा ) — b ) B1–3 Dc1 Dn1 पाडवेय ( for °वेन ) B1 ( marg ) प्रवेपिता, B3 -भुजेरिता, B5 G1 M1–3 5 प्रचोदिता, D7 8 समीरिता ( for प्रवे° ) Ś1 K ( K5 missing ) Dn2 D3 6 T G2–4 M4 पाडवेयेन ( Dn2 °नालु ) प्रेषि( T G2–4 °रि )ता, D4 ( first time ) °वेनानु*पिता, D4 ( second time ) °वेनानुनेपिता — d ) D4 ( both times ) 5 7 8 -तले ( for -तलम् )

33 For the repetition in D4, cf. v. l. 32 — b ) D3 6 गृहीत्वा तु ( for गृह्य पार्थ ) K1 धनुर्धर, Dn2 D4 ( both times ) 5 7 8 महद्धनु ( for पुनर्धनु )

34 a ) Dn2 D4 5 7 8 तत्र वै ( for समरे ) Ś1 K3 वीरा, K1 4 वीरो ( for शूरो ) — b ) K1 2 D1 रय ( for रथी ) Ś1 K3 वृष्णीना प्रवरा रथा, S ( G5 missing ) कुरूणा प्रवर युधि ( M रथी ) — c ) Ś1 K3 चक्रुर् ( for चक्रे )

35 a ) Dc1 Dn1 G1 M स ( for तु ) K4 पाडवं; D1 7 G1 3 4 M पांडव K4 ज्येष्ठं — b ) B4 Dc1 D1 7 8 T G1–4 M3–5 खड्ग ( for खड्ग ) Ś1 K3 समादधे; Dn2 °ददौ ( for °ददे ) — c ) Ś1 K1–3 D3 G2 ततस्य, K4 ततस्तु ( sic ), D6 त तस्य ( for तद° ) Dn2 D4 5 7 8 तदप्यस्य शितै( D4 °स्य सितै, D5 °नेशितै [ hypermetric ], D3 °स्य शरै )र्भल्लैर् — d ) T G2 व्ययमन् ( for व्यध° ) K4 lacuna, D5 पाडवो ( for माधवो )

36 a ) Ś1 K3 च ( for तु ) — b ) D3 6 -पुंख ( for दण्डं ) Ś1 K3 **स्वय, K1 2 D1 नदस्व( D1 °स्व )य ( for दुरासदम् ) — c ) Ś1 K3 B1 2 Dc1 M2 5 प्रेषयत्, K4 प्रेषितत् ( sic ), Dn2 D3 4 5 7 8 अप्रेषीत् ( for प्रेषयत् ) — d ) Ś1 K1–3 D1 च दुर्मद, Dn2 D3 4 6–8 S ( G5 missing ) महात्मन, D5 महारय ( for युधिष्ठिर )

37 a ) D4 समापतत्तं सहसा — b ) Dn2 D4 5 7 8 युधिष्ठिर ( for धर्मराज ) Ś1 K ( K5 missing ) D1 भुजोद्यत, D4 5 -रथाच्युत, D7 8 T G2–4 M4 -कराच्युत, G1 M1–3 5 -करच्युत ( for -भुजच्युतम् ) — d ) Ś1 K2 चित्र ( for कृत )

38 b ) D4 5 7 8 अवासृजत् ( D7 °न् ) — G2 om ( ? hapl ) 38cd — c ) B1 तस्य ( for चास्य ) Dn2 D4 5 7 8 कवचं च रणे क्रुद्धो — d ) Dn2 D4 5 7 8 S ( G2 om , G5 missing ) बाण( D6 शर )जालैरवाकिरत् ( D4 °किरन् )

39 a ) K1 2 समिन्नं; B1 Dc1 Dn D2 7 8 सछन्नः S ( G5 missing ) सकृत्त ( for -संछिन्न ) — b ) K4 S ( G5 missing ) महाधन ( for °त्मन ) Dn2 D4 5 7 8 जाबूनदविभूषित — c ) Dn2 विशीर्यंत, D3 व्यसी° ( for व्यशी° ) D4 7 8 राजस् ( for राजस् )

40 a ) G1 3 4 M संछिन्न ( for स छिन्न ) Dn2 D4 5 7 8 M3 -वर्मा ( for -धन्वा ) — b ) Dn2 D4 5 7 8 कृतवर्मा ( D5 8 °र्म ), G3 4 क्षीणवर्मा ( for शीर्ण° ) T G2–4 शराचित ( for °र्दित ) — c ) Ś1 K1–3 अपा( K2 °प )यात्स, Dn2 D4 5 7 8 अपयातो ( for अपायासीद् ) D4 रथात् ( for रणात् )

41 B4 om 41 — b ) B ( B4 om. ) Dc1 Dn1 D2 3 6 S ( G5 missing ) धर्मात्मान ( for धर्मपुत्र ) — c ) K1 पुण्यधर्मस्य जुगुपे, D8 धर्मपुत्रस्य जुगुपे Cd cites जुगुपे ( as in text ) — d ) D7 चक्रमे च ( for चक्रमेव ).

C 7 7295
B 7 165 40
K 7 166 40

अपायासीद्रणात्तूर्णं धर्मपुत्रो युधिष्ठिरः ॥ ४०
कृतवर्मा तु निर्जित्य धर्मपुत्रं युधिष्ठिरम् ।
पुनर्द्रोणस्य जुगुपे चक्रमेव महाबलः ॥ ४१

इति श्रीमहाभारते द्रोणपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

# १४१

संजय उवाच ।
भूरिस्तु समरे राजञ्शैनेयं रथिनां वरम् ।
आपतन्तमपासेधत्प्रपानादिव कुञ्जरम् ॥ १
अथैनं सात्यकिः क्रुद्धः पञ्चभिर्निशितैः शरैः ।
विव्याध हृदये तूर्णं प्रास्रवत्तस्य शोणितम् ॥ २
तथैव कौरवो युद्धे शैनेयं युद्धदुर्मदम् ।
दशभिर्विशिखैस्तीक्ष्णैरविध्यत भुजान्तरे ॥ ३
तावन्योन्यं महाराज ततक्षाते शरैर्भृशम् ।
क्रोधसंरक्तनयनौ क्रोधाद्विस्फार्य कार्मुके ॥ ४
तयोरासीन्महाराज शस्त्रवृष्टिः सुदारुणा ।
क्रुद्धयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ ५
तावन्योन्यं शरै राजन्प्रच्छाद्य समरे स्थितौ ।
मुहूर्तं चैव तद्युद्धं समरूपमिवाभवत् ॥ ६
ततः क्रुद्धो महाराज शैनेयः प्रहसन्निव ।

---

Dn2 D4 6 7 8 M4 महारथ, D1 °बल, D2 M8 °स्मन, G1 8 °बल (for °बल)

Colophon om. in B4 Ś1 K5 G5 missing — *Sub parvan* Editions घटोत्कचवध — *Day of Drona's Generalship* K4 चतुर्थेऽदिवसे — *Adhy name* Ś1 K (K5 missing) B (B4 om) Do1 Dn D1-5 7 8 T G1.8 M1-8 5 रात्रियुद्ध, D6 रात्रियुद्धे भोजेन युधिष्ठिर पराजय, Bom ed रात्रियुद्धे युधिष्ठिरापयान — *Adhy no* (figures, words or both) Dn1 165, D2 164, D8 M4 160, T G2-4 M8 161, G1 M1 2 5 162 — *Śloka no* Do1 Dn1 41

## 141

☞ This adhy is missing in Ś1 K5 G5 (cf v l 7 132 20, 125 14, 137 9)

1 B4 om 1-4 — $^{b}$) K3 D4 7 सैनेय — $^{c}$) Ś1 K1-8 अपा(K8 °या)सीदत्, B2 D7 8 अपावेधत्; D5 अयावेधत्, T G2 M2 4 Cv अवा° (for अपा°) — $^{d}$) Ś1 K1 2 प्रमाणाद्; K8 4 B5 Dn2 D1 2 4 7 प्रयाणाद्; B2 Do1 M2.5 Cd v प्रवणाद्, B3 D2 6 T G2 4 प्रपातात्; Dn1 प्रणवाद्; D5 प्रवाणाद्, D8 प्रपाणाद्, G1 प्रपणाद्, G2 प्रभिन्नम्, M4 प्रवाणम्, Cd प्रपानाद् (as in text)

2 B4 om 2 (cf v l 1) — $^{a}$) Dn1 तं (for [ए]नं) D7 M4 सात्यकिं (for °कि) — $^{c}$) T G2 विव्याय D8 हृदयं, T G2-4 समरे K8 Dn2 तस्य (for तूर्णं) — $^{d}$) B3 प्राद्रवत्, D2 4 5 प्रापतत्, S (G5 missing) तेपियस् (for प्रास्रवत्)

3 B4 om 3 (cf v 1 1) — $^{a}$) D2 राजा (for युद्धे) — $^{b}$) B2 D4 7 सैनेय — $^{c}$) D1 8 6 निशितैस्, D4 विपथैस् (for विशिखैस्) K4 Dn2 D2 4 6 7 8 तूर्णम् (for तीक्ष्णैर्) — $^{d}$) T G3.4 भुजातर

4 B4 om 4 (of v l 1) K2 om 4-5 D5 om 4$^{ab}$ — $^{a}$) K1 D8 6 रणे राजस् (for महाराज) Ś1 K8 Dn2 तथान्योन्य रणे राजस् — D4 om (hapl) 4$^{b}$-6$^{a}$ — $^{b}$) D1 परस्पर (for शरैर्भृशम्) — $^{d}$) Ś1 D8 6 8 दर्पाद्, K1 हस्ताद्, Dn2 D2 7 हृद्दे (for क्रोधाद्) G1 3 4 M8 4 विष्फार्य D8 कार्मुक

5 K2 D4 om 5 (cf. v 1 4) — $^{b}$) B2 Dn2 D8 शर- (for शस्त्र) — $^{c}$) B2 5 शायक (for सा°)

6 D4 om. 6$^{a}$ (of v l 4) — $^{a}$) K2 रणे राजन्, Dn2 D2 6 7 8 महाराज; S (G5 missing) शरघातैः (for शरै राजन्) — $^{b}$) K4 B Do1 Dn1 सछाद्य (for प्रच्छाद्य) G1 M1-8 5 संछाद्य समुप(M8 5 °मय)स्थितौ — $^{c}$) D5 चापि (for चैव) — $^{d}$) B5 तदा (for इव)

7 $^{b}$) D3 4 सैनेय (for शै°) — $^{d}$) D6 7 कौरवस्य

धनुश्चिच्छेद समरे कौरव्यस्य महात्मनः ॥ ७
अथैनं छिन्नधन्वानं नवभिर्निशितैः शरैः ।
विव्याध हृदये तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ८
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
धनुरन्यत्समादाय सात्वतं प्रत्यविध्यत ॥ ९
स विद्ध्वा सात्वतं बाणैस्त्रिभिरेव विशां पते ।
धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव ॥ १०
छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्छितः ।
प्रजहार महावेगां शक्तिं तस्य महोरसि ॥ ११
स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात् ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ १२
तं तु दृष्ट्वा हतं शूरमश्वत्थामा महारथः ।
अभ्यधावत वेगेन शैनेयं प्रति संयुगे ।
अभ्यवर्षच्छरौघेण मेरुं वृष्ट्या यथाम्बुदः ॥ १३
तमापतन्तं संरब्धं शैनेयस्य रथं प्रति ।
घटोत्कचोऽब्रवीद्राजन्नादं मुक्त्वा महारथः ॥ १४
तिष्ठ तिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
एष त्वाद्य हनिष्यामि महिषं स्कन्दराडिव ।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ १५
इत्युक्त्वा रोषताम्राक्षो राक्षसः परवीरहा ।
द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ॥ १६
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ॥ १७
शरवृष्टिं तु तां प्राप्तां शरैराशीविषोपमैः ।

C 7 7418
B 7 166 19
K 7 167 19

---

8 $^{a}$) $K_{1.2}$ भिन्न (for छिन्न) —$^{c}$) T $G_2$ विव्याथ $D_{2.6}$ समरे (for हृदये)

9 $^{b}$) $M_4$ -कर्शन (for तापन) —$^{c}$) $Ś_1$ समाधाय —$^{d}$) $K_1$ प्रत्यभिद्यत, $D_4$ प्रतिविध्यत (for प्रत्य°)

10 $^{c}$) $D_{n1}$ $D_5$ $G_{3.4}$ समरे (for भल्लेन) —$^{d}$) $D_{2.4}$ पतत्रिणा, $D_5$ तु पत्रिणा (for हसन्निव)

11 $^{b}$) $D_{4.5}$ $G_{3.4}$ सात्वत (for सात्यकि) —$^{c}$) $D_{n2}$ $D_{4.5.7.8}$ चिक्षेप सु (for प्रजहार)

12 $^{a}$) $D_{2.4.7}$ शत्रु (for स तु) $Ś_1$ $K_{1-3}$ $D_{3.6}$ शक्ति (for शक्त्या) —$^{b}$) T $G_3$ ममार च (for रथो त्तमात्) —$^{c}$) $M_{1.2}$ लोहिताक $D_{n1}$ $D_{2.4.5}$ इवाकाशे (for °काशाद्)

13 $^{a}$) $D_{7.8}$ मत्वा (for दृष्ट्वा) $Ś_1$ $K_{1-3}$ $D_1$ त दृष्ट्वा निह(-$K_1$ °हि)त शूरम् —$^{b}$) $B_{1.2.4}$ $M_4$ महारथं; $B_3$ रथं प्रति (for महारथ) —$D_8$ repeats $13^{cd}$ after 14 —$^{d}$) $D_{4.7}$ सैनेयं. $D_{n2}$ $D_{2.4.5.7.8}$ भारत (for संयुगे) —$Ś_1$ K ($K_6$ missing) B $D_{c1}$ $D_n$ $D_{1-5.7.8}$ ins. after—$13^{cd}$ $D_3$ after the first occurrence of $13^{cd}$

1175* तिष्ठ तिष्ठेति चाभाष्य शैनेय स नराधिप ।
[ $D_{n2}$ $D_{7.8}$ सात्यकिं (for शैनेय) ]

—$^{e}$) $D_{c1}$ अभ्यद्रवत् (for °वर्षत्) $Ś_1$ $K_{1-3}$ $D_{n2}$ $D_1$ शरौघेन $D_{n1}$ अभ्यधावत रोषेण —$^{f}$) $K_2$ $D_{n1}$ दृष्ट्वा (for वृष्ट्या) $D_3$ स्त्विव, $D_6$ $G_1$ M इव (for यथा) T $G_{2-4}$ मेरु वृष्ट्येव तोयद

14 $^{a}$) $D_{n2}$ $D_{2.4.5.7.8}$ T $G_{2-4}$ वेगेन (for संरब्धं) —$^{b}$) $Ś_1$ $K_{1-3}$ शैनेयं स नराधिप —$^{c}$) $Ś_1$ $K_{1-3}$ वाक्य (for राजन्) —$^{d}$) $K_{1.2}$ नादमुक्त्वा (for नादं मुक्त्वा) $B_4$ मुक्तो नादं महाबल (810) — After 14, $D_8$ repeats $13^{cd}$

15 $G_1$ om (hapl.) $15^{a}$–$33^{b}$ —$^{c}$) $K_4$ $D_{n2}$ $D_{1-5.7.8}$ T $G_{2-4}$ त्वा नि (for त्वाद्य) —$^{d}$) $K_{1.2.4}$ $D_1$ S ($G_1$ om, $G_5$ missing) मृगराड् (for स्कन्द°) $D_n$ $D_{2.4.5.7.8}$ महिषं षण्मुखो यथा, Cv as in text —$^{f}$) $B_3$ हनिष्यामि, $D_{c1}$ हरि° (for विने°)

16 $G_1$ om. 16 (cf v l. 15) $D_3$ om $16^{a}$–$17^{b}$ —$^{a}$) $K_3$ B $D_{c1}$ $D_{n1}$ क्रोध (for रोष) —$^{c}$) $K_{1.2}$ $D_1$ अभ्याद्रवत् —$^{d}$) $K_{1.4}$ $B_{1.2.5}$ $D_{n2}$ $D_8$ केशरी.

17 $G_1$ om 17 (cf. v l 15). $D_3$ om $17^{ab}$ (cf v l 16) —$^{a}$) $D_{c1}$ $D_{n2}$ $D_{4-7}$ T $G_{3.4}$ अथा क्षमात्रैर् (for रथाक्ष°) —$^{c}$) $Ś_1$ $K_{1-3}$ $D_6$ रथानाम् (for रथि°)

18 $G_1$ om. 18 (cf. v l. 15) —$^{a}$) $D_{n2}$ lacuna, $D_{2.4.5.7.8}$ ता बाणवृष्टिमप्राप्तां, S ($G_1$ om., $G_5$ missing) शरवृष्टिं शरैर्द्रौणिर् —$^{b}$) S ($G_1$ om., $G_5$ missing) अप्राप्तामन्वशातयत् — S ($G_1$ om., $G_5$ missing) om $18^{cd}$ —$^{c}$) $B_{3.5}$ $D_3$ पातयामास (for शात°) —$^{d}$) $K_{1.2}$ समसा (for तरसा) $D_n$ $D_{2.4.5}$ आहवे, $D_{3.6}$ असयन्, Cd उत्सयन् (as in text)

C 7 7416
B 7 166 20
K 7 167 19

शातयामास समरे तरसा द्रौणिरुत्स्मयन् ॥ १८
ततः शरशतैस्तीक्ष्णैर्मर्मभेदिभिराशुगैः ।
समाचिनोद्राक्षसेन्द्रं घटोत्कचमरिंदम ॥ १९
स शरैराचितस्तेन राक्षसो रणमूर्धनि ।
व्यकाशत महाराज श्वाविच्छललितो यथा ॥ २०
ततः क्रोधसमाविष्टो भैमसेनिः प्रतापवान् ।
शरैरवचकर्तोग्रैर्द्रौणिं वज्राशनिस्वनैः ॥ २१
क्षुरप्रैरर्धचन्द्रैश्च नाराचैः सशिलीमुखैः ।
वराहकर्णैर्नालीकैस्तीक्ष्णैश्चापि विकर्णिभिः ॥ २२
तां शस्त्रवृष्टिमतुलां वज्राशनिसमस्वनाम् ।
पतन्तीमुपरि क्रुद्धो द्रौणिरव्यथितेन्द्रियः ॥ २३
सुदुःसहां शरैर्घोरैर्दिव्यास्त्रप्रतिमन्त्रितैः ।
व्यधमत्स महातेजा महाभ्राणीव मारुतः ॥ २४
ततोऽन्तरिक्षे बाणानां संग्रामोऽन्य इवाभवत् ।
घोररूपो महाराज योधानां हर्षवर्धनः ॥ २५
ततोऽस्त्रसंघर्षकृतैर्विस्फुलिङ्गैः समन्ततः ।
बभौ निशामुखे व्योम खद्योतैरिव संवृतम् ॥ २६
स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वतः ।
प्रियार्थं तव पुत्राणां राक्षसं समवाकिरत् ॥ २७
ततः प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे ।
विगाढे रजनीमध्ये शक्रप्रह्लादयोरिव ॥ २८
ततो घटोत्कचो बाणैर्दशभिर्द्रौणिमाहवे ।

---

19 G1 om 19 (cf. v l 15) —[d]) K4 B Dn D1–5 7 8 T G2–4 M4 अरिंदमं, D6 M1–3 5 °दम (for °दम)

20 G1 om 20 (cf. v l 15) —[c]) K1 व्याकपत, T G2–4 व्यराजत (for व्यकाशत) —[d]) Cd स्वाविद् (for श्वाविद्) K1 2 सललितो, K4 B1 D7 T G2–4 M5 शललतो, D4 शविलतो, D5 शलचितो, D8 सलिलतो, M1 2 4 शललिको, M3 °लिलो, Cd °लितो (as in text) Dn2 श्वाविद्धो ललतो यथा, D1 श्वाविधं सिललै र्यथा, D3 रवि सशलभैर्यथा, D6 श्वाविस्वद्*लिलैर्यथा

21 G1 om 21 (cf v l 15) —[a]) T G2–4 कोप- (for क्रोध-) —[b]) D1 घटोत्कच (for प्रतापवान्) —[c]) D8 -चकार (for -चकर्त) —[d]) B Dc1 Dn1 -प्रमै, T G2 -स्वमै (for -स्वनै) Ś1 K (K5 missing) D1. 3 6 7 वज्राशनिसमस्वनै

22 G1 om. 22 (of v l 15) —[b]) K1 2 D3 6 च, M (except M4) तु (for स-) —[c]) K1 वाराह- (for वराह) D2 नाराचैर्, T G2–4 अन्यैश्च; M नाळी कैर् (for नालीकैर्) —[d]) K4 विकर्णिकै (for °र्णिभि) Dn2 D2 4 5 G3. 4 विकर्णैश्चाप्य (D2 G3 4 °प्य) वीवृपत्, T G2 विकर्णैश्चाप्यपीडयत्; M अकुंठाग्रैरविध्यत (M4 °तां)

23 G1 om 23 (of v l. 15) —[a]) D4 वृष्टिश स्त्रम् (for शस्त्रवृष्टिम्) S (except M4, G1 om, G5 missing) तुमुलां (for अतुलां) —[b]) D8 6 शक्राशनि (for वज्रा°) Ś1 K (K5 missing) D1 2 -प्रभा (for -स्वनाम्) T G2–4 सवज्राशनिनिस्वना —[c]) Ś1 K1–3 D1 क्षुब्ध, Dc1 क्षुब्धो (sic), D2 4 7 8 क्रूरां, D5 -क्रोधा (for क्रुद्धो) Dn2 D5 पवतीं सुपरिक्रुद्धो (D5 °क्रूरां)

24 G1 om. 24 (cf. v l 15) —[a]) Dn2 D2 सदुःसहा, T G2–4 सु(G2 स)दुष्पहां, M सुदुःषहे (for सुदुःसहा) —[b]) D2 4 5 7 8 परि (for -प्रति) —[c]) T G2 M1 2 व्यधमत् (for व्यध°) K2 4 B (except B4) Dc1 Dn1 D2, 4 6 7 8 G2–4 M सु (for स) Dn2 lacuna for महातेजा

25 G1 om 25 (of v l 15) —[a]) B (except B1) ववौंतरीक्षे —[d]) M यौधाना D4 5 7 8 भय-, S (G1 om, G5 missing) प्रीति- (for हर्ष-) D2 योधाना भरतर्षभ

26 G1 om 26 (cf v l 15) —[a]) Dn2 तयोस्तु (for ततोऽस्त्र) —[b]) G3 4 M2 4 विस्फुलिंगैर् Dn2 D4 6 7 8 S (G1 om, G5 missing) इतस्तत (for समन्तत) —[c]) D1 5 7 8 निशि मुखे (for निशामुखे) —[d]) B5 D3 M1 2 सवृत, Dn2 D2 4 5 7 8 चित्रित (for संवृतम्)

27 G1 om 27 (cf v l 15) —[b]) G3 दिश D3 प्राच्छाद्य B1. 3 5 D (except D1. 5) G2 सर्वश- (for °त) —[c]) B1 पुत्रस्य (for पुत्राणा)

28 G1 om 28 (of v l. 15) —[b]) Dn2 D4 5 7 8 पुन, G2 महत् (for मृधे) —[c]) D4. 7 8 विगाढ (for °ढे) —[d]) Some MSS प्रह्लादयोर्, M -शंबर° (for प्रह्लाद°) M3 अपि (for इव)

जघानोरसि संक्रुद्धः कालज्वलनसंनिभैः ॥ २९
स तैरभ्यायतैर्विद्धो राक्षसेन महाबलः ।
चचाल समरे द्रौणिर्वातनुन्न इव द्रुमः ।
स मोहमनुसंप्राप्तो ध्वजयष्टिं समाश्रितः ॥ ३०
ततो हाहाकृतं सैन्यं तव सर्वं जनाधिप ।
हतं स्म मेनिरे सर्वे तावकास्तं विशां पते ॥ ३१
तं तु दृष्ट्वा तथावस्थमश्वत्थामानमाहवे ।
पाञ्चालाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ॥ ३२
प्रतिलभ्य ततः संज्ञामश्वत्थामा महाबलः ।
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ॥ ३३
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम् ।
यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम् ॥ ३४
स भित्त्वा हृदयं तस्य राक्षसस्य शरोत्तमः ।
विवेश वसुधामुग्रः सुपुङ्खः पृथिवीपते ॥ ३५
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
राक्षसेन्द्रः सुबलवान्द्रौणिना रणमानिना ॥ ३६
दृष्ट्वा विमूढं हैडिम्बं सारथिस्तं रणाजिरात् ।
द्रौणेः सकाशात्संभ्रान्तस्त्वपनिन्ये त्वरान्वितः ॥ ३७
तथा तु समरे विद्ध्वा राक्षसेन्द्रं घटोत्कचम् ।
ननाद सुमहानादं द्रोणपुत्रो महाबलः ॥ ३८
पूजितस्तव पुत्रैश्च सर्वयोधैश्च भारत ।
वपुषा प्रतिजज्वाल मध्याह्न इव भास्करः ॥ ३९

C 7 7437
B. 7 166 41
K 7 167 41

---

29 G1 om 29 (cf v l 15) Dc1 om $29^{b}$–$30^{c}$ —$^{b}$) K2 D1 द्रोणम् (for द्रौणिम्) S (G1 om, G5 missing) दशभिर्गौतमीसुत — Dn1 om $29^{c}$–$30^{b}$ —$^{d}$) D5 G4 सनिभ (for °भैः)

30 G1 om 30 (cf. v l 15) Dc1 om $30^{abc}$, Dn1 om. $30^{ab}$ (for both, cf v l 29) —$^{a}$) M4 शरैर् (for स तैर्) K2 3 D3 6 T G2–4 M4 अत्यायतैर्; B1 अभ्याहतैर्, M1–3 5 अत्याहितैर् (for अभ्यायतैर्) Dn2 D2 4 5 7 8 स गाढविद्धो व्यथितो — Ś1 K1–3 D3 om. (hapl) $30^{c}$–$33^{b}$ D2 4 7 8 om $30^{e}$–$32^{d}$ —$^{e}$) T G2–4 समरे, M समनु (for अनुस) —$^{f}$) D6 समन्वित (for समाश्रित)

31 Ś1 K1–3 D2–4 7 8 G1 om 31 (cf v l 30, 15) —$^{ab}$) B5 D5 T G2–4 transp सैन्य and सर्वं M1–3 5 transp तव and सर्वं D1 सर्वेस्, D5 सर्वे (for सैन्य) D1 सैन्यैर् M4 सैन्यं (for सर्वं) D1. 5 6 नराधिप (for जना°) —$^{c}$) B1 T G2–4 स, D5 च (for स्म) —$^{d}$) B4 ते (for त) S (G1 om, G5 missing) द्रोणसूनु जनाधिप (M °पा)

32 Ś1 K1–3 D2–4 7 8 G1 om 32 (cf v l 30, 15) —$^{a}$) K4 D1 5 च (for तु) M (except M1) तदा (for तथा) —$^{c}$) B5 पाचाल, Bom ed पचाला —$^{d}$) B3 Dc1 Dn1 D1. 5 6 M4 सिंहनादान् (for °नाद)

33 Ś1 K1–3 D3 G1 om $33^{ab}$ (cf v l. 30, 15) —$^{b}$) Dn2 D2 4 5 7 8 M (except M4) महारथ (for °बल) —$^{c}$) B3 सं (for प्र). K1 धनु प्रपीड्य मानेन —$^{d}$) Ś1 K1–3 B (except B5) D1–3 6 -कर्षण, K4 -कर्शणं (for °न)

34 $^{c}$) Ś1 K1–3 -दष्ट्रोपम (for दण्डोपम) —$^{d}$) D5 7 8 उद्यम्य (for उद्दिश्य) M4 तु (for [आ]शु)

35 $^{a}$) Ś1 K (K5 missing) D3 6 transp स and भित्त्वा —$^{b}$) Ś1 K (K5 missing) B5 D1 3 6 महा शर°, D3 घटोत्कच (for शरोत्तम) — The portion of the text from $35^{c}$ up to 7 146 $2^{d}$ is lost in D4 on missing folios —$^{d}$) K (K5 missing) Dc1 Dn2 D1 3 6–8 T G2 M3 4 स (for सु)

36 D4 missing (cf v l 35) —$^{a}$) D2 5 [s]पि (for ऽति) —$^{b}$) D7 8 रथोपस्थम् —$^{c}$) K2 D3 T G2–4 स, D2 5 8 तु (for सु) —$^{d}$) D3 वीर (for रण) Ś1 K (K5 missing) D1 मूर्धनि, B3 4 Dn1 -शालिना (for -मानिना)

37 D4 missing (cf v l 35) —$^{a}$) Ś1 K1 3 D6 हैर्डिंबि, Dc1 D7 8 हैडंब, D3 हैडबि (for हैडिम्ब) —$^{b}$) T G2–4 राक्षसं (for सारथिस्) K4 B Dc1 Dn D2 3 5 सु (for त) B5 रणाजिरे (for °जिरात्) —$^{c}$) K2 सभ्रष्टस्, D5 सभ्रातम् —$^{d}$) D5 7 8 अपनिन्ये (for त्वप°) T G2–4 [s]थ (G2 च) सारथि (for त्वरान्वित°)

38 D4 missing (cf v l 35) —$^{b}$) K4 घटोत्कच° —$^{d}$) B Dc1 Dn2 D2 5 महारथ° (for °बल) Dn1 द्रौणि सर्वमहारथ

39 D4 missing (cf. v l. 35) —$^{a}$) K1. 2 तेन

C. 7. 7439 B. 7. 111. 39 K. 7. 117. 42

भीमसेनं तु युध्यन्तं भारद्वाजरथं प्रति ।
स्वयं दुर्योधनो राजा प्रत्यविध्यच्छितैः शरैः ॥ ४०
तं भीमसेनो नवभिः शरैर्विव्याध मारिष ।
दुर्योधनोऽपि विंशत्या शराणां प्रत्यविध्यत ॥ ४१
तौ सायकैरवच्छन्नावदृश्येतां रणाजिरे ।
मेघजालसमाच्छन्नौ नभसीवेन्दुभास्करौ ॥ ४२
अथ दुर्योधनो राजा भीमं विव्याध पत्रिभिः ।
पञ्चभिर्भरतश्रेष्ठ तिष्ठ तिष्ठेति चाब्रवीत् ॥ ४३
तस्य भीमो धनुश्छित्त्वा ध्वजं च नवभिः शरैः ।
विव्याध कौरवश्रेष्ठं नवत्या नतपर्वणाम् ॥ ४४
ततो दुर्योधनः क्रुद्धो भीमसेनस्य मारिष ।
चिक्षेप स शरान्राजन्पश्यतां सर्वधन्विनाम् ॥ ४५
तान्निहत्य शरान्भीमो दुर्योधनधनुश्च्युतान् ।
कौरवं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ४६
दुर्योधनस्तु संक्रुद्धो भीमसेनस्य मारिष ।
क्षुरप्रेण धनुश्छित्त्वा दशभिः प्रत्यविध्यत ॥ ४७
अथान्यद्धनुरादाय भीमसेनो महाबलः ।
विव्याध नृपतिं तूर्णं सप्तभिर्निशितैः शरैः ॥ ४८
तदप्यस्य धनुः क्षिप्रं चिच्छेद लघुहस्तवत् ।
द्वितीयं च तृतीयं च चतुर्थं पञ्चमं तथा ॥ ४९
आत्तमात्तं महाराज भीमस्य धनुराच्छिनत् ।
तव पुत्रो महाराज जितकाशी मदोत्कटः ॥ ५०

---

(for तव) D7 8 तु (for च) D5 6 पूजितस्तस्य मित्रैस्तु —b) K1 -चैधैरः, G1 4 M -चौधैरः —c) K4 Dn1 D1 6 [अ]तिप्र, B Dc1 S (G5 missing) [अ]भिप्र- (for प्रति) —d) Dn2 D5 6 मध्याह्ने भास्करो यथा

40 D4 missing (cf v 1 35)

41 D4 missing (cf v 1 35) —a) B Dc1 Dn1 दशभि (for नवभि) —b) T G2 विव्याय Dn2 om (hapl) from मारिष up to विव्याध (in 44c) K4 मारिष, D 5 S (G5 missing) भारत (for मारिष)

42 D4 missing (cf v 1 35) Dn2 om 42 (cf v 1 41) —a) Dc1 D5 6 तै (for तौ) B1 6 सायकैर् K4 B2-4 Dn1 D1 6-8 G2.4 M2 3 अवच्छिन्नाय्; D5 6 प्रतिच्छिन्नाय् (for अवच्छन्नाय्) —b) Ś1 अदृश्येता, K1-3 D1 समुन्मे (K3 °दृश्ये )तां, D5 न्यदृश्येतां, T G3 4 अप° (for अद) —c) D5 6 प्रतिच्छन्नौ, D3 समा च्छिन्नौ (for °च्छन्नौ) —d) D4 नभसीव दिवाकर

43 D4 missing (cf v 1 35) Dn2 om. 43 (cf v 1. 41) B1 om 43-44 —a) D7 8 S (except G1, G5 missing) ततो (for अथ) —b) T G2 विव्याय (for °ध) —c) G1 4 M1.2 3 भरतश्रेष्ठम्

44 D4 missing (cf v 1 35) B1 om 44 (cf v 1. 43) Dn2 om. up to विव्याध (cf. v 1 41) D1 om. 44abc —b) K4 B (B1 om) Dc1 Dn1 दशभि; D1.3 निशितै (for नवभि) —c) T G2 विव्याय (for °ध) D1.2 श्रेष्ठो (for श्रेष्ठं) —After 44abc, D3 2 read 45b for the first time, repeating it in its proper place and om 44d —d) B1 Dn1 पर्वणा, D7 8 -पर्वभि (for °णाम्)

45 D4 missing (cf v 1 35) —After 45a, Dn2 ins

1176* धनुरन्यन्मदुत्तरम् ।
गृहीत्वा भरतश्रेष्ठो

—D2 6 read 45b for the first time after 44abc —b) Dn2 D2 6 (last two first time) S (G5 missing) भीमसेन शितै शरै —c) Dn2 D2 6 S (G5 missing) अपीडयद्रणमुखे

46 D4 missing (cf v 1 35) —a) Dn2 D2 6 निहत्य तान् (by transp), S (G5 missing) निहत्य तु (G3 नु) —b) D2 6 -भुज (for धनुश्) —d) Ś1 K3 D2.6 समार्दयत्, K1 2 D1 समाविनोत्, D3 2 S (G5 missing) समर्पयत् (for समा°)

47 D4 missing (cf. v 1 35) —b) K1 2 D1. 2.6-8 भारत (for मारिष)

48 D4 missing (cf v. 1 35) —a) D7 8 अथा परेण धनुषा —b) D5 6 महारथ (for °बल) —c) T G2 विव्याय (for °ध) Ś1 K3 निशितैस्, D5 6 नृप तिस् (for °तिं) —d) Ś1 K3 नृपतिं (for निशितैः).

49 D4 missing (cf. v. 1. 35) —a) D6 छित्वा (for क्षिप्रं) K3 तदस्य धनुषः क्षिप्रं —b) S (G5 missing) कृत (for लघु)

50 D4 missing (cf v 1. 35) —a) B2 Dc1 Dn1 D5 आत्तमात्रं (for °मात्तं) ※ Cd आतुमात्तं (sic)

स तदा छिद्यमानेषु कार्मुकेषु पुनः पुनः ।
शक्तिं चिक्षेप समरे सर्वपारशवीं शुभाम् ॥ ५१
अप्राप्तामेव तां शक्तिं त्रिधा चिच्छेद कौरवः ।
पश्यतः सर्वलोकस्य भीमस्य च महात्मनः ॥ ५२
ततो भीमो महाराज गदां गुर्वीं महाप्रभाम् ।
चिक्षेपाविध्य वेगेन दुर्योधनरथं प्रति ॥ ५३
ततः सा सहसा वाहांस्तव पुत्रस्य संयुगे ।
सारथिं च गदा गुर्वी ममर्द भरतर्षभ ॥ ५४

पुत्रस्तु तव राजेन्द्र रथाद्धेमपरिष्कृतात् ।
आप्लुतः सहसा यानं नन्दकस्य महात्मनः ॥ ५५
ततो भीमो हतं मत्वा तव पुत्रं महारथम् ।
सिंहनादं महच्चक्रे तर्जयन्निव कौरवान् ॥ ५६
तावकाः सैनिकाश्चापि मेनिरे निहतं नृपम् ।
ततो विचुक्रुशुः सर्वे हा हेति च समन्ततः ॥ ५७
तेषां तु निनदं श्रुत्वा त्रस्तानां सर्वयोधिनाम् ।
भीमसेनस्य नादं च श्रुत्वा राजन्महात्मनः ॥ ५८

C 7 7438
B. 7 166 61
K 7 167 61

---

गृहीतुं । ॐ — T G2-4 om. (hapl) 50$^{b-c}$ — $^{b}$) B1 2 5 G1 M3 4 अच्छिनत्- D2 5 भीमसेनस्य सोऽच्छिनत् — $^{c}$) D3 6 G1 M महावेजा (for °राज) — $^{d}$) K4 महोत्कट (for मदो°)

51 D4 missing (cf. v l. 35) — $^{a}$) B Dc1 Dn1 स तया, S (G5 missing) तया सं (for स तदा) B4 भिद्यमानेषु, D5 छाद्य°, D6 छिद्य° (for छिद्य°) — $^{b}$) D8 भीमप्रेक्षान् (for कार्मुकेषु) B4 ततस्तत (for पुन. पुन) — $^{c}$) Ś1 विच्छेद (for चिक्षेप) — $^{d}$) K2 Dc1 Dn2 D2 3. 5 Cd -पारसवीं (for °शवीं) B4 Dn2 D2 5 दृढा, G1 M (except M1) शिता (for शुभाम्) — After 51, B Dc1 Dn D5 G1 M ins

1177* मृत्योरिव स्वमार द्वि दीप्ता केतुशिखामिव ।
सीमन्तमिव कुर्वन्तीं नभसोऽग्निसमप्रभाम् ।

[(L 1) B1 अग्नि, Bom ed वह्नि (for केतु) —(L 2) M4 समततश्च (for सीमन्तमिव) B1 Dc1 Dn1 -शिखामिव (for -समप्रभाम्) Cv cites सीमन्त इव कुर्वती तमस° ]

52 D4 missing (cf. v l. 35) — $^{a}$) D5 7 8 इव (for एव) — $^{b}$) B (except B1) S (except G1 M1, G5 missing) द्विधा (for त्रिधा) — $^{d}$) M3 5 पार्थस्य (for भीमस्य) Dn2 D2 5 7 8 भीमसेनस्य चाग्रत

53 D4 missing (cf. v l. 35) — $^{a}$) D7 8 तदा (for ततो) — After 53$^{a}$, T G3 4 read 56$^{b}$ for the first time, repeating it in its proper place. M2 om 53$^{c}$-56$^{a}$ T G3 4 read 53$^{b}$ twice. — $^{b}$) T G3 4 (all first time) महाराजं (T °ज) (for °प्रभाम्) T G3. 4 (all second time) महावलपराक्रम — $^{c}$) D7 चिक्षेपातिवेगेन (submetric), D8 °प चातिवेगेन

54 D4 missing (cf v l. 35) M2 om. 54 (cf. v l. 53) — $^{a}$) D3. 6 व्यस्तास् (for वाहांस्) — $^{b}$) K4 D1 मारिष (for संयुगे) — $^{c}$) Dn1 सारथेश् D2 रथाद्, D5 रथ, T G3. 4 महा, G2 M4 तथा, M1 5 तदा (for गदा) — $^{d}$) Dn2 D5 ममर्दास्य रथ पुन

55 D4 missing (cf v l 35) M2 om 55 (cf v l 53) — $^{a}$) T G3 पुत्रस्य (for स्तु) — $^{b}$) K1 Dc1 Dn1 D6-8 -परिस्कृताद् (D8 °न्), B4 D8 पुरस्कृताद् (for परिष्कृताद्) K4 Dn2 D2 5 भीमाद्भीत प्रणश्य च (D2 प्रपश्यता, D5 प्रपश्यत), S (M2 om, G5 missing) रथं हे(G4 है)मपरिष्कृ(G3 स्कृ)त — $^{c}$) Ś1 (orig) आकर्णन्, Ś1 (sup lin) K1 2 4 D1 3 आरूढ° (Ś1 °ढौ); K3 आययौ, B2 3 प्राप्लुत, T G2 आप्लुत्य (for °त°) D3 राजा, D7 8 G3 4 राजन् (for यान) Dn2 D2 5 आरुरोह रथं चान्य — $^{d}$) Dn1 मदकस्य, T G3 4 नदनस्य (for नन्दकस्य) D7 8 महारथं (for °त्मन)

56 D4 missing (cf v l. 35) M2 om 56$^{a}$ (cf v l. 53) K4 om 56 — $^{a}$) T G1 3 4 M5 (*sup lin*) महाराज (for हत मत्वा) Ś1 K1-3 तेषां तु निनदं श्रुत्वा — M4 om 56$^{b}$, T G3 4 read it for the first time after 53$^{a}$ — $^{b}$) Ś1 K3 पुत्र (for पुत्रं) Ś1 K3 B3 Dc1 महाबल (for °रथम्) K1. 2 D1 तव पुत्रो महारथ, Dn2 D2 5 ज्ञाति(Dn2 निशा)मध्ये सुयोधन, M2 हतं मत्वा महारथं — $^{c}$) D7 8 तदा (for महच्) G1 M1-3 5 सिंहनादरव चक्रे — $^{d}$) B3 Dc1 Dn1 D3 6 निशि (for इव)

57 D4 missing (cf. v l. 35) — $^{a}$) D3 6 S (G5 missing) चैव (for चापि) — $^{b}$) K1 Dn2 D5 निहितं (for निहतं) Ś1 K3 मेनिरे नृपतिं हत, D3 निहतं मेनिरे भृश — $^{c}$) Dn D1 [s]ति (for वि-) Ś1 K3 ते च (for सर्वे) — $^{d}$) K1. 2 4 B Dc1 Dn1 D1 7 8 T G2-4 M3 4 ते हाहेति (for हा हेति च) D3. 6 हा हतेति पुन पुन

58 D4 missing (cf. v l 35) — $^{a}$) Dn2 च

C 7 7478 B 7 166 61 K 7 167 62

ततो युधिष्ठिरो राजा हतं मत्वा सुयोधनम् ।
अभ्यवर्तत वेगेन यत्र पार्थो वृकोदरः ॥ ५९
पाञ्चालाः केकया मत्स्याः सृञ्जयाश्च विशां पते ।
सर्वोद्योगेनाभिजग्मुर्द्रोणमेव युयुत्सया ॥ ६०
तत्रासीत्सुमहद्युद्धं द्रोणस्याथ परैः सह ।
घोरे तमसि मग्नानां निघ्नतामितरेतरम् ॥ ६१

इति श्रीमहाभारते द्रोणपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

# १४२

संजय उवाच ।
सहदेवमथायान्तं द्रोणप्रेप्सुं विशां पते ।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ १
सहदेवस्तु राधेयं विद्ध्वा नवभिराशुगैः ।
पुनर्विव्याध दशभिर्निशितैर्नतपर्वभिः ॥ २
तं कर्णः प्रतिविव्याध शतेन नतपर्वणाम् ।
सज्यं चास्य धनुः शीघ्रं चिच्छेद लघुहस्तवत् ॥ ३
ततोऽन्यद्धनुरादाय माद्रीपुत्रः प्रतापवान् ।
कर्णं विव्याध विंशत्या तदद्भुतमिवाभवत् ॥ ४
तस्य कर्णो हयान्हत्वा शरैः संनतपर्वभिः ।

---

(for तु) —[b]) D7 8 धन्विना, G4 -यौधिना —[c]) D5 तु (for च) —[d]) D2 5 राजा (for राजन्) M1 2 महास्वन (for °स्मन°)

59 D4 missing (cf v 1. 35) —[a]) K1 om राजा —[b]) Ś1 K (K5 missing) B5 श्रुत्वा (for मत्वा) —[c]) D5 अत्यवर्तत, M3 5 अभ्यधावत (for °वर्तत) T G2-4 पार्थेन (for वेगेन) —[d]) M4 यत (for यत्र)

60 D4 missing (cf. v 1 35) —[a]) D5 पाचाल्या, Bom ed पंचाला Dn2 संजया, D1-3 5-8 कैकया (for के) D3 G1 2 मात्स्या —[b]) Dn2 D2 5 संज (Dn2 कैके)याश्चेदयस्तथा —[c]) D3 चाजग्मुर् (for [अ]भिज°) —[d]) Dn1 आशु (for एव) Dn2 D2 5 जिघासया (for युयुत्सया)

61 D4 missing (cf v 1 35) —[a]) Dc1 Dn1 तदा (for तत्र) Dn2 D2 5 8 [अ]पि (for [आ]सीत्) D6 सुमहा- (for सुमहद्) —[b]) Ś1 K1-3 D1. 7 8 [अ]पि, Dn [आ]सीत्, D2 5 [अ]भूत् (for [अ]थ)

Colophon Ś1 K5 D4 G5 missing —*Sub-parvan* Editions घटोत्कचवध —*Adhy name* K1 2 4 B D (D4 missing) S (except M1 2, G5 missing) रात्रियुद्धं, Bom ed रात्रियुद्धे दुर्योधनापयान —*Adhy no* (figures, words or both) Dn1 166, D3 61, T G2-4 M3 162, G1 M1. 2 163, M4 5 161 —*Śloka no* Dc1 Dn1 63

## 142

☞ This adhy is missing in K5 D4 G5 (cf v 1 7 125 15, 141 35, 137 9)

1 Ś1 missing up to 9 (cf v 1 7 132 20) —[a]) T G2-4 M4 तथा (for अथ) —[b]) D7 8 द्रोणमेव (for °प्रेप्सु) B1. 3 5 Dc1 Dn महारथं, D2 5 महारणे, D3 महाद्युते, D6 महाद्युते (for विशां पते) —[c]) Dn1 पुत्रो; Dn2 D2 5 राजन् (for युद्धे) —[d]) Dn2 D2 5 सयुगे, S (G5 missing) वीर्यवान् (for भारत)

2 Ś1 missing (cf. v 1 1) —[b]) D2 6 भित्वा (for विद्ध्वा) Ś1 K3 सप्तभिर् (for नव°) —[c]) T G2 विव्याथ (for °ध) Dn2 D2 5 समरे, G2 नवभिर् (for दश°) —[d]) K4 B Dc1 Dn1 विशिखैर्, Dn2 D2 5 G2 नवभिर् (for निशितैर्) G3 सप्त, M5 (*sup lin*) नव (for नत) — After 2, D7 8 read 5[cd] for the first time, repeating it in its proper place

3 Ś1 missing (cf v 1 1) —[a]) T G2 प्रतिविव्याथ —[b]) K4 om (hapl) from शतेन up to विव्याध (in 4[c]) B4 (*sup lin*) चातेन, Dn1 विंशतेर्, D2 5 8 शरेण (for शतेन) B4 5 [आ]नतपर्वणां, Dn1 D1 2 5-8 G1 M1-3 5 नतपर्वणा —[c]) Ś1 K3 B3-5 सज्जं, D2 5 ध्वजं (for सज्यं) K3 चापि, D3 6 चाशु (for चास्य) D7 8 दिव्यं; T G2-4 क्षिप्रं (for शीघ्रं)

4 Ś1 missing (cf v 1 1). K4 om up to विव्याध

सारथिं चास्य भल्लेन द्रुतं निन्ये यमक्षयम् ॥ ५
विरथः सहदेवस्तु खड्गं चर्म समाददे ।
तदप्यस्य शरैः कर्णो व्यधमत्प्रहसन्निव ॥ ६
ततो गुर्वीं महाघोरां हेमचित्रां महागदाम् ।
प्रेषयामास समरे वैकर्तनरथं प्रति ॥ ७
तामापतन्तीं सहसा सहदेवप्रवेरिताम् ।
व्यष्टम्भयच्छरैः कर्णो भूमौ चैनामपातयत् ॥ ८
गदां विनिहतां दृष्ट्वा सहदेवस्त्वरान्वितः ।
शक्तिं चिक्षेप कर्णाय तामप्यस्याच्छिनच्छरैः ॥ ९
ससंभ्रमस्ततस्तूर्णमवप्लुत्य रथोत्तमात् ।
सहदेवो महाराज दृष्ट्वा कर्णं व्यवस्थितम् ।
रथचक्रं ततो गृह्य मुमोचाधिरथिं प्रति ॥ १०
तमापतन्तं सहसा कालचक्रमिवोद्यतम् ।
शरैरनेकसाहस्रैरच्छिनत्सूतनन्दनः ॥ ११
तस्मिंस्तु वितथे चक्रे कृते तेन महात्मना ।
वार्यमाणश्च विशिखैः सहदेवो रणं जहौ ॥ १२
तमभिद्रुत्य राधेयो मुहूर्ताद्भरतर्षभ ।
अब्रवीत्प्रहसन्वाक्यं सहदेवं विशां पते ॥ १३

C 7 7477
B 7 167 16
K 7 168 15

(cf v 1 3) — c ) T G2 विध्याथ

5 Ś2 missing (cf v 1. 1) — a ) D6 तत (for तस्य) — D7 8 read 5cd for the first time after 2 — d ) Ś1 शनैर्, D3 6 शरैर् (for द्रुत)

6 Ś2 missing (cf. v 1. 1) — b ) Ś1 K1 2 B1. 2 5 D1 2 5 6 T G1–4 M4 खड्ग (for खड्गं) Ś1 K1–3 समादधे (for °ददे) — c ) Dn2 शितैर्बाणैर् (for शरैः कर्णो) — d ) T G2 व्ययमत् (for व्यध°)

7 Ś2 missing (cf v 1 1) — a ) K3 B Dc1 Dn1 अथ (for ततो) K4 Dn2 D2 5 S (G5 missing) गदां (for महा-) — b ) Dn2 महाबलं, D2 5 °बलां, T G2–4 भयसयीं, G1 M महाघनां (for °गदाम्) — c ) D2 5 प्रेरयामास (for प्रेष°) Bom ed सक्रुद्धो (for समरे)

8 Ś2 missing (cf v 1 1) — b ) Ś1 (sup lin as in text) K1 2. 4 D1 वैकर्तन (for सहदेव) K4 B5 T G2–4 M4 -प्रचोदितां, B3 -करेरितां, D3 6–8 -समीरितां (for -प्रवेरिताम्) K3 D2 5 M3. 5 सहदेवेन प्रेरितां, Dn2 सहदेवेन प्रयोपितां (sic) — c ) B2 3 व्यस्तम्भयत्, D5 तां व्यष्टम्भयच्छरैश्च — d ) Dn2 भूमावेवाभ्यपातयत्, D2 तां च भूमाव°, D5 कर्णो भूमाव°

9 Ś2 missing (cf v 1 1) — b ) D2 5 त्वरन्निव (for त्वरान्वित) — d ) M4 स तामस्याच्छिनच्छरैः

10 Ś2 resumes — a ) Ś2 M4 असम्भ्रमस्, K4 B Dc1 Dn1 G1 M1–3. 5 स(K4 B3 स)सम्भ्रमं (M1 2 5 °मस्); Dn2 D2 5 माद्रीपुत्रस् (Dn2 °सुतस्), D1 ससंभ्रमस्, T G2–4 असंभ्रान्तस् (for ससंभ्रमस्) Ś K1–3 D1 तदा (for ततस्) — b ) B1 अवप्लुत्य (for °प्लुत्य) D7 रथोत्तमान् — c ) Dn2 D2 5 प्रज्वलन्निव रोषेण — K4 om 10cd — d ) D7 8 कर्णं दृष्ट्वा (by transp) S (G5 missing) अवस्थित (for व्यव°) — e ) Ś2 तदा गृह्य, B1 (marg) 2–5 Dc1 Dn1 प्रगृह्याजौ, D3. 6 गृहीत्वा तु (for ततो गृह्य) — f ) K2–4 Dn1 D2 6–8 G1 [आ]धिरथ, T G2–4 [अ]तिरथिं (G3 4 °थ) (for [आ]धिरथिं)

11 a ) Ś2 B Dc1 Dn D1 7 8 G1 तदापतद्वै (Ś2 D7 8 G1 °तत) सहसा — b ) K4 उदितं (for उद्यतम्) — d ) B4 5 Dc1 D2 T G3 4 आच्छिनत्

12 a ) B Dc1 Dn1 नि(B3 वि)हते, M3 विरथे (for वितथे) Ś1 K3 ततस्तु विरथे चक्रे, Ś2 K1 2 4 D1 ततो रथे विचक्रे तु, Dn2 D2 5 तस्मिञ्छिन्ने (D5 °ष्ठ) रथाङ्गे तु — b ) K3 D7 कृते*न, B Dc1 Dn1 सूतजेन (for कृते तेन) Dn2 D2 5 सहदेवस्तु मारिष — After 12ab, Dn2 D2 5 7 8 ins

1178* ईषादण्डकयोक्त्राश्च युगानि विविधानि च ।
हस्त्यङ्गानि तथाश्वांश्च मृतांश्च पुरुषान्बहून् ।
चिक्षेप कर्णमुद्दिश्य कर्णस्तान्व्यधमच्छरैः ।
स निरायुधमात्मानं ज्ञात्वा माद्रवतीसुत ।

[ (L 1) Dn2 -योक्त्राणि (for -योक्त्राश्च) — (L 2) D7 8 महाश्वांश्च (for तथा) — (L 3) D5 विक्षिपत् (for चिक्षेप) D7 8 [ऽ]पि (for तान्) ]

— c ) Dn1 कीर्यमाणस्, D7 8 दार्य (for वार्य°) B Dc1 Dn D2 5 7 8 G1 M1–3 5 तु (for च)

13 b ) D2 5 G1 M (except M4) मुहूर्तं (for °र्ताद्) Ś1 K3 मुहूर्तात्प्रहसन्निव — c ) Ś1 K3 अब्रवीद्भरतश्रेष्ठ- — d ) Dn2 D2 5 7 8 सुनिष्ठुरं (for विशां पते)

C 7 7477
B 7 167 15
K 7 168. 16

मा युध्यस्व रणे वीर विशिष्टै रथिभिः सह ।
सदृशैर्युध्य माद्रेय वचो मे मा विशङ्किथाः ॥ १४
अथैनं धनुषोऽग्रेण तुदन्भूयोऽब्रवीद्वचः ।
एषोऽर्जुनो रणे यत्तो युध्यते कुरुभिः सह ।
तत्र गच्छस्व माद्रेय गृहं वा यदि मन्यसे ॥ १५
एवमुक्त्वा तु तं कर्णो रथेन रथिनां वरः ।
प्रायात्पाञ्चालपाण्डूनां सैन्यानि प्रहसन्निव ॥ १६
वधप्राप्तं तु माद्रेयं नावधीत्समरेऽरिहा ।
कुन्त्याः स्मृत्वा वचो राजन्सत्यसंधो महारथः ॥ १७
सहदेवस्ततो राजन्विमनाः शरपीडितः ।
कर्णवाक्शल्यतप्तश्च जीविताभिरविद्यत ॥ १८
आरुरोह रथं चापि पाञ्चाल्यस्य महात्मनः ।
जनमेजयस्य समरे त्वरायुक्तो महारथः ॥ १९
विराटं सहसेनं तु द्रोणार्थे द्रुतमागतम् ।
मद्रराजः शरौघेण छादयामास धन्विनम् ॥ २०
तयोः समभवद्युद्धं समरे दृढधन्विनोः ।
यादृशं ह्यभवद्राजञ्जम्भवासवयोः पुरा ॥ २१
मद्रराजो महाराज विराटं वाहिनीपतिम् ।
आजघ्ने त्वरितं तीक्ष्णैः शतेन नतपर्वणाम् ॥ २२
प्रतिविव्याध तं राजा नवभिर्निशितैः शरैः ।

---

14 a) Ś2 वीरैर्, K4 [ऽ]धीर, D7 8 मूढ (for वीर) — b) T G1 इषुभि, G2 4 अरिभि (for रथिभि) — D8 om (hapl) 14c–15d K4 reads 14d–15e after 16 — d) D6 वधं, M4 वाचो (for वचो) B1 Dn2 नाभिशकिया, B5 S (G5 missing) मा विशंकथा, D6–8 माति (D6 नाम्य) शकिया

15 For the sequence in K4, cf v l 14 D8 om. 15abcd (cf. v l. 14) — a) D2 5 [अ]न्यद् (for [ए]न) — b) D2 8 नुदन् (for तुदन्) Dn2 D2 5–8 इदं (for वच) — c) D2 5 G3 एको (for एषो) Ś K1–3 Dn1 D1 तूर्णं, S (G5 missing) शूरो (for यत्तो) — e) Ś K1 D1 अत्र, K2 अद्य, B1–3 Do1 Dn1 D3 अनु (for तत्र) Dn2 D2 7 8 वा गच्छ, D5 चागच्छ, S (G5 missing) त्व गच्छ (for गच्छस्व)

16 For the sequence in K4, cf v l. 14 — a) D3 तद् (for त) — c) K1 प्रयाति (hypermetric), B1 3 Do1 Dn1 आयाद् (for प्रायाद्) Dn2 -राजस्य (for -पाण्डूनां) D2 5 प्रत्याचक्षत पाडूना — d) T G2–4 M4 बलानि (for सैन्यानि) Ś K (K5 missing) B1 Do1 Dn1 D1 7 8 प्रदहन्; T G2–4 प्रमथन् (for प्रहसन्)

17 a) K4 B1 D7 8 G3 4 M4 वधं (for वध) Ś K1–3 D1 च (for तु) Do1 (marg sec m as in text) Dn1 D1 राधेयो (for माद्रेय) — c) G3 4 स्मृत्वा कुन्त्या (by transp) — d) Bom ed महायशा (for °रथ)

18 a) Dn2 D2 3 5 6 त्रस्तो, D7 8 खिन्नो (for राजन्) — b) B4 सहसा (for विमना) D2 5 शस्त्र (for शर-) — c) K1 -शरतप्तश्, Dn2 D2 3, 5 6 -शल्यविद्धश् (for °तप्तश्) Ś K1–3 Do1 D1 8 तु (for च) — d) K2 निरवध्यत, Dn1 D2 5 T G2, 4 Cd °वद्यत (for °विद्यत)

19 a) Dn2 D2 3 6–8 T G2–4 तूर्णं, D5 त्यक्त्वा, G1 M शीघ्र (for चापि) — b) G1 M3 पाचालस्य Do1 महारथ (for °त्मन) — G3 om. 19c–20d — d) K1 2 D1 महामना (for °रथ)

20 G3 om 20 (cf v l 19) Before 20, G1 M1 2 ins संजय — a) B4 5 T1 G2 4 M3. 5 (inf lin as in text) विराट सहसैन्य तु, Dn1 °ट सहसेनेन, D7 8 °टं तु शतानीकं — b) B3–5 Do1 Dn1 द्रोण वै, D2 कर्णार्थे, D3. 6 द्रोणार्थं (for °र्थे) D7 8 [ऽ]द्भुतम् (for द्रुतम्) M4 आद्रुत (for आगतम्) T G1 मद्रराजमयोधयत्, G2 द्रोणप्रेप्सुं महारथं — K2 om. 20cd — c) Ś शरौघेन — d) Dn2 सर्वत, D2 5 सर्वश (for धन्विनम्)

21 c) Dn1 अभवद् (for ह्य°) D7 8 T G2–4 युद्धं (for राजञ्) — d) Dn1 D2 जृम्भ; Dn2 बलि-, D2, 5 वृत्र (for जम्भ-). Dn1 G1 M इव (for पुरा).

22 b) S (G5 missing) पृतना- (for वाहिनी-) D6 T G2 -पति (for पतिम्) — c) K4 B Do1 Dn D2 3 5 7 S (except G3, G5 missing) त्वरित (for °तं) B1 5 Do1 Dn1 बाणै, B2–4 तूर्णं (for तीक्ष्णै) — d) B4 G2 शरेण (for शतेन) B5 [आ]नत- (for नत-) B3 4 G2 M3 5 -पर्वणा, D2 5 -पर्वभि (for पर्वणाम्) G1 M1 2 शतशोथ सहस्रश — After 22, D8 reads 24ab

पुनश्चैव त्रिसप्तत्या भूयश्चैव शतेन ह ॥ २३
तस्य मद्राधिपो हत्वा चतुरो रथवाजिनः ।
सूतं ध्वजं च समरे रथोपस्थादपातयत् ॥ २४
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
तस्थौ विस्फारयंश्चापं विमुञ्चंश्च शिताञ्शरान् ॥ २५
शतानीकस्ततो दृष्ट्वा भ्रातरं हतवाहनम् ।
रथेनाभ्यपतत्तूर्णं सर्वलोकस्य पश्यतः ॥ २६
शतानीकमथायान्तं मद्रराजो महामृधे ।
विशिखैर्बहुभिर्विद्ध्वा ततो निन्ये यमक्षयम् ॥ २७
तस्मिंस्तु निहते वीरे विराटो रथसत्तमः ।
आरुरोह रथं तूर्णं तमेव ध्वजमालिनम् ॥ २८
ततो विस्फार्य नयने क्रोधाद्द्विगुणविक्रमः ।
मद्रराजरथं तूर्णं छादयामास पत्रिभिः ॥ २९
ततो मद्राधिपः क्रुद्धः शतेन नतपर्वणाम् ।
आजघानोरसि दृढं विराटं वाहिनीपतिम् ॥ ३०
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
कश्मलं चाविशत्तीव्रं विराटो भरतर्षभ ।
सारथिस्तमपोवाह समरे शरविक्षतम् ॥ ३१
ततः सा महती सेना प्राद्रवन्निशि भारत ।
वध्यमाना शरशतैः शल्येनाहवशोभिना ॥ ३२

C 7 7497
B 7 167 36
K 7 168 35

---

23 K₁ om. 23ᵃ–24ᵇ — ᵃ) T G₃ प्रतिविव्याध (for °ध) B₁–₄ Dc₁ Dn₁ D₃ मत्स्यो, B₅ D₂ राजन् (for राजा) — ᵇ) D₁ ₈ नवभिर्नतपर्वभि — ᶜ) Dn D₁ ₂ ₅ ₈ चैव, S (G₅ missing) चान्यैस् (for चैव) — ᵈ) D₂ चैवं (for चैव) Ś₂ K₁ ₂ B₁ Dn₁ D₂ M₁ च, B₂–₅ Dc₁ Dn₂ D₅ T G₁–₃ M₁–₂ ₅ तु (for ह)

24 K₁ om 24ᵃᵇ (cf v l 23) D₃ reads 24ᵃᵇ after 22 — ᶜ) Dn₂ D छत्रं, D₂ छत्र (for सूत) G₃ ₄ रथ (for ध्वज) — ᵈ) D₁ ₈ अपाहरत् (for अपातयत्) Ś₂ रथनीडादपाहरत्, K₁ B Dc₁ Dn D₃ ₅ S (G₅ missing) शराभ्यां सन्य(B₁ मत्य, Dn₂ D₅ G₁ M स न्य, G₄ मनि)पातयत्

25 ᵇ) B₁ ₂ Dc₁ Dn₁ आप्लुत्य स (for अवप्लुत्य) K₄ D₁ रथोत्तम, B Dc₁ Dn D₅ ₆ S (G₅ missing) महीपति (for महारथः) — ᶜ) G₁ ₃ ₄ M विस्फारयंश्च — ᵈ) K₁ च शतान्, K₄ D₁ ₂ ₅ ₇ ₈ निशितान्, M (except M₁) विशिखान् (for च शितान्) B₁ ₃ Dc₁ Dn₁ विमुचश्च शिलाशितान्

26 ᵃ) Dc₁ Dn₁ श्रुतानीकस् Dn₂ D₃ ₅ ₆–₈ तु त (for ततो) — ᵇ) K₂ भ्रातरं रथवाहिनं, M₄ °रं विरथं तदा — ᶜ) B₁ ₃ Dc₁ शल्यं (for तूर्णं)

27 ᵃ) Dc₁ Dn₁ श्रुतानीकम् D₃ ₆ ₇ [आ]यातं (for [आ]यान्तं) — ᵇ) Ś₁ शल्यराजो (for मद्र°) Dn₂ D₂ ₅ महीपति (for महामृधे) — ᵈ) Ś₁ शरैर् (for ततो)

28 ᵇ) K₁ रथसत्तम, Dn₂ D₃ वाहिनीपति (D₃ °तिं), D₁ ₈ नरसत्तम (for रथसत्तम) — ᶜ) D₂ हतारोह (sic) (for आरुरोह) G₂ रथात् (for रथ) Dn₂ हतारोहाद्रथात्तूर्णं, D₅ हतारोहते तूर्णं च (sic) — D₂ ₈ ₆ om (hapl) 28ᵈ–29ᶜ — ᵈ) Dn₂ तमेवारुह्य तदा

29 D₂ ₈ ₆ om 29ᵃᵇᶜ (cf v l 28) — ᵃ) G₁ ₃ ₄ M विस्फार्य — G₃ repeats 29ᵈ after 31ᶜ — ᵈ) T G₁ ₂ ₃ (both times) ₄ M पार्थिव (for पत्रिभि) D₅ आच्छादयत पत्रिभि

30 ᵃ) D₆ (marg as in text) तूर्णं, S (G₅ missing) शूर (for क्रुद्ध) — ᵇ) Dc₁ D₂ ₆ शरेण (for शतेन) K₃ B₁ D₂ ₅ ₈ G₁ M (except M₁) नतपर्वणा, B₁ Dc₁ D₁ ₆ G₄ [आ]नतपर्वणा — ᶜ) Dn₂ S (G₅ missing) भृश, D₂ ₅ क्रुद्धो, D₃ ₆ व्यूढे (for दृढ)

31 D₂ om 31ᵃᵇᶜᵈ — ᵃ) D₆ सोपि (for सोऽति) Dn₂ T G₂–₄ बलवता (for महाराज) — ᵇ) D₅ रथोपस्थम् — ᶜ) K₁ (before corr) Dn₂ D₅ S (G₅ missing) तूर्णं (for तीव्र) — After 31ᶜ, G₃ repeats 29ᵈ — ᵈ) Dn₂ स विराटो महारथ, G₁ M (except M₁) विराटो वाहिनीपति — ᵉ) Dc₁ D₆ अथोवाह (for अपो°) — ᶠ) B (except B₅) समरात्, Dc₁ समंतात् (for समरे) Dn₁ D₂ ₅ शरैस्तु क्ष(D₅ °स्वक्ष)तविक्षत

32 ᵃ) T G₂–₄ तु (for सा) Ś₁ भारती; K₁ ₂ ₄ S (G₅ missing) पांडवी (for महती) — ᵇ) Dn₂ om from निशि up to राजेन्द्र (in 33ᵃ) — ᶜ) G₃ ₄ विध्यमाना (for वध्य°) Ś₂ K₁ ₂ शरव्रातै (for °शतै) — D₆ reads 32ᵈ on marg (sec m)

33 Dn₂ om up to राजेन्द्र (cf v l 32) Ś₁ D₆

C 7 7497
B 7 167 35
K 7 169 36

तां दृष्ट्वा विद्रुतां सेनां वासुदेवधनंजयौ ।
प्रायातां तत्र राजेन्द्र यत्र शल्यो व्यवस्थितः ॥ ३३
तौ तु प्रत्युद्ययौ राजन्राक्षसेन्द्रो ह्यलम्बुसः ।
अष्टचक्रसमायुक्तमास्थाय प्रवरं रथम् ॥ ३४
तुरंगममुखैर्युक्तं पिशाचैर्घोरदर्शनैः ।
लोहितार्द्रपताकं तं रक्तमाल्यविभूषितम् ।
कार्ष्णायसमयं घोरमृक्षचर्मावृतं महत् ॥ ३५
रौद्रेण चित्रपक्षेण विवृताक्षेण कूजता ।
ध्वजेनोच्छ्रिततुण्डेन गृध्रराजेन राजता ॥ ३६
स बभौ राक्षसो राजन्भिन्नाञ्जनचयोपमः ।
रुरोधार्जुनमायान्तं प्रभञ्जनमिवाद्रिराट् ।
किरन्बाणगणान्राजञ्शतशोऽर्जुनमूर्धनि ॥ ३७
अतितीव्रमभूद्युद्धं नरराक्षसयोर्मृधे ।
द्रष्टॄणां प्रीतिजननं सर्वेषां भरतर्षभ ॥ ३८
तमर्जुनः शतेनैव पत्रिणामभ्यताडयत् ।
नवभिश्च शितैर्बाणैश्चिच्छेद ध्वजमुच्छ्रितम् ॥ ३९

---

om 33 — $^a$) D2 5 द्रवतीं (for विद्रुता) — $^c$) Ś K (K5 missing) B1 (marg) Dc1 Dn1 D1 3 7 8 प्रयातौ, D2 5 T आयातौ (for प्रायाता) — $^d$) M4 यत (for यत्र)

34 $^a$) Dn1 तत॰ (for तौ तु) — $^b$) Ś1 (before corr as in text) K1 ह्यलंबुल, Ś2 ॰बस, K2-4 B2-5 Dn2 D1 3 ॰बुप, B1 Dc1 ॰बल॰, D3 6 G4 M3 5 ह्यलायुध, T G3 M4 हुलायुध, G1 M1 2 हुळायुध (for ह्यलम्बुस) — $^d$) Ś2 D7 8 विपुल (for प्रवरं) D2 3 5 6 आस्थाय रथमु (D5 ॰स)त्तमं

35 $^a$) D3 6 -खुरैर्, D7 8 G4 -चरैर् (for -मुखैर्) Dn2 D2 5 तुरगवदनैर्युक्त — D8 om 35$^c$–36$^b$ — $^c$) Dc1 Dn1 रोहितार्द्र (for लोहितार्द्र) D2 5 पताकात, D7 8 ॰कांत, G1 M ॰क च, G2 ॰काढ्य (for ॰क तं) — $^d$) Dn2 D2 रथ, D5 रय, D7 8 रुक्म, T G2 चित्र (for रक्त) G1 M (except M4) विभूपण (for ॰पितम्) — $^e$) D2 5 T G1 3 4 M1-4 कृष्णायसमय घोरम् — $^f$) D3 6 -चर्मवृतं, D7 -वर्मावृतं (for -चर्मा वृतं) B Dc1 Dn D2 5 ऋक्षचर्मसमावृतं

36 K3 D3 om 36$^{ab}$ (for D3, cf v l 35) — $^a$) D2 क्रौणेन (for रौद्रेण) Ś K1 2 D1 क्षिप्त (for चित्र) D5 रौद्रेण व्यादितास्येन — Dn1 om (hapl) 36$^{cd}$, Dc1 reads it on marg (sec m) — $^c$) B Dn2 D2 5 7 8 S (G5 missing) दंष्ट्रेन (for -तुण्डेन) — $^d$) K4 राजिता; Dc1 पत्रिणा (for राजता) Dn2 D2 5 S (G5 missing) गृध्ररूपेण पक्षि(Dn2 D5 ॰त्रि)णा

37 $^a$) D3 6 सर्वतो, T G2 4 स बली, G3 damaged (for स बभौ) — $^b$) B (except B1) Dc1 Dn1 D7 8 -चयप्रभ (for -चयोपम) — $^c$) D7 रुरुधे (for रुरोध) — $^e$) Dn1 व्यकिरन् (hypermetric) (for किरन्) B5 Dn2 D5 इषुगणान्, D2 रिपु॰ (for बाण॰) — K4 D1 om (hapl) 37$^f$–42$^c$ — $^f$) Dn2 प्रायशो (for शतशो) Ś K1-3 D3 6 रण (for ऽर्जुन) D7 8 शतशोय सहस्रश

38 K4 D1 om 38 (cf v l 37) — $^a$) D3 6-8 -रौद्रम् (for -तीव्रम्) B3-5 महद्, Dn2 भवद् (for अभूद्) — $^b$) B3-5 Dc1 Dn1 तदा (for मृधे) — B5 om 38$^{cd}$ — $^c$) K2 द्राष्ट्राणा (sic), Dn2 दष्ट्रिणां, D3 6 दसानां, D7 8 शूराणां, S (G5 missing) ईक्षितृ- (for द्रष्टॄणां) — $^d$) Dn2 D2 5 S (G5 missing) सर्वेषामेव (Dn2 ॰षा तत्र, D2 5 ॰षा तव) भारत — B1-4 Dc1 Dn1 D5 ins after 38 B5 after 38$^{ab}$

1179* गृध्रकाकबलोलूककङ्कगोमायुहर्षणम् ।

[ Dn1 -कटोलूक-; D5 -बको॰ (for -बलो॰) Dn1 -काक (for कङ्क) ]

On the other hand, M4 ins after 38

1180* तौ प्रगृह्य महावेगौ धनुषी भीमनिस्वने ।
प्रच्छादयेतामन्योन्य ततक्षन्तौ महेषुभि ।
तत्रासीत्सुचिर कालं युद्ध सममिवाभवत् ।
तत पार्थो महेष्वासो दिव्यं विष्फारयन्धनु ।
आपूरयन्दिशो बाणैर्ज्याक्षेपेण विनादयन् । [5]

39 K4 D1 3 om 39 (for K4 D1, cf v l 37) — $^a$) Ś1 K3 तद् (for तम्) Ś K1-3 D3 6 शितैनैव, Dn2 D2 5 शरै॰ पत्त्रिर्, D7 शतैरेव (for शतेनैव) — $^b$) Ś1 K3 D3 6 पत्रिणा, Ś2 K2 शरेण (for पत्रिणाम्) Ś K1-3 Dn1 D3. 6 7 समताडयत् (for अभ्य॰) Dn2 D2 5 अलवुप(D2 ॰शि, D5 ॰स)मताडयत् — $^c$) G3 partly damaged Dn2 D2 5 दशभिश् (for नव॰) Ś1 K1 3 B1-3 नि (for च) — Ś2 om (hapl) 39$^d$–40$^a$ — $^d$) Ś1 K1-3 D3. 6 7 विव्याध भरतर्षभ,

सारथिं च त्रिभिर्बाणैस्त्रिभिरेव त्रिवेणुकम् ।
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान् ।
विरथस्योद्यतं खड्गं शरेणास्य द्विधाच्छिनत् ॥ ४०
अथैनं निशितैर्बाणैश्चतुर्भिर्भरतर्षभ ।
पार्थोऽर्दयद्राक्षसेन्द्रं स विद्धः प्राद्रवद्भयात् ॥ ४१
तं विजित्यार्जुनस्तूर्णं द्रोणान्तिकमुपाययौ ।
किरञ्शरगणान्राजन्नरवारणवाजिषु ॥ ४२
वध्यमाना महाराज पाण्डवेन यशस्विना ।
सैनिका न्यपतन्नुर्व्यां वातनुन्ना इव द्रुमाः ॥ ४३
तेषु तूत्साद्यमानेषु फल्गुनेन महात्मना ।
संप्राद्रवद्बलं सर्वं पुत्राणा ते विशां पते ॥ ४४

इति श्रीमहाभारते द्रोणपर्वणि द्विचत्वारिंशदधिकशततमोऽध्याय. ॥ १४२ ॥

# १४३

संजय उवाच ।
शतानीकं शरैस्तूर्णं निर्दहन्तं चमूं तव ।
चित्रसेनस्तव सुतो वारयामास भारत ॥ १
नाकुलिश्चित्रसेनं तु नाराचेनार्दयद्भृशम् ।

C 7 7313
B 7 168 2
K 7 169 2

B Dc1 Dn D2 6 ध्वजं चिच्छेद भारत ( Dn2 D2 5 तस्य तु )

40 K4 D1 om 40 ( cf v l 37 ) Ś2 om 40[a] (cf. v l. 39 ) —[a] ) Ś K1-3 D3 6-8 ध्वजम् ( for धनुर् ) —[b] ) K2 ह्रदिर्तं, D3 6 T G3 4 ह्रदूत ( for ह्यत्र ) Dn2 D2 5 पुन सज्य ( D5 °ज ) कृतं चाप —[f] ) Dn2 D2 5 तदप्यस्य ( for शरेणास्य ) Ś K1-3 D2 3 6-8 [अ]करोत् ( for [अ]च्छिनत् )

41 K4 D1, 7 8 om. 41 ( for K4 D1, cf v l 37 ) —[a] ) B1 om from अथैनं up to शर ( in 42[d] ) D8 6 विशिखैर् ( for निशितैर् ) —[c] ) K2 Dn1 पार्थोद्रवद्, B5 Dn2 D5 पार्थोविध्यद्, D3 समार्दयद्, D6 समाद्रवद्, G3 damaged ( for पार्थोऽर्दयद् ) —[d] ) G4 स ( for स )

42 K4 D1 om 42[abc] ( cf v l 37 ) B4 om. up to शर ( cf v l 41 ) —[a] ) T G2 3 M5 सर्व्ये, G1 M1-3 सर्वे, G4 M4 सवे ( for तूर्णं ) —[b] ) M3 5 द्रोणानीकम् ( for द्रोणान्तिकम् ) Dn2 D6 उपाद्रवत् ( for °ययौ ) Ś2 द्रोणस्यान्तिकमाययौ —[c] ) Ś2 K2 बाणगणान्, D2 6 शरशतान्, D3 गणशरान्, S ( G5 missing ) इषुगणान् ( for शर° ) —[d] ) Dc1 वर-, G3 4 रथ- ( for नर- )

43 [a] ) Dn2 D2 6 युध्यमाना ( for वध्य° ) —[b] ) Dn1 यशस्विनां —D2 5 om ( hapl ) 43[c]-44[b] —[c] ) B1 भूमौ ( for उर्व्यां ) —[d] ) K2 वातनुन्नाद्विधाकरोत् (sic )

44 D2 5 om 44[ab] ( cf v l 43 ) —[a] ) Ś2 K2 4 D1 वै वध्यमानेषु, B1 2 4 तूच्छाद्य°, D8 च छाद्य°, D5 तच्छाद्य°, D5 सछाद्य° ( for तूत्साद्य° ) —[b] ) K4 B Dc1 Dn1 D1 3 6-8 फाल्गुनेन, Dn2 S ( G5 missing ) पाण्डवेन ( for फल्गुनेन ) Ś2 K2 4 Dn2 D1 यशस्विना ( for महात्मना ) —[c] ) Dn2 सम्प्राद्रवन्मृधे सर्वे —[d] ) B4 महीपते ( for विशां पते ) Dn2 D2 5 मृगा इव भयार्दिता

Colophon K5 D4 G5 missing — *Sub-parvan* Editions घटोत्कचवधपर्व — *Adhy name* Ś2 K1, 2 4 B Dc1 Dn D1 2 5-8 G1 M ( except M4 ) रात्रियुद्ध, Bom ed रात्रियुद्धे अलम्बुषपराभव — *Adhy no* (figures, words or both ) Dn1 167, D2 168, D8 62, T G2 ( marg sec m ) 3 4 163, G1 M1 2 5 ( sup lin ) 164, G2 ( orig ) 93, M3-5 162 — *Śloka no* Dc1 Dn1 47

## 143

☞ This adhy is missing in K5 D4 G5 ( cf v l. 7 125 14, 141 35, 137 9 )

1 [a] ) Dn2 D2 5 शरैस्तीक्ष्णैर्, G2 ( also as in text ) तथायातं, G3 lacuna ( for शरैस्तूर्णं ) —[b] ) B5 इव ( for तव )

2 Dn2 om 2-3 —[a] ) G3 नकुलिश्च ( for ना ) D7 8 च ( for तु ) —[b] ) Ś2 K1-3 D1 [अ]हनद्, D3 6 [अ]वधीद् ( for [अ]र्दयद् ) Ś1 K4 D2 5 विद्धा पचभिराशुगै, D7 8 S ( except M3-5, G5 missing ) नारा-

C 7 7513
B 7 168 2
K 7 169 2

स च तं प्रतिविव्याध दशभिर्निशितैः शरैः ॥ २
चित्रसेनो महाराज शतानीकं पुनर्युधि ।
नवभिर्निशितैर्बाणैराजघान स्तनान्तरे ॥ ३
नाकुलिस्तस्य विशिखैर्वर्म संनतपर्वभिः ।
गात्रात्संच्यावयामास तदद्भुतमिवाभवत् ॥ ४
सोऽपेतवर्मा पुत्रस्ते विरराज भृशं नृप ।
उत्सृज्य काले राजेन्द्र निर्मोकमिव पन्नगः ॥ ५
ततोऽस्य निशितैर्बाणैर्ध्वजं चिच्छेद नाकुलिः ।
धनुश्चैव महाराज यतमानस्य संयुगे ॥ ६
स छिन्नधन्वा समरे विवर्मा च महारथः ।
धनुरन्यन्महाराज जग्राहारिविदारणम् ॥ ७
ततस्तूर्णं चित्रसेनो नाकुलिं नवभिः शरैः ।
विव्याध समरे क्रुद्धो भरताना महारथः ॥ ८
शतानीकोऽथ संक्रुद्धश्चित्रसेनस्य मारिष ।
जघान चतुरो वाहान्सारथिं च नरोत्तमः ॥ ९
अवप्लुत्य रथात्तस्माच्चित्रसेनो महारथः ।
नाकुलिं पञ्चविंशत्या शराणामार्दयद्बली ॥ १०
तस्य तत्कुर्वतः कर्म नकुलस्य सुतो रणे ।
अर्धचन्द्रेण चिच्छेद चापं रत्नविभूषितम् ॥ ११
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।

---

चैरर्दय( D7 8 °राहन )न्कृश — c ) G3 damaged K4 G1 M3–5 तु ( for च ) T G2 विव्याथ ( for °ध ) — d ) T G2 4 नवभिर् ( for दश° ) — After 2, K1. 3 read 8cd for the first time, repeating it in its proper place, while D1 reads 8cd after 2

3 Dn2 om 3 ( cf v 1 2 ) — c ) D2 5 राजन् ( for बाणैर् ) — d ) D2 5 शरैर्विव्याध वक्षसि

4 c ) G3 damaged Ś1 K1. 2 D2 7 स च्या( D2 स्रा )वयामास ; Ś2 G1 प्रच्या°, D5 सस्रा°, D8 सश्रा° ( for सच्या° )

5 a ) B2 वा ( for सो ) — d ) G3 damaged K1 D6 पन्नगा

6 a ) D3 6 विशिखैर् ( for निशितैर् ) — b ) Dn2 चिक्षेप ( for चिच्छेद ) — d ) D8 यतमानश्च, G1 घटमानस्य ( for यत° ) Ś2 नाकुलि· ( for सयुगे )

7 K4 om 7–10 — a ) S ( G5 missing ) स ( for स ) Dn2 D2 5 विरथो ( for समरे ) — b ) G3 damaged — cd ) Dn2 D2 5 अथान्यद्धनुरादाय सुदृढं ( D5 सदृश ) वेगवत्तर

8 K4 om 8 ( cf v 1 7 ) D1 om 8ab — a ) B5 om चित्र — b ) T G2–4 निशितै ( for नवभि ) Dn2 D2 5 नाकुलिं ( Dn2 °ल ) नतपर्वभि —K1 3 read 8cd for the first time after 2, while D1 reads it after 2 — c ) T G2 विव्याथ K1 ( first time ) D1 चैन, K3 ( first time ) तात ( for क्रुद्धो ) Dn2 D2 5 शरैर्विव्याध समरे — d ) K1 ( both times ) Dc1 D1 7 8 T G1–4 M1, 2 भारतानां ( for भ° ) K1, 3 ( both first time ) D1 G1 M1. 2 महारथ, G2 ( also as in text ) पितामह ( for महारथ ) —After 8, Dn2 reads 10cd for the first time, repeating it in its proper place

9 K4 om 9 ( cf v 1 7 ) D1 om ( hapl ) 9a–13b D7 repeats and D8 reads 9 after 12 — a ) T G2–4 [ s ]पि ( for ऽथ ) Ś1 K3 D7 ( second time ) 8 शतानीक च ( D7 8 °कस्य ) सरब्धस्, Ś2 K1 2 पुनश्चैवापि सरब्धस् — Ś K1–3 om ( hapl ) 9b–10a — b ) D7 ( second time ) 8 चित्रसेनश्च ( for °सेनस्य ) Dn2 D2 5 भारत ( for मारिप ) — c ) D3 6 न्यवधीच्, D7 ( second time ) 8 व्यहनच्, T G2–4 M3–5 व्यथ ( G3. 4 M3–5 °ध )मच् ( for जघान ) — d ) Dn2 महाबल°, D2 5 7 ( first time ) महारथ , D3 6 रथोत्तमात्, D7 ( second time ) 3 रथोत्तम , T G2–4 M3–5 शरोत्तमै ( for नरोत्तम ) G1 M1 2 सूत चापि शरोत्तमै

10 K4 D1 om 10 ( cf v 1 7, 9 ) Ś K1–3 om 10a ( cf v 1. 9 ) — a ) Dn2 D2 5 7 8 आप्लुत्य स ( for अवप्लुत्य ) — b ) G3 partly damaged Dn2 D2 5 महायशा , S ( G5 missing ) °बल ( for °रथ ) —Dn2 reads 10cd for the first time after 8 — d ) D2 5 अर्पयद्, D6 G1. 3 4 M4 अर्दयद् ( for आर्द° ) Ś1 K3 पुन ( for बली )

11 D1 om 11 ( cf. v 1 9 ) — a ) Ś2 transp तस्य and तत् Ś1 K3 कृत्स्नं ( for कर्म ) — d ) Dn2 D2 5 हेम , T G1 2 4 M3–5 रुक्म-, G3 lacuna, M1. 2 रुग्म ( for रत्न ) Dn2 परिस्कृतं ( for -विभूषितम् )

12 D1 om 12 ( cf v 1. 9 ) — a ) G1 3. 4 M सं- ( for स ) — c ) Dn2 D5 G1 M शीघ्रं ( for तूर्णं ).

आरुरोह रथं तूर्णं हार्दिक्यस्य महात्मनः ॥ १२
द्रुपदं तु सहानीकं द्रोणप्रेप्सुं महारथम् ।
वृषसेनोऽभ्ययात्तूर्णं किरञ्शरशतैस्तदा ॥ १३
यज्ञसेनस्तु समरे कर्णपुत्रं महारथम् ।
षष्ट्या शराणां विव्याध बाह्वोरुरसि चानघ ॥ १४
वृषसेनस्तु संक्रुद्धो यज्ञसेनं रथे स्थितम् ।
बहुभिः सायकैस्तीक्ष्णैराजघान स्तनान्तरे ॥ १५
तावुभौ शरनुन्नाङ्गौ शरकण्टकिनौ रणे ।
व्यभ्राजेतां महाराज श्वाविधौ शललैरिव ॥ १६
रुक्मपुङ्खैरजिह्माग्रैः शरैश्छिन्नतनुच्छदौ ।
रुधिरौघपरिक्लिन्नौ व्यभ्राजेतां महामृधे ॥ १७
तपनीयनिभौ चित्रौ कल्पवृक्षाविवाद्भुतौ ।
किंशुकाविव चोत्फुल्लौ व्यकाशेतां रणाजिरे ॥ १८
वृषसेनस्ततो राजन्नवभिर्द्रुपदं शरैः ।
विद्ध्वा विव्याध सप्तत्या पुनश्चान्यैस्त्रिभिः शरैः ॥ १९
ततः शरसहस्राणि विमुञ्चन्विबभौ तदा ।

C 7 7531
B 7 168 20
K. 7 169 20

— After 12, D- repeats and D3 reads 9

13 D1 om 13^ab (cf v 1 9) — ^a) Ś2 K1 2 4 Dn2 महानीक (for सहा°) — D7 om (hapl.) 13^c–14^b G4 om. 13^c–15^b — ^c) S (G4 om., G5 missing) राजन् (for तूर्णं) Dn2 वृषसेनो महाराज, D1 चित्रसेनस्ततस्तूर्णं — ^d) Dc1 शतशरैस्, T G2 3 इषुगणैस् (for शरशतैस्) Ś1 D3 तथा (for तदा) Ś2 K1 2 4 D1 किरन्शरशतान्बहून्

14 D2 om. 14^ab, G4 om 14 (for both, cf v 1 13) — ^b) D5 महारथ (for °रथम्) — M3–5 om 14^c–15^b — ^c) T G2 विव्याथ — ^d) Dn2 वा विभो, D2 5 चाभिभो, D3 6 वीर्यवान् (for चानघ).

15 G4 M3–5 om 15^ab (cf v 1. 13, 14) — ^ab) Ś2 K1, 2 transp वृषसेन and यज्ञसेनं D1 यज्ञसेनं (for वृषसेनस्) D2 5 याज्ञसेनिं (for यज्ञसेन) D5 रथ स्थित, T G2 3 महारथ — ^c) Dn2 D2 5 तूर्णम्, D7 8 तीव्रैर् (for तीक्ष्णैर्) — After 15, D3 reads 17^ab

16 ^a) D3 om from नुन्नाङ्गौ up to जिह्माग्रैं (in 17^a) Ś1 K3 भुग्नागौ, D6 भिन्नागौ (for -नुन्नाङ्गौ) — ^b) Ś2 K2 B1 Dn1 D6 कटकितौ (for कण्टकिनौ) — D3 om 16^cd — ^c) B5 विभ्राजेता, Dn2 D2 5 6 व्यरा° (for व्यभ्रा°) — ^d) D2 5 7 श्वाविद्धौ, S (except G2, G5 missing) °द्धौ (for °धौ) Ś K (K5 missing) D1, 2 5 शलभैर्, D7 सल्लिलैर् (for शललैर्)

17 D2 om. up to जिह्माग्रैं (cf v 1 16) Dc1 Dn1 om 17^a–18^b D5 6 repeat 17–18 after 7 144 4 D3 reads 17^ab after 15 — ^a) B D3 प्रसन्नाग्रैं (for अजिह्माग्रैं) — ^b) D3 शार (for शरैश्) K1 छन्न, D2 छिन्नौ (for छिन्न) D3 om from तनु up to क्लिन्नौ (in 17^c) B1 -परिच्छदौ, B6 तनुच्छदैं, D5 6 (both second time) -वनुच्छिदौ (for तनुच्छदौ). Dn2 D2 5 (first time) शरैः संनतपर्वभि — Dn2 om 17^c–18^d — ^c) G2 रुधिरेण (for °रौघ) B1 परिच्छन्नौ, D2 प्रतिच्छन्नौ, D5 (first time) परिच्छिन्नौ (for °क्लिन्नौ) — ^d) B5 D3 6 (first time) व्यराजेता (for व्यभ्रा°) D2 5 (first time) G1 M1 2 महारणे (for °मृधे)

18 For the repetition in D5 6, cf v 1 17 Dc1 Dn1 om 18^ab, Dn2 om 18 (for all, cf. v 1 17) D3 om 18^ab — ^a) D6 (second time) तापनीय- — ^b) D5 6 (both second time) 7 8 द्रुमौ (for [अ]द्भुतौ) — ^c) D2 5 (first time) पुष्पाढ्यौ (for चोत्फुल्लौ) — ^d) Ś1 K1 3 D5 6 (last two second time) T G2 3 चकाशे (Ś1 K3 °शा)ते, Ś2 व्यकाशेते, K2 4 D1 2 5 (first time) 7 8 प्र(K2 D7 8 च)काशेता, G1 M1 2 व्यरोचेतां, M3–5 प्रकाशेते (for व्यकाशेता) D3 6 (first time) रुधिरौघपरिप्लुतौ

19 ^b) D2 5 निशितैं (for द्रुपद) Ś1 K4 S (G5 missing) रणे (for शरै) B Dc1 Dn द्रुपदं नवभि शरैः — ^c) Ś2 K1 2 भित्त्वा (for विद्ध्वा) T G2 विव्याथ (for °ध) D2 5 विंशत्या (for सप्तत्या) — ^d) K3 4 B Dc1 Dn1 D7 8 M3–5 अन्यैश् (for चान्यैश्) Bom ed त्रिभि (for शरै) — After 19, T G1 2 M1 2 ins

1181* वृषसेनशरैरुग्रो व्यपयासीन्महीपतिः ।
[ G1 M1, 2 व्यपायासीन् (for व्यप°) ]

20 ^a) B1 शताग्र्याणि (for -सहस्राणि) — ^b) Dn2 D2 5 रणे (for तदा) — After 20, Dn2 D2 3 5–8 ins

1182* द्रुपदस्तु ततः क्रुद्धो वृषसेनस्य कार्मुकम् ।
द्विधा चिच्छेद भल्लेन पीतेन निशितेन च ।
सोऽन्यत्कार्मुकमादाय रुक्मबद्धं नवं दृढम् ।
तूणादाकृष्य विमलं भल्लं पीतं शितं दृढम् ।

C 7 7531
B 7 168 20
K 7 169 20

कर्णपुत्रो महाराज वर्षमाण इवाम्बुदः ॥ २०
ततस्तु द्रुपदानीकं शरैश्छिन्नतनुच्छदम् ।
संप्राद्रवद्रणे राजन्निशीथे भैरवे सति ॥ २१
प्रदीपैर्हि परित्यक्तैर्ज्वलद्भिस्तैः समन्ततः ।
व्यराजत मही राजन्वीताभ्रा द्यौरिव ग्रहैः ॥ २२
तथाङ्गदैर्निपतितैर्व्यराजत वसुंधरा ।
प्रावृट्काले महाराज विद्युद्भिरिव तोयदः ॥ २३
ततः कर्णसुतत्रस्ताः सोमका विप्रदुद्रुवुः ।
यथेन्द्रभयवित्रस्ता दानवास्तारकामये ॥ २४
तेनार्द्यमानाः समरे द्रवमाणाश्च सोमकाः ।
व्यराजन्त महाराज प्रदीपैरवभासिताः ॥ २५
तांस्तु निर्जित्य समरे कर्णपुत्रो व्यरोचत ।
मध्यंदिनमनुप्राप्तो घर्मांशुरिव भारत ॥ २६
तेषु राजसहस्रेषु तावकेषु परेषु च ।
एक एव ज्वलंस्तस्थौ वृषसेनः प्रतापवान् ॥ २७
स विजित्य रणे शूरान्सोमकानां महारथान् ।

---

कार्मुके योजयित्वा त द्रुपदं संनिरीक्ष्य च । [5]
आकर्णपूर्णं मुमुचे त्रासयन्सर्वसोमकान् ।
हृदय तस्य भित्त्वा च जगाम वसुधातलम् ।
कश्मल प्राविशद्राजा वृषसेनशराहत ।
सारथिस्तमपोवाह स्मरन्सारथिचेष्टितम् ।
तस्मिन्प्रभग्ने राजेन्द्र पाञ्चालाना महारथे । [10]

[ (L 2) D2 5 विद्धा (for द्विधा)　D5 6 च (for नि-)　— After line 2, D2 5 read $27^{cd}$ for the first time, repeating it in its proper place　— (L 3) D3 6 om from the post half up to the prior half of line 4　— (L 4) D3 6 read the post. half after the prior half of line 6　Dn2 D7 8 सित, D2 नव (for शित)　— (L 5) Dn2 D2 कार्मुक　D2 तु (for त)　— (L 6) D3 6 om the post half　D7 8 -सैनिकान् (for -सोम°)　— (L 7) D3 7 8 स, D6 [अ]मौ (for च)　— (L 8) D7 8 -समाहत (for -शरा°)　— D7 8 om line 10　— (L 10) D6 पञ्चालानां ]

21　D2 5 om $21^{ab}$　—$^{a}$) G3 4 तद् (for तु)　—$^{c}$) D2 समाद्रवच्　B2 4 Dn1 तदा,　Dn2 D2 5 चमू,　D3 6 T G2-4 रणाद् (for रणे)　Dn2 D2 5 सर्वा (for राजन्)　—$^{d}$) D7 8 निशिथेर् (for निशीथे)

22　$^{a}$) Bom ed श्च (for हि)　T G3 4 परित्यक्ता, G1 M1 2 5 °प्वक्ता,　M3 4 °व्यक्ता (for °त्यक्तैर्)　—$^{b}$) Dn2 D2 5 प्रज्वलद्भि° (for ज्वलद्भिस्तै)　— D2 om $22^{c}$–$23^{b}$　—$^{c}$) K4 विराजत (for व्यरा°)　Ś K (K5 missing) B1 Dn D4. 6 M4 5 (*sup lin*) महाराज (B4 D5 6 °जन्) (for मही राजन्)　T G2-4 M5 (orig) व्यराजद्वसुधा तत्र　—$^{d}$) Ś1 K3 D6 वीताभ्रैर्, Ś2 K1 D1 °भ्रं,　Dc1 Dn1 नीलाभ्रा;　D3 व्य*भैर्,　D7 8 वीताभ्रे,　G1 M1 2 विततैर् (for वीताभ्रा)　K2 वीताभ्रं द्यौरिवाग्रत

23　D2 om $23^{ab}$ (of v 1 22)　—$^{a}$) B1-3 Dc1 Dn1 तदागदैर्,　Dn2 D5 रथैर्गजैर्,　D7 8 रथागदैर्,　G1 M अथा° (for तथा°)　— Ś K1-3 om $23^{bc}$　—$^{b}$) B4 व्यभ्राजत (for व्यरा°)　—$^{c}$) S (G5 missing) प्रावृषीव (for प्रावृट्काले)　—$^{d}$) D3 6 स विद्युदिव तोयद,　S (G5 missing) विद्युद्भिर्ज(G3 °र्ज्व)लदावली (T °ळी; G1 M °ळि)

24　$^{a}$) S (G5 missing) तत्र (for तत)　Ś1 K2 4 Dn1 D3 6 सुताद्,　D3 -सुतस् (for -सुत)　— M3 om. $24^{b}$–$25^{c}$　—$^{b}$) Dn2 D2 5 समताद् (for सोमका)　D6 सोमका विद्रवुस्तदा　—$^{c}$) D3 -संत्रस्ता (for -वित्रस्ता)　D5 यथोपेंद्रभयत्रस्ता

25　M3 om $25^{abc}$ (cf. v 1 24)　—$^{a}$) Dn2 संग्रामे (for समरे)　D2 5 सतोर्द्यमाना सग्रामे,　D7 8 ते वध्यमाना समरे　—$^{b}$) Ś1 K1 3 D6 द्रवमानाश्,　Ś2 द्रावमाणाश्,　D7 8 द्राव्य° (for द्रव°)　G1 M (M3 om) स्स (for च)　Dn2 D2 5 पांचाला सोमकै° सह　—$^{c}$) D7 8 अदृश्यत,　T G2-4 व्यकाशंत,　G1 M (M3 om) प्राकाशत (for व्यराजन्त)　—$^{d}$) K2 D1 इव (for अव)　D2 5 प्रदीप्ता इव भारत

26　$^{b}$) B1 D1 [ऽ]प्यरोचत,　B3 Dn2 D2 3 5-8 व्य(Dn2 वि)राजत (for व्यरोचत)

27　D2 5 read $27^{cd}$ for the first time after line 2 of 1182*　—$^{c}$) G3. 4 एष (for एक)　G1 M1. 2 मासा (for तस्थौ)　D5 (first time) एव ज्वलततस्थौ (sic)　—$^{d}$) D2 5 (both first time) द्रुपदो रणमूर्धनि

28　$^{a}$) Dn2 D5 7 8 निर्जित्य (for विजित्य)　Ś K2 3 D1 3. 6 शूर°;　K1 शूरा (for शूरान्).　—$^{b}$) Dn2 D2. 5

जगाम त्वरितस्तत्र यत्र राजा युधिष्ठिरः ॥ २८
प्रतिविन्ध्यमथ क्रुद्धं प्रदहन्तं रणे रिपून् ।
दुःशासनस्तव सुतः प्रत्युद्गच्छन्महारथः ॥ २९
तयोः समागमो राजंश्चित्ररूपो बभूव ह ।
व्यपेतजलदे व्योम्नि बुधभार्गवयोरिव ॥ ३०
प्रतिविन्ध्यं तु समरे कुर्वाणं कर्म दुष्करम् ।
दुःशासनस्त्रिभिर्बाणैर्ललाटे समविध्यत ॥ ३१
सोऽतिविद्धो बलवता पुत्रेण तव धन्विना ।
विरराज महाबाहुः सशृङ्ग इव पर्वतः ॥ ३२
दुःशासनं तु समरे प्रतिविन्ध्यो महारथः ।
नवभिः सायकैर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ ३३
तत्र भारत पुत्रस्ते कृतवान्कर्म दुष्करम् ।
प्रतिविन्ध्यहयानुग्रैः पातयामास यच्छरैः ॥ ३४
सारथिं चास्य भल्लेन ध्वजं च समपातयत् ।
रथं च शतशो राजन्व्यधमत्तस्य धन्विनः ॥ ३५
पताकाश्च स तूणीरान्रश्मीन्योक्त्राणि चाभिभो ।
चिच्छेद तिलशः क्रुद्धः शरैः संनतपर्वभिः ॥ ३६
विरथः स तु धर्मात्मा धनुष्पाणिरवस्थितः ।
अयोधयत्तव सुतं किरञ्शरशतान्बहून् ॥ ३७
क्षुरप्रेण धनुस्तस्य चिच्छेद कृतहस्तवत् ।
अथैनं दशभिर्भल्लैश्छिन्नधन्वानमार्दयत् ॥ ३८
तं दृष्ट्वा विरथं तत्र भ्रातरोऽस्य महारथाः ।

C 7 7555
B 7 168 44
K 7 169 44

सोमकाश्च ( for °काना ) D1 2 5 महारथ ( for °रथान् ) — c ) K4 D2 3 5 S ( G5 missing ) राजन्, B3 D5 [ऽ]न्यत्र, Dn2 lacuna ( for तत्र )

29 B3 reads 29–30 on marg — a ) B1 प्रदहतम् ( for प्रतिविन्ध्यम् ) Dn2 D2 3 5 समाया( D5 °या )तं, D5 शरैः क्रुद्ध, D1 6 अभिक्रुद्ध ( for अथ क्रुद्ध ) — b ) B1 प्रतिविध्यं ( for प्रदहन्त ) — d ) K4 B D ( except D2 5, D1 missing ) प्रत्यगच्छन् ( for प्रत्युद्ग° ) K2 Dn2 महारथ ( for °रथ )

30 B3 reads 30 on marg — a ) K1 ह्यपेत ( for व्य° ) D5 व्यपतज्जलदव्योम्नि — d ) B ( except B5 ) Dc1 Dn1 D3 6 S ( G5 missing ) भास्करयोर्, Dn2 lacuna ( for -भार्गव° )

31 a ) K1 4 Dn2 प्रतिविध्यं ( for °विन्ध्यं ) K4 B3 च ( for तु ) — b ) K4 दुस्कर, Dn2 D2 5 दारुणं ( for दुष्करम् ) — After 31ab, S ( G5 missing ) ins

1183* अपूजयन्महाराज तव सैन्ये महारथा ।

[ M3–5 सैन्य ( for सैन्ये ) ]

— B3 reads 31c–34b on marg — d ) G1 3, 4 M प्रत्यविध्यत ( for सम° )

32 B3 reads 32 on marg — b ) G1 3 4 M ( except M4 ) पौत्रेण ( for पु° ) — c ) D1 3 व्यराजत ( for विरराज ) K1 महाबाहो, Dn2 राज ( for °बाहु ) — d ) Ś1 D2 3, 6 S ( G5 missing ) त्रि ( for स )

33 K1 D1 om 33ab B3 reads 33 on marg — a ) S ( G5 missing ) दुःशासनस् ( for °सन ) D2 5 च ( for तु ) — b ) T G2–4 M3–5 प्रतिविंध्य ( for °विन्ध्यो ) G1 M1 2 प्रतिविध्य महारथं — d ) T G3 विव्याध ( for ध )

34 B3 reads 34ab on marg — a ) T G1–3 M1 2 प्रतिविध्य ( for °विन्ध्य ) T G2 3 यदश्युग्रै, G1 M1 2 महानुग्रै ( for -हयानुग्रै ) — d ) K1 2 तापयामास ( for पातया° ) K4 तच्छरै, Dn2 G1 4 M1 2 सायकै, D2 5 संयुगे ( for यच्छरै ) T G2 3 M3–5 प्रासतोमरसायकै

35 c ) K3 4 B Dc1 Dn D2 5 S ( G5 missing ) तिलशो ( for शतशो ) — d ) T G2 व्यधमत्

36 a ) D6–8 पताका ( for °काश् ) Ś1 K3 [पु]च ( for स ) Ś2 K1 4 B Dc1 Dn D1 3 T G2–4 तूणीरा ( for तूणीरान् ) D5 पपात यत्रान्तूणीरान् ( sic ) — b ) K1 त्रीन् ( submetric ) ( for रश्मीन् ) Ś2 D1 3 चाभिभो, K1 D1 चाविभो, B Dc1 Dn D2 5 च ( B1 2 त ) प्रभो, D3 6 वा विभो ( for चाभिभो ) — D5 om 36c–37b

37 D5 om 37ab ( cf v l 36 ) — a ) D1 3 च स ( for स तु ) — b ) G1 M अतिष्ठत ( for अवस्थित° ) — c ) T G3 4 सुत ( for सुतं ) — d ) Ś1 K3 गणान्; Dc1 Dn2 D3, 6 -वरान् ( for -शतान् )

38 a ) D1 3 चास्य ( for तस्य ) — b ) D3 6 जित ( for कृत ) B Dc1 Dn1 S ( G5 missing ) चिच्छेद तनयस्तव ( T G3 4 °दा ) — c ) K1 2 पंचभिर् ( for दशभिर् ) K4 B Dc1 Dn D1 2 5 S ( G5 missing ) बाणैश्

C. 7 7553
B 7 168 46
K 7 169 44

अन्ववर्तन्त वेगेन महत्या सेनया सह ॥ ३९
आप्लुतः स ततो यानं सुतसोमस्य भास्वरम् ।
धनुर्गृह्य महाराज विव्याध तनयं तव ॥ ४०
ततस्तु तावकाः सर्वे परिवार्य सुतं तव ।
अभ्यवर्तन्त संग्रामे महत्या सेनया वृताः ॥ ४१
ततः प्रववृते युद्धं तव तेषां च भारत ।
निशीथे दारुणे काले यमराष्ट्रविवर्धनम् ॥ ४२

इति श्रीमहाभारते द्रोणपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

## १४४

संजय उवाच ।
नकुलं रभसं युद्धे निघ्नन्तं वाहिनीं तव ।
अभ्ययात्सौबलः क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १
कृतवैरौ तु तौ वीरावन्योन्यवधकाङ्क्षिणौ ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ २
यथैव सौबलः क्षिप्रं शरवर्षाणि मुञ्चति ।
तथैव नकुलो राजञ्शिक्षां संदर्शयन्युधि ॥ ३
तावुभौ समरे शूरौ शरकण्टकिनौ तदा ।

---

(for महेश्व) —d) D6 8 T G1-4 अर्दय( D8 °ये )त् (for श्वा° )

39 a) B1 8 Dc1 Dn1 ते ( for त ) Dn2 भ्रातरं (for विरथ ) T G3 4 तूर्णं ( for तत्र ) — D8 om. 39b–40a —c) D3 6 G1 M1 2 अभ्यवर्तंत (for अन्ववर्तन्त ) —d) D3 6 7 T G2 4 वृता, G3 वृत ( for सह )

40 D8 om 40a (cf v 1 39) —a) Ś1 D2 G1 M आप्लुतस्तु, Ś2 K3 T G2-4 सोव( Ś2 सोप )प्लुतस्, K4 सोवप्लुत्य, Dn2 सोद्रवत्तु, D6 सोप्लुतस्तु, D7 स प्लुतश्च (for आप्लुत स) K1 सोवप्लुतस्तु ते यान —b) D2 3 5 श्रुत (for सुत ) Ś K3 D2 5 भासुर, D7 भास्करं (for भास्वरम् ) —c) D3 6 धनुर्गृहीत्वा वै राजन् —d) T G2 विव्याथ (for °ध ) D3 G2 तनयस् ( for °यं )

41 G4 om (hapl ) 41ab —c) Ś K ( K5 missing) संक्रुद्धा; Dn2 D2 5 वेगेन, D8 सक्रुद्धे, D6-8 त युद्धे, T G2-4 M3-5 समरे ( for सग्रामे )

42 b) D2 5 तत्र (for तव )

Colophon om in G1 M1 2 K5 D4 G5 missing —*Sub-parvan* Editions घटोत्कचवध —*Adhy name* Ś2 K1 2 4 B D ( D4 missing ) G2 रात्रियुद्ध, Bom ed रात्रियुद्धे शतानीकादियुद्ध —*Adhy no* ( figures, words or both ) Dn1 168, D2 169, D8 63, T G2-4 164, M2-5 163 —*Śloka no* Dc1 Dn1 42

### 144

☞ This adhy is missing in K5 D4 G5 ( cf. v 1 7 125 14, 141 35, 137 9 )

1 a) Dn1 नकुल रभसा युक्त —b) Ś2 Dn2 D2 5 6 G1 M तव वाहिनीं ( by transp )

2 a) Dc1 -हस्तौ ( for -वैरौ ) D6 M3-5 तत, G2-4 रणे ( for तु तौ ) Dn2 S ( except G1, G5 missing ) शूरौ ( for वीराव् ) —b) D1 3 7 8 [अ]न्योन्यं T G2-4 परस्परवधैषिणौ — Dn1 om 2cd, Dc1 reads it on marg

3 a) D8 तथा ( for यथा ) B Dc1 Dn D2 5 S ( G5 missing ) य( B3 D2 5 त )थैव नकुलो राजन् —b) D6 -वर्षान्वि ( for °णि ) K4 B Dc1 ( by corr ) Dn D2 8 S ( G5 missing ) [अ]मुंचत, Dc1 ( before corr ), D5 [अ]मुमुचत् ( for मुञ्चति ) —c) K4 Dn2 D2 5 तथैव ( D2 °व ) सौबलश्चापि, B Dc1 Dn1 °व सौबलो राजन्; T G3 4 °व सौबलोप्यासिन्, G1 2 M °व सौबलोपि ( G2 °लो हि ) स —d) Ś1 K3 रणे ( for युधि )

4 D5 reads 4ab and repeats 4cd, while D8 repeats 4 after the second occurrence of 143 17–18 —a) Dn2 D2 5 6 ( first time ) राजन् ( for शूरौ ) —b) B1-3 Dn1 D7 कटकितौ ( for -कण्टकिनौ ) Ś2 K1 2 4 D1 2 6 ( second time ) तथा ( for तदा ) D6

व्यराजेतां महाराज कण्टकैरिव शाल्मली ॥ ४
सुजिह्मं प्रेक्षमाणौ च राजन्विवृतलोचनौ ।
क्रोधसंरक्तनयनौ निर्दहन्तौ परस्परम् ॥ ५
स्यालस्तु तव संक्रुद्धो माद्रीपुत्रं हसन्निव ।
कर्णिनैकेन विव्याध हृदये निशितेन ह ॥ ६
नकुलस्तु भृशं विद्धः स्यालेन तव धन्विना ।
निषसाद रथोपस्थे कश्मलं चैनमाविशत् ॥ ७
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं तथागतम् ।
ननाद शकुनी राजंस्तपान्ते जलदो यथा ॥ ८
प्रतिलभ्य ततः संज्ञां नकुलः पाण्डुनन्दनः ।
अभ्ययात्सौबलं भूयो व्यात्तानन इवान्तकः ॥ ९
संक्रुद्धः शकुनिं षष्ट्या विव्याध भरतर्षभ ।
पुनश्चैव शतेनैव नाराचानां स्तनान्तरे ॥ १०
ततोऽस्य सशरं चापं मुष्टिदेशे स चिच्छिदे ।
ध्वजं च त्वरितं छित्त्वा रथाद्भूमावपातयत् ॥ ११
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
तं विसंज्ञं निपतितं दृष्ट्वा स्यालं तवानघ ।
अपोवाह रथेनाशु सारथिर्ध्वजिनीमुखात् ॥ १२

C 7 7576
B 7 169 18
K 7 170 17

(first time) शरमक्पंतौ रगे —c) D5 e (both first time) व्यराजेता (for व्यरा°) —d) K1 कणुकैर्, Dn1 केट (for कण्ट) S K3 S (G5 missing) शल्मली (for शा°) D5 e (both first time) श्वाविधौ शललै रिव —After 4, D5 repeat 143 17–18

5 a) K1 D1 2 S (G5 missing) मजिह्म, B Dc1 Dn1 अजिह्मं (for सु°) Ś1 K1 D1 2 प्रेक्ष्यमाणौ Ś1 K3 Dn तौ, B1 2 D4 5 तु (for च) —b) Ś1 विव्याव, B1 विवृत (for विवृत) —c) Dn2 -रक्ताल- (for -संरक्त) Ś K1–3 D1 2 e–3 -चक्षुषौ (for नयनौ) —d) G1 M1 2 अर्दयतौ (for निर्दहन्तौ)

6 a) K1 B Dc1 Dn1 D2 8 श्यालस्, D1 शाल्यस् (for स्यालस्) M2–3 तव सुत (for तु तव स) Dn2 D2 2 शाल्मत्व सुसक्रुद्धो —c) D2 कर्णेन (for कर्णिना) T G2 विव्याय (for °ध) —d) Ś1 D2 7 8 S (G5 missing) च (for ह)

7 a) T G2 M1 दृढ (for भृश) G1 क्रुद्ध (for विद्ध) —b) B Dc1 Dn D2–8 श्यालेन, D2 शालेन (for स्या°) M1 2 दृढ (for तव) —c) B1 विषसाद (for नि) —d) D5 एनम (for चैनम्) B1–3 कश्मल चाविशन्महत्, D2 °लं च समाविशत्

8 a) T G2–4 दृष्ट्वा (for दृप्तं) —b) G1 दृप्त (for दृष्ट्वा) T G2–4 तमाहव (for तथागतम्) —c) Dn1 [श]विशयं (for शकुनी) Ś1 D7 8 राजा, Dn2 D3 5 तत्र (for राजम्)

9 After 9ab, Dn2 ins 1184* Dn2 om 9c–11d

10 Dn2 om 10 (cf v 1 9) —a) B1 Dc1 D2 स क्रुद्ध, D स विद्ध (for सक्रुद्ध) K4 सकुलं (for शकुनिं) D3 e स क्रुद्ध शकुनिं दृष्ट्वा —K4 om. 10b–11c —b) T G2 विव्याय (for °ध) —c) B D (Dn2 om, D4 missing) M3 चैन, M4 चैक (for चैव) D7 8 [श]तैः, G1 M1 2 [ए]न (for [ए]व) —G4 reads 10d–11a twice (second time transposed) —d) T G2 3 4 (both times) M समाचिनोत् (for स्तनान्तरे)

11 For the repetition in G4, cf v l 10 K4 om 11ab (cf v l 10) Dn2 om 11 (cf v l 9) —a) B Dc1 Dn1 अथ (for ततो) D3 6 ससरं (for सशरं) —b) B Dc1 Dn1 S (G5 missing) [S]च्छि नत्तदा (T G1–4 M1 5 °द्विधा), D2–5 समाच्छिनत् (for स चिच्छिदे) —c) Ś1 विजयं (for ध्वज) B1 D6 त्वरितस् (for °त) Ś K1 3 D1 दृष्ट्वा (for छित्त्वा) M3 4 द्विधा ध्वज च त्वरितं —d) M3 4 छित्त्वा (for रथाद्) Ś1 शरैरन्यैः समार्दयत् —D2 5 ins after 11 Dn2 after 9ab

1184* त्रिशिम्बेन च तीक्ष्णेन पीतेन निशितेन च ।
ऊरू निर्भिद्य चैकेन नकुल पाण्डुनन्दन ।
श्येन सपक्ष व्याधेन पातयामास त तदा ।

[ Dn2 om. lines 1–2 —(L 1) D5 च (for नि-) ]

12 a) Dc1 Dn1 [S]पि (for Sति) —After 12ab, Dn1 D3 5 ins

1185* ध्वजयष्टिं परिष्वज्य कामिनीं कामुको यथा ।

[ Dn2 परिक्षिप्य (for °ष्वज्य) Bom. ed कामुक कामिना (by transp) ]

—d) B Dc1 Dn2 D3 7 8 श्याल, D2 5 6 शालं (for स्याल) —e) G1 M1 2 [श्रा]जौ (for [आ]शु)

C 7 7376
B 7 169 18
K 7 170 18

ततः संचुक्रुधुः पार्था ये च तेषां पदानुगाः ।
निर्जित्य च रणे शत्रून्नकुलः शत्रुतापनः ।
अब्रवीत्सारथिं क्रुद्धो द्रोणानीकाय मां वह ॥ १३
तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः ।
प्रायात्तेन रणे राजन्येन द्रोणोऽन्वयुध्यत ॥ १४
शिखण्डिनं तु समरे द्रोणप्रेप्सुं विशां पते ।
कृपः शारद्वतो यत्तः प्रत्युद्गच्छत्सुवेगितः ॥ १५
गौतमं द्रुतमायान्तं द्रोणान्तिकमरिंदमम् ।
विव्याध नवभिर्भल्लैः शिखण्डी प्रहसन्निव ॥ १६
तमाचार्यो महाराज विद्ध्वा पञ्चभिराशुगैः ।
पुनर्विव्याध विंशत्या पुत्राणां प्रियकृत्तव ॥ १७
महद्युद्धं तयोरासीद्घोररूपं विशां पते ।
यथा देवासुरे युद्धे शम्बरामरराजयोः ॥ १८
शरजालावृतं व्योम चक्रतुस्तौ महारथौ ।
प्रकृत्या घोररूपं तदासीद्घोरतरं पुनः ॥ १९
रात्रिश्च भरतश्रेष्ठ योधानां युद्धशालिनाम् ।
कालरात्रिनिभा ह्यासीद्घोररूपा भयावहा ॥ २०
शिखण्डी तु महाराज गौतमस्य महद्धनुः ।
अर्धचन्द्रेण चिच्छेद सज्यं सविशिखं तदा ॥ २१
तस्य क्रुद्धः कृपो राजञ्शक्तिं चिक्षेप दारुणाम् ।

---

13 [a]) D7 8 सजहृपु; G1 M1 2 उच्चुक्रुशु° (for संचु°) — [c]) B (except B5) Dc1 त, Dn1 D8 6-8 T G2-4 तु (for च) K4 D (except Dn2 D5, D1 missing) M4 5 शत्रुं (for शत्रून्) — [e]) Dn2 तत्र, D2 तं च, D5 तद्य (for क्रुद्धो)

14 [b]) K1 2 4 D1 धन्विन, Dn2 D2 5 सारथि (for धीमत) S (G5 missing) यता तस्य महात्मन (G1 M1. 2 विशा पते, M3-5 महामते) — [c]) Dc1 ततो, D2 5 चैव, T G2-4 तस्य (for तेन) K1 4 Dn2 D1 2 5 तदा राजन्, B5 ** राजन्; G1 M1 2 रथेनाशु (for रणे राजन्) — [d]) D1 2 5 7 8 G1 M1. 2 यत्र (for येन) Ś2 न्यवर्तत, B4 5 S (G5 missing) [ऽ]न्य (B5 °नु, G1 M1 2 ह्य, M3 4 व्य, M5 °व्य) युध्यत, Dn2 D2 5 7 8 व्यवस्थित (for ऽन्वयुध्यत)

15 [a]) K1 2 सुमुखे (for समरे) — [b]) K1 2 4 G1 M1 2 महारथं, Dn2 D2 5 महाबल (D2 °ल) (for विशा पते) — [c]) K4 सारद्वतो B4 क्रुद्ध, D5 यद्वत् (for यत्त) — [d]) K2-4 B Dc1 Dn1 D3 6-8 G1 4 प्रत्य(Dc1 D6 °त्या)गच्छत् (for प्रत्युद्गच्छत्) Ś2 सु वेगित, K4 B4 5 Dc1 Dn1 D8 M3-5 स (Dn1 स्व-) वे गित; D7 8 स वेगत (for सुवेगित). Dn2 D2 प्रत्यु- द्गच्छत वेग(D2 °गि)त; D5 प्रत्युद्गतविवेकिन

16 [a]) D6 7 आयातं T G2-4 गौतमं तु तथायांत — [b]) K4 B Dc1 Dn D8 द्रोणानीकम् (for द्रोणान्तिकम्) Dn2 D5 6 अरिंदम° S (G5 missing) द्रोण स्यार्थचि(G2 °र्थं चि)कीर्षया — [c]) T G2 विव्याथ (for °ध) Dn2 D5 M3 5 बाणै (for भल्लै)

17 D6 om (hapl) 17 — [c]) T G2 विव्याथ (for °ध) G2 सप्तत्या (for विंशत्या) — [d]) Ś1 K1-3 हित कृत् (for प्रिय°)

18 [b]) B Dc1 Dn1 D3 S (G5 missing) भयानक (for विशा पते) — [c]) Ś1 युद्ध K3 यथा देवासुर युद्ध — [d]) D7 8 वृत्रवासवयोरिव

19 [b]) D6 महाबलौ (for °रथौ) — After 19[ab], B Dc1 Dn ins

1186* मेघाविव तपापाये वीरौ समरदुर्मदौ ।
[B1 3 Dc1 -दुर्गमौ (for -दुर्मदौ)]

— [c]) D3 6 तु (for तद्) — [d]) D6 तस्माद् (for आसीद्) B1 Dc1 Dn1 घोरतम (for °तर) B3 4 5 रण, B3 Dc1 Dn1 रणे, Dn2 D5 तत°, D2 तम° (for पुन)

20 [a]) D3 6 तु (for च) — [b]) G1 M यौधाना Dn2 युद्धशीलना (sic), G1 4 M °पालिना — [c]) G1 M काळ (for काल) Dn2 च (for हि) — [d]) B (except B4) Dc1 Dn1 भयानका, D3 6 दुरत्यया, D7 8 महाभया (for भयावहा)

21 [c]) D8 6 विव्याध (for चिच्छेद) — D8 om. (hapl) 21[d]-23[a] — [d]) Ś K1 2 तथा (for तदा) Dn2 D2 5 ससर्ज च शिताञ्शरान्, D7 सज्यं सविशिखोत्तमं; S (G5 missing) सशर निशितेन च (G1 M ह)

22 D8 om 22 (of v 1 21) — [a]) M1 2 तत (for तस्य) — [b]) Dn2 दारुणीं — [c]) Ś2 साधु Dn° D5 G1 M3-5 रुक्म, M1 2 रुग्म (for स्वर्ण) B4 घटाम् (for दण्डाम्) — [d]) Ś2 काधार°, K2 कदार- (for कर्मार) G3 -मार्जना (for मार्जिताम्)

स्वर्णदण्डामकुण्ठाग्रां कर्मारपरिमार्जिताम् ॥ २२
तामापतन्तीं चिच्छेद शिखण्डी बहुभिः शरैः ।
सापतन्मेदिनीं दीप्ता भासयन्ती महाप्रभा ॥ २३
अथान्यद्धनुरादाय गौतमो रथिनां वरः ।
प्राच्छादयच्छितैर्बाणैर्महाराज शिखण्डिनम् ॥ २४
स छाद्यमानः समरे गौतमेन यशस्विना ।
व्यपीदत रथोपस्थे शिखण्डी रथिनां वरः ॥ २५
सीदन्तं चैनमालोक्य कृपः शारद्वतो युधि ।
आजघ्ने बहुभिर्बाणैर्जिघांसन्निव भारत ॥ २६
विमुखं तं रणे दृष्ट्वा याज्ञसेनिं महारथम् ।
पाञ्चालाः सोमकाश्चैव परिवव्रुः समन्ततः ॥ २७
तथैव तव पुत्राश्च परिवव्रुर्द्विजोत्तमम् ।
महत्या सेनया सार्धं ततो युद्धमभूत्पुनः ॥ २८
रथानां च रणे राजन्नन्योन्यमभिधावताम् ।
बभूव तुमुलः शब्दो मेघानां नदतामिव ॥ २९
द्रवतां सादिनां चैव गजानां च विशां पते ।
अन्योन्यमभितो राजन्क्रूरमायोधनं बभौ ॥ ३०
पत्तीनां द्रवतां चैव पदशब्देन मेदिनी ।
अकम्पत महाराज भयत्रस्तेव चाङ्गना ॥ ३१
रथा रथान्समासाद्य प्रद्रुता वेगवत्तरम् ।
न्यगृह्णन्बहवो राजञ्शलभान्वायसा इव ॥ ३२
तथा गजान्प्रभिन्नांश्च सुप्रभिन्ना महागजाः । C 7 7597 B 7 169 29 K 7 170 29

---

23 D3 om 23[a] (cf. v l 21) —[b]) Dn2 om (hapl) from शिखण्डी up to महाराज (in 24[d]) D4 5 दशभि, D2 6 निशितै (for बहुभि) —D3 om 23[cd] —[cd]) B2 D7 7 प्राप्ता, T G2 3 कृत्वा, G4 भित्वा (for दीप्ता) T भासयन्ती Ś K (K5 missing) D1 दिशो दश (for महाप्रभा) D2 6 सा पपात च मेदिन्या शक्तिर्हेमविभूषिता

24 Dn2 om up to महाराज (cf v l 23) —[a]) Ś K2-4 D1 ततो, K1 अतो (for अथ) —[b]) D2 5 वदतां (for रथिनां) —K1 2 om (hapl) 24[c]–25[d] —[c]) D2 5 5 T G2-4 प्रच्छादयत् (D2 6 °न्) (for प्राच्छादयत्) —Ś2 reads 24[d]–26[d] on marg

25 K1.2 om 25 (cf. v l 24) Ś2 reads 25 on marg —[a]) B4 D3 S (G5 missing) सं (for स) —[b]) D2 5 महात्मना (for यशस्विना) —[c]) Ś2 K3 B Dc1 Dn1 M2-5 न्यपीडत, K4 D1 विपी°, Dn2 T G2-4 व्यमी°, D2.5 आसी° (for व्यपी) —[d]) T G2-4 शिखण्डी बहुभि शरै

26 Ś2 reads 26 on marg —[a]) B5 D2 [ए]वम् (for [ए]नम्). D2 5 आज्ञाय, D7 8 आसाद्य (for आलोक्य)

27 [a]) B Dc1 Dn1 D1 G1 M तु (for त) B4 om. (hapl) from दृष्ट्वा up to रणे (in 29[a]) —[b]) G1 M1 2 महायल (for °रथम्) —[c]) B1 Dn1 D1 पचाला

28 B4 om 28 (cf v l. 27) —[a]) D3 6 तु (for च) —[d]) K1 2 4 B (B4 om) Dc1 Dn1 D1, 2 5 अवर्तत (for अभूत्पुन)

29 B4 om. up to रणे (cf v l. 27) —[a]) B (B4 om) Dc1 D3 रथिना (for रथाना) Dn2 D2 5 तु (for च) D3 6 ततो (for रणे) —Dn2 om. (hapl) 29[b]–32[c] —D2 5 om 29[cd] —[c]) Dn1 D7 8 तुमल —[d]) K4 गर्जताम्, S (G5 missing) स्तन° (for नद°) B3 मेघानामिव नर्दता

30 K1 Dn2 om 30 (for Dn2, cf v l 29) —[a]) D3 6 चापि (for चैव) —D2 5 om (hapl.) 30[b]–31[a] —[c]) Ś1 damaged G1 M1 2 अन्योन्यमभियातानां

31 Dn2 om. 31 (cf v l 29) D2 5 om 31[a] (cf v l 30) —[b]) Dn1 D2 5 7 8 M3-5 पाद (for पद) —[c]) D5 अकपयन (for अकम्पत) —[d]) Ś1 K3 lacuna, K1.2 4 D1 सर्वत (for चाङ्गना) D2 5 योषिन्मुग्धा भयादिव, S (G5 missing) योषेव भयविक्लवा

32 Dn2 om 32[abc] (cf. v l. 29) —[a]) M1.2 रथान् (for रथा) S (except G1 M1 2, G5 missing) रथं (for रथान्) D2 6 रथिनो रथमारुह्य —[b]) D5 7 G1 M1 2 प्रद्रुतान् K1.2 D1 वेगवत्तरा, G1.3 4 M खग(G3 °ङ्ग)वद्द्रुत (for वेगवत्तरम्) —[c]) Ś1 B1 Dn1 D2 5 7 8 अगृह्णन् (Dn1 °ह्णाद्), S (except G1 M1 2, G5 missing) व्यगृ° (for न्यगृ°) D3 6 बहुशो (for बहवो) K1 न्यगृह्णंताहवे राजन् (sic), K2 D1 न्यगृह्णताहवे रा° —[d]) S (G5 missing) खगमा (for वायसा) Dn1 शलभानामिवायती

C 7 7390
B 7. 169 39
K 7 170 40

तस्मिन्नेव पदे यत्ता निगृह्णन्ति स्म भारत ॥ ३३
सादी सादिनमासाद्य पदाती च पदातिनम् ।
समासाद्य रणेऽन्योन्यं संरब्धा नातिचक्रमुः ॥ ३४
धावतां द्रवतां चैव पुनरावर्ततामपि ।
बभूव तत्र सैन्यानां शब्दः सुतुमुलो निशि ॥ ३५
दीप्यमानाः प्रदीपाश्च रथवारणवाजिषु ।
अदृश्यन्त महाराज महोल्का इव खाच्च्युताः ॥ ३६
सा निशा भरतश्रेष्ठ प्रदीपैरवभासिता ।
दिवसप्रतिमा राजन्बभूव रणमूर्धनि ॥ ३७
आदित्येन यथा व्याप्तं तमो लोके प्रणश्यति ।
तथा नष्टं तमो घोरं दीपैर्दीप्तैरलंकृतम् ॥ ३८
शस्त्राणां कवचानां च मणीनां च महात्मनाम् ।
अन्तर्दधुः प्रभाः सर्वा दीपैस्तैरवभासिताः ॥ ३९
तस्मिन्कोलाहले युद्धे वर्तमाने निशामुखे ।
अवधीत्समरे पुत्रं पिता भरतसत्तम ॥ ४०
पुत्रश्च पितरं मोहात्सखायं च सखा तथा ।

---

33 a) D5 राजन् (for गजान्) Dn2 D2 प्रभिन्ना गान्, S (G5 missing) स्नास्तु — b) K4 B5 सं, G3 lacuna (for सु) — c) Ś2 एक (for एव) K1 Dn2 D6 यता, D2 5 T G2–4 M3–5 याता, G1 M1 2 यातान् (for यत्ता) — d) Ś1 K2 3 D1 7 8 न्य (D1 नि) गृह्णंत (for निगृह्णन्ति) K1 निगृह्णात स भारत, T G3–4 सुनिगृह्णति भारत

34 a) G1 सादिन D5 आयात (for आसाद्य) M1 2 सादीन्सादिन आसाद्य — b) Ś2 K4 D1 7 8 पदातिश्च, B Dc1 Dn1 पत्तयश्च, Dn2 D2 पदातीय, D3 °तिं च, D5 पदीन्नीय (sic) (for पदाती च) D3 पदातय (for °तिनम्) D6 S (G5 missing) पदातींश्चापि पत्तय (D6 श्च पदातय) — d) B2 3 [अ]भिचक्रमु, Dn1 [अ]विसुकुशु (for °चक्रमु) Ś K2 G4 सरब्धान (Ś2 °ब्धा न्य) तिचक्रमु

35 a) D5 पतता (for द्रवता) B Dc1 Dn1 D2 3 7 8 चापि (for चैव) — c) B1–3 Dc1 Dn1 D5 S (G5 missing) तव (for तत्र) Ś2 सेनाया (for सैन्याना) — d) K4 B Dc1 Dn1 सुविपुलो, Dn2 D5 M2 तु तुमु (D5 °म) लो, D7 8 सुतुमलो (for °मुलो) D2 5 महान् (for निशि)

36 a) T2 (before corr as in text) G1 M1 2 प्रदीप्ताश्च, G3.4 सुदीपाश्च (for प्रदी°)

37 b) T प्रदीप्तैर् (for पैर्) K2 D2 इव (for अव) — c) D5 प्रतिमा (for °मा) — After 37, D5 ins 1187*

38 a) D5 प्राप्त (for व्याप्त) — b) Dn2 घोर (for लोके) B1 विनश्यति, D6 प्रन°, G1 M1 2 प्रणश्यते (for °ति) — d) Dc1 S (G5 missing) दीप्तैर्दीपै (T G2 °प्तै) र् (by transp) K1.2 4 D1 7 8 अलकृतैः, B Dc1 Dn1 D2 3 6 T G2 हृतस्तत ; Dn2 रणे कृत (for अलकृतम्) D5 दीपैस्तैरवभासित — Dn2 D2 ins after 38 D5 after 37

1187* दिव च पृथिवीं चैव दिशश्च प्रदिशस्तथा ।
रजसा तमसा व्याप्ता द्योतिता प्रभया पुन ।

[ D2 ins line 1 after 38[ab] ]

39 a) K4 B Dc1 Dn1 D5 अस्त्राणा (for श°) — b) D3 6 पत्तीना (for मणीना) — d) B1 T दीप्तैस् (for दीपैस्) Dn2 D2 M3–5 एव (for अव)

40 a) D3 6 T G2 3 M3–5 कालोपमे, G1 4 M1 2 काले समे (G4 तथा) (for कोलाहले) Dn2 D2 5 तस्मिन्युद्धे महारौद्रे — b) M3–5 तदा राजन् (for वर्तमाने) — After 40[ab], B Dc1 Dn1 ins

1188* न केचिद्विदुरात्मानमयमस्मीति भारत ।

[ Bom ed किंचिद् (for के°) ]

— c) D3 अब्रवीत् (for अवधीत्) — d) D3.6 G4 भारतसत्तम

41 a) Ś1 K3 पितर च तथा पुत्र — b) Dc1 Dn1 सखा तदा, Dn2 D3 6–8 तथा सखा (by transp), M3 सखा यथा — c) B Dc1 Dn1 स्वस्रीयं मातुलश्चापि, G1 M1 2 सबंधिनश्च सबधीन् — d) Ś K2 3 D1 स्वस्रेयं (for स्वस्रीयं) Ś1 (before corr) Dn2 मातुलं B Dc1 Dn1 M3–5 स्वस्रीयश्चापि (B5 °श्चैव) मातुल

42 a) D3 6 चान्ये (for परे) Ś1 K3 परान्मोहान्, K2 D7 8 पराश्चैव, Dn2 स्वकीयाश्च (for पराश्चापि) — b) Dn2 D2 5 S (G5 missing) निजघ्नुस्तत्र भारत• — c) Dn2 D2 5 राजन्, D3 6 घोर (for युद्धं) — d) Ś1 K3 transp रात्रौ and घोर D7 8 तदा (for रात्रौ) B Dc1 Dn1 भीरु ; Dn2 D3 6 युद्धं (for घोर). K4 B (except B4) Dc1 Dn D2 5 G1 2 4 M

संबन्धिनं च संबन्धी स्वस्रीयं चापि मातुलः ॥ ४१
स्वे स्वान्परे परांश्चापि निजघ्नुरितरेतरम् ।
निर्मर्यादमभूद्युद्धं रात्रौ घोरं भयावहम् ॥ ४२

इति श्रीमहाभारते द्रोणपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

# १४५

संजय उवाच ।
तस्मिन्सुतुमुले युद्धे वर्तमाने भयावहे ।
धृष्टद्युम्नो महाराज द्रोणमेवाभ्यवर्तत ॥ १
संसृजानो धनुः श्रेष्ठं ज्यां विकर्षन्पुनः पुनः ।
अभ्यवर्तत द्रोणस्य रथं रुक्मविभूषितम् ॥ २
धृष्टद्युम्नं तदायान्तं द्रोणस्यान्तचिकीर्षया ।
परिवव्रुर्महाराज पाञ्चालाः पाण्डवैः सह ॥ ३
तथा परिवृतं दृष्ट्वा द्रोणमाचार्यसत्तमम् ।
पुत्रास्ते सर्वतो यत्ता ररक्षुर्द्रोणमाहवे ॥ ४
बलार्णवौ ततस्तौ तु समेयातां निशामुखे ।
वातोद्धूतौ क्षुब्धसत्त्वौ भैरवौ सागराविव ॥ ५
ततो द्रोणं महाराज पाञ्चाल्यः पञ्चभिः शरैः ।
विव्याध हृदये तूर्णं सिंहनादं ननाद च ॥ ६
तं द्रोणः पञ्चविंशत्या विद्ध्वा भारत संयुगे ।

C 7 7818
B 7 110 7
K 7 171 7

---

भयानक (K₄ °वहौ), D₅ महाभयं (for भयावहम्)

Colophon K₆ D₄ G₅ missing — *Sub-parvan* Editions घटोत्कचवधपर्व — *Adhy name* Ś₂ K₁ ₂ ₄ B D (D₄ missing) T G₁ ₃ M₁ ₂ रात्रियुद्धं, Bom ed रात्रियुद्धे सङ्कुलयुद्ध — *Adhy no* (figures, words or both) Dn₁ 169, D₂ 170, D₃ 64, T G₁₋₄ M₁ ₂ 165, M₃₋₅ 164 — *Śloka no* Dc₁ Dn₁ 44

## 145

☞ This adhy is missing in K₆ D₄ G₅ (cf v l 7 125 14, 141 35, 137 9)

1 ᵃ) Ś₂ K₁, ₂ D₁₋₃ ₅₋₈ T G₂₋₄ तु तुमु( D₅ ₇ ₈ °म )ले (for सुतु°) — ᵇ) Ś₁ K₁₋₃ B₃ (marg as in text) D₁ M₃₋₅ भयानके, B₂ D₇ महाभये, G₂ ₄ महाहवे (for भयावहे) — ᵈ) Ś₂ B₅ अभ्यधावत, D₈ °वर्तयत, G₁ M अन्ववर्तत (for अभ्य°)

2 ᵃ) K (K₅ missing) D₁ ₆ समार्जयन्, B₃ Dn₁ ससृजानो, Dc₁ ससमार्ज (sic), Dn₂ D₇ ₈ M₃ ₄ सदधानो, D₃ समृद्धन्वै, T G₃, ₄ समृशानो (for संसृजानो) D₃ ₅ सदधानस्तु विशिखान् — ᵇ) T G₃₋₄ विकर्षंश्च पुन पुन — ᶜ) K₃ ₄ B Dc₁ Dn M₃ ₄ अभ्यद्रवत, D₂ ₅ °सर्पत (for °वर्तत) — ᵈ) D₂ ₅ ₇ ₈ हेम, M₁ ₂ रुग्म (for रुक्म)

3 ᵃ) K₁ D₃ ₆₋₈ तथा, B Dc₁ Dn अथ, D₂ ₅ भृश, S (G₅ missing) द्रुत (for तदा) D₂ S (G₅ missing) यात, D₅ यात (for [आ]यान्त) — ᵈ) Some MSS पचाला

4 ᵇ) Ś₂ K₁ ₂ द्रोणमाचार्यमुत्तम — ᶜ) B₁ ₃ सततो (sic) (for सर्वतो)

5 ᵃ) D₅ महार्णवौ (for बला°) — ᵇ) Ś₁ K₃ समयातौ, Ś₂ समीयातां, D₂ समाख्यातां (for समेयाता) — ᶜ) Ś₁ सत्रोद्धतौ, D₂ वातोद्धतौ (for °द्धूतौ) Dn₂ क्रुद्ध (for क्षुब्ध-) Ś₁ K₃ मंत्री (for सत्त्वौ) — ᵈ) B₅ यथा (for इव)

6 ᵃ) G₁ M स तु (for ततो) — ᵇ) K₁ D₆ पाचाल° (for °ल्य) K₄ D₁ स द्व (for शरै°) — D₆ reads 6ᶜ–13ᶜ on marg — ᶜ) T G₂ विव्याथ (for °ध) B₁ D₈ समरे (for हृदये) — After 6ᵃᵇᶜ, D₃ reads 20ᵈ–21ᵉ for the first time, repeating it in its proper place D₃ om. 6ᵈ–7ᶜ — ᵈ) D₇ ₈ सुदर्द संदनस्थितं

C. 7 7615
B. 7 170 7
K 7 171 7

चिच्छेदान्येन भल्लेन धनुरस्य महाप्रभम् ॥ ७
धृष्टद्युम्नस्तु निर्विद्धो द्रोणेन भरतर्षभ ।
उत्ससर्ज धनुस्तूर्णं संदश्य दशनच्छदम् ॥ ८
ततः क्रुद्धो महाराज धृष्टद्युम्नः प्रतापवान् ।
आददेऽन्यद्धनुः श्रेष्ठं द्रोणस्यान्तचिकीर्षया ॥ ९
विकृष्य च धनुश्चित्रमाकर्णात्परवीरहा ।
द्रोणस्यान्तकरं घोरं व्यसृजत्सायकं ततः ॥ १०
स विसृष्टो बलवता शरो घोरो महामृधे ।
भासयामास तत्सैन्यं दिवाकर इवोदितः ॥ ११
तं दृष्ट्वा तु शरं घोरं देवगन्धर्वमानवाः ।
स्वस्त्यस्तु समरे राजन्द्रोणायेत्यब्रुवन्वचः ॥ १२
तं तु सायकमप्राप्तमाचार्यस्य रथं प्रति ।
कर्णो द्वादशधा राजंश्चिच्छेद कृतहस्तवत् ॥ १३
स छिन्नो बहुधा राजन्सूतपुत्रेण मारिष ।
निपपात शरस्तूर्णं निकृत्तः कर्णसायकैः ॥ १४
छित्त्वा तु समरे बाणं शरैः संनतपर्वभिः ।
धृष्टद्युम्नं रणे कर्णो विव्याध दशभिः शरैः ॥ १५
पञ्चभिर्द्रोणपुत्रस्तु स्वयं द्रोणश्च सप्तभिः ।

---

7 D3 om $7^{abc}$ (cf v 1 6) D6 reads 7 on marg —$^{b}$) D5 भरत (for मा°) D6 -सत्तम (for सयुगे) —$^{d}$) B1–4 Dc1 Dn1 D3 महास्वन, B5 °स्मन (for °प्रभम्)

8 D6 reads 8 on marg —$^{a}$) Ś K1–3 D1 6–8 च (for तु) —$^{b}$) S (G5 missing) रणे द्रोणेन भारत —$^{c}$) Dn2 D2 5 उत्सृज्यत (Dn2 °ज्य च) धनु शीघ्र —$^{d}$) T G2–4 सदष्टदशनच्छद

9 D6 reads 9 on marg —$^{c}$) Ś1 आदधे, Ś2 K1 2 4 D6 G1 3 4 M आदाय (for आददे) S (G5 missing) दिव्य (for श्रेष्ठं) D8 आददानो धनु श्रेष्ठ —$^{d}$) = $3^{b}$ G4 द्रोणस्यात चिकीर्षया

10 Dn1 om 10 D6 reads 10 on marg —$^{a}$) B Dc1 स विकृष्य (for विकृष्य च) Dn2 D2 3 7 8 S (G5 missing) तद् (for च) Ś2 damaged, K4 तत्र, Dn2 D2 5 श्रीमान्, D3 S (G5 missing) श्रेष्ठम् (for चित्रम्) — K1 reads $10^{bc}$ twice. —$^{b}$) Ś2 ** र्णं (for माकर्णात्) G1 M1 2 आकर्णपरिपूरितं —$^{c}$) Dn2 D2 5 [अ]न्यतक (for [अ]न्तकरं) Ś K1 (second time) 2–4 D6 7 रौद्र, K1 (first time) चित्र (for घोर) —$^{d}$) D2 5 महद्, G1 M1 2 तथा (for तत) D6 उत्सृजत्सायकोत्तम

11 D6 reads 11 on marg —$^{a}$) G1 3 4 M घोरसृष्टो (for विसृष्टो) —$^{b}$) Dn2 D2 5 तस्मिन्नीद्र (for शरो घोरो) G1 M1 2 शरो हेमपरिष्कृत —$^{c}$) B Dc1 तापयामास तत्सैन्यं

12 D6 reads 12 on marg —$^{a}$) B Dc1 Dn D2 5 6 G1 M1 2 तु दृष्ट्वा (by transp), M3–5 दृष्ट्वा स —$^{b}$) B3 Dn2 D2 3 5 7 8 T G1–4 M1, 2 5 (*sup lin* as in text) दानवा (for मानवा) —$^{d}$) G1 3 4 M द्रोणस्य (for द्रोणाय)

13 Dn1 om. $13^{a}$–$14^{b}$, Dc1 reads the same on marg D6 reads $13^{abc}$ on marg —$^{a}$) B2 5 D8 शायकम् (for सा°) Ś2 B आयातम् (for अप्राप्तम्) —$^{c}$) Ś2 कृत्तो (sic), K1 D1 6 कृत्तो (for कर्णो) Ś1 K3 चकर्त, Dc1 कर्णस्तु, D7 कर्णो वि-, D8 कर्णोपि (for कर्णो द्वा) — Ś K (K5 missing) D1 6 om (hapl) $13^{d}$–$14^{a}$ Dn2 reads $13^{d}$–$15^{b}$ twice.

14 For the repetition in Dn2, cf v 1 13 Ś K (K5 missing) D1 6 om. $14^{a}$, Dn1 om $14^{ab}$ (for all, cf v 1 13) M3–5 om $14^{ab}$ Dc1 reads $14^{ab}$ on marg —$^{a}$) T G2–4 सछिन्नो, G1 सभिन्नो, M1 2 स भिन्नो (for स छिन्नो) — D6 reads $14^{b}$–$15^{d}$ on marg —$^{b}$) Ś1 पुत्रो हि (for पुत्रेण) Ś2 damaged, K3 B धन्विना (for मारिष) Dn2 (both times) D2 5 7 3 धृष्टद्युम्नस्य मारिष (D7 8 भारत) —$^{c}$) D6 तुण (sic) (for तूर्णं) —$^{d}$) K3 8 Dn2 (both times) D2 8 निकृत्त, D5 निकृत्त (for निकृत्त) Ś2 -मार्गणै (for सायकै) B Dc1 Dn1 निर्विषो भुजगो यथा, D7 8 कृत्त कर्णस्य सायकै

15 For the repetition in Dn2, cf. v 1 13 D6 reads 15 on marg K2–4 B2 om $15^{ab}$ —$^{a}$) D8 G1 M भित्त्वा (for छित्त्वा) Ś1 K1 D1 2 6 च, Ś2 स (for तु) Ś2 राजन्, B5 Dn1 n2 (both times) बाणान् (for बाण) —$^{b}$) Dn2 (first time) om सनत —$^{c}$) Dc1 Dn2 D2 5 तत, S (G5 missing) पुन (for रणे) —$^{d}$) T G2 विव्याध (for °ध) Ś2 बहुभि, K4 Dn2 D2 5 निशितै (for दशभि)

16 $^{a}$) G1 M1 2 च (for तु) —$^{b}$) N (except Ś1 Dn2, K5 D1 missing) तु (for च) Dn2 D2 5

शल्यश्च नवभिर्बाणैस्त्रिभिर्दुःशासनस्तथा ॥ १६
दुर्योधनश्च विंशत्या शकुनिश्चापि पञ्चभिः ।
पाञ्चाल्यं त्वरिताविध्यन्सर्व एव महारथाः ॥ १७
स विद्धः सप्तभिर्वीरैर्द्रोणत्राणार्थमाहवे ।
सर्वानसंभ्रमाद्राजन्प्रत्यविध्यत्त्रिभिस्त्रिभिः ।
द्रोणं द्रौणिं च कर्णं च विव्याध तव चात्मजम् ॥ १८
ते विद्धा धन्विना तेन धृष्टद्युम्नं पुनर्मृधे ।
विव्यधुः पञ्चभिस्तूर्णमेकैको रथिनां वरः ॥ १९
द्रुमसेनस्तु संक्रुद्धो राजन्विव्याध पत्रिणा ।
त्रिभिश्चान्यैः शरैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ २०
स तु तं प्रतिविव्याध त्रिभिस्तीक्ष्णैरजिह्मगैः ।
स्वर्णपुङ्खैः शिलाधौतैः प्राणान्तकरणैर्युधि ॥ २१
भल्लेनान्येन तु पुनः सुवर्णोज्ज्वलकुण्डलम् ।
उन्ममाथ शिरः कायाद्द्रुमसेनस्य वीर्यवान् ॥ २२
तच्छिरो न्यपतद्भूमौ संदष्टौष्ठपुटं रणे ।
महावातसमुद्धूतं पक्वं तालफलं यथा ॥ २३
तांश्च विद्ध्वा पुनर्वीरान्वीरः सुनिशितैः शरैः ।
राधेयस्याच्छिनद्भल्लैः कार्मुकं चित्रयोधिनः ॥ २४

C 7 7633
B 7 170 24
K 7 171 24

---

पचभि· ( for सप्तभि ) — $^{c}$ ) D5 शल्य ( for शल्यश्च ) Ś K1 2 4 Dc1 Dn D1 3 6 तु ( for च ) Ś K ( K5 missing ) D1 2 6-8 दशभिर् ( for नवभिर् ) Dn2 भल्लैस् ( for बाणैस् ) — $^{d}$ ) D3 तदा ( for तथा )

17 $^{a}$ ) B1 om from श्च विंशत्या up to द्रोणं (in 18$^{c}$) K2 4 B ( B1 om.) D ( D5 missing ) तु ( for च ) — $^{b}$ ) Ś K ( K5 missing ) B. D1 3 6-8 सप्तभि ( for पञ्चभि ) — $^{c}$ ) Ś2 पाचाल्यं ( for °ल्य ) Dn1 त्वरया, D3 6 क्षिप्रम्, G2 परितो ( for त्वरिता ) Ś K1 2 [आ]विध्य, D5 [आ]दिश्य ( for [अ]विध्यन् ) D5 पाचाल्य म ततो विध्य

18 B1 om up to द्रोणं ( cf v 1 17 ) — $^{a}$ ) Ś1 D5 घोरैर्, D3 6 बाणैर् ( for वीरैर् ) — $^{b}$ ) Ś K1-3 D1 7 8 धृष्टद्युम्नस्तथा ( Ś1 K3 °म्नस्तदा , K2 °म्नो यथा ) हवे, K4 द्रोणस्यार्थे महाहवे, D3 6 द्रोणत्राणाय ( D5 °र्थं ) मयुगे — $^{c}$ ) Ś K1-3 D1 3 7 असंभ्रम ( Ś2 °मान, D7 °मो ) Dn2 D2 5 स चापि प्रतिविव्याध, D5 स सर्वा न्संभ्रमाद्राजन् — $^{d}$ ) K1. 2 प्रत्यविध्यस् (sic), Dn2 D2 5 सर्वानेव ( for प्रत्यविध्यत् ) Ś2 B3 D8 6 T G2-4 शरैः ( for the second त्रिभि ) — $^{e}$ ) Dn2 D2 5 S ( except G1, G. missing ) transp द्रौणिं ( Dn2 °ण ) and कर्णं — $^{f}$ ) T G1. 2 विव्याय ( for °ध ) Ś2 K1 2 4 B Dc1 Dn1 D1 3 6-8 M1 2 transp तव and च Dn2 D2 5 विव्याध तनय त( D2 °यस्त )च

19 $^{a}$ ) K4 भिन्ना ( for विद्धा ) Dn2 D2 5 त्वरायुक्तो महाराज — $^{b}$ ) Ś K ( K5 missing ) ततो, D5 महा ( for पुनर् ) Dn2 D2 5 धृष्टद्युम्नो महामृधे — $^{c}$ ) B1 समरे ( for पञ्चभिस् ) G1 M1. 2 चैव ( for तूर्णम् ) Dn2 विव्याध समवेतास्ते ( sic ), D2 5 विव्यधु समवेतास्ते, D7 8 °धु पचविंशत्या, T G2 °धुश्चैवमेकैक, G3 4 °धुश्च नमेकैक, M3-5 पचभिर्विव्यधुश्चैनम् — K1 om (hapl ) 19$^{d}$-20$^{c}$ — $^{d}$ ) T G2-4 पंचभी ( for एकैको ) B Dc1 Dn1 G3 4 M3-5 वरा ( for वर ) Dn2 D2 5 मुच( D5 °च )तो भरवात्रवान्, D7 8 प्रत्येक रथिना वर

20 K1 om 20$^{abc}$ ( cf. v l. 19 ) — $^{a}$ ) S ( G5 missing ) द्यु( G1 M3. 4 द्रु )मत्सेनस् ( for द्रुमसे° ) D8 सु ( for तु ) Ś1 K3 तं ( for सं- ) — $^{b}$ ) S ( G5 missing ) कर्णं ( for राजन् ) T G2 विव्याय ( for °ध ) — $^{c}$ ) Dn2 D2 5 पुनश्च विशिखैस्तूर्णं — D8 reads 20$^{d}$-21$^{c}$ for the first time after 6$^{abc}$

21 For the repetition in D8, cf v 1 20 — $^{a}$ ) T G2-4 च ( for तु ) T G2 विव्याय ( for °ध ) — $^{d}$ ) D2 रणे ( for युधि ) D5 प्राणातकरणे रणे

22 $^{a}$ ) T G2-4 स, G1 M1 2. 4 5 च, M8 lacuna ( for तु ) — $^{b}$ ) G1 M1 2 कर्णोज्वलितकुडलं — $^{c}$ ) Ś2 उम**, K1 4 D1 उच्चकर्त, K2 B Dc1 Dn1 निचकर्त ( for उन्ममाथ ) — $^{d}$ ) T G ( G5 missing ) द्युमत्से नस्य, M1 2 द्युमसे°, M3. 4 द्रुमत्से° ( for द्रुमसे ) Dn2 D2 5 सयुगे ( for वीर्यवान् )

23 $^{a}$ ) Dn2 D2 5 प्रापतद् ( for न्य° ) — $^{b}$ ) D2 S ( G5 missing ) मदष्टोष्ठ — $^{c}$ ) D5 8 समुद्भूतं — $^{d}$ ) K1 B1 2 पक्व , D6 फलं ( for पक्व ) B8 वने ( for यथा ). — After 23, S ( G5 missing ) ins

1189* द्युमत्सेनं हतं दृष्ट्वा धृष्टद्युम्न प्रतापवान् ।
कर्णमभ्यद्रवद्राजन्सायकैर्बहुभि· शितै ।

[ ( L 1 ) M3-5 द्रुमत्सेन — ( L 2 ) M अभ्यर्दयद् ( for °द्रवद् ) ]

24 Dn1 repeats 24$^{ab}$ after 25$^{ab}$ — $^{a}$ ) Dn1 ( first time ) स, D2 तु ( for च ) K3 B2 वीरो, K4 Dn1 ( first time ) n2 D2 योधान् ( for वीरान् ) D5 ताश्च विव्याध वीरस्तु — $^{b}$ ) D2 तु ( for सु ) D5

C 7 7634
B 7 170 25
K 7 171 25

न तु तन्ममृषे कर्णो धनुषश्छेदनं तथा ।
निकर्तनमिवात्युग्रो लाङ्गूलस्य यथा हरिः ॥ २५
सोऽन्यद्धनुः समादाय क्रोधरक्तेक्षणः श्वसन् ।
अभ्यवर्षच्छरौघैस्तं धृष्टद्युम्नं महाबलम् ॥ २६
दृष्ट्वा तु कर्णं संरब्धं ते वीराः षडृषर्षभाः ।
पाञ्चाल्यपुत्रं त्वरिताः परिवव्रुर्जिघांसया ॥ २७
षण्णां योधप्रवीराणां तावकानां पुरस्कृतम् ।
मृत्योरास्यमनुप्राप्तं धृष्टद्युम्नममंसहि ॥ २८
एतस्मिन्नेव काले तु दाशार्हो विकिरञ्शरान् ।
धृष्टद्युम्नं पराक्रान्तं सात्यकिः प्रत्यपद्यत ॥ २९
तमायान्तं महेष्वासं सात्यकिं युद्धदुर्मदम् ।
राधेयो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ॥ ३०
तं सात्यकिर्महाराज विव्याध दशभिः शरैः ।
पश्यतां सर्ववीराणां मागास्तिष्ठेति चाब्रवीत् ॥ ३१
स सात्यकेस्तु बलिनः कर्णस्य च महात्मनः ।
आसीत्समागमो घोरो बलिवासवयोरिव ॥ ३२
त्रासयंस्तलघोषेण क्षत्रियान्क्षत्रियर्षभः ।
राजीवलोचनं कर्णं सात्यकिः प्रत्यविध्यत ॥ ३३
कम्पयन्निव घोषेण धनुषो वसुधां बली ।
सूतपुत्रो महाराज सात्यकिं प्रत्ययोधयत् ॥ ३४

---

पुनर्योधा सहस्रश —$^{c}$) K2 बाणै (for भल्लै) —$^{d}$) B3 धन्विन (for योधिन)

25 $^{a}$) B5 स (for न) Dn2 D2 5 S (G5 missing) च (for तु) —$^{b}$) Ś1 K (K5 missing) D1 तदा (for तथा) D6 धनुश्चिच्छेदतस्तथा (sic) —After 25$^{ab}$, Dn1 repeats 24$^{ab}$ —$^{c}$) B1 D3 6 T G2–4 विकर्तनम्, Dn2 D2 5 विलेख° (for निकर्त°) B D01 Dn1 G4 [त्व]त्युग्र (for °ग्रो) —$^{d}$) Ś K2 3 B1 (marg as in text) 5 D01 D1 3, 6 Cd महा, K1 महान् (for यथा)

26 $^{a}$) Ś K1–3 D1 सोन्यत्कार्मुकमादाय, D6 7 8 G1 M1 2 सोप्यन्यद्धनुरादाय —$^{b}$) Ś1 K1 D3 6 G1 3 4 M क्रोधाद् (for क्रोध) —$^{c}$) K4 B1 D1 अभ्यद्रवत्, Dn1 अभ्यवर्षन्, D2 5 अन्ववर्षत् (for अभ्य°) Dn2 D2 5 7 8 शरौघेण (for °घैस्त) —$^{d}$) D2 5 महारथं, S (except G1 M1 2, G5 missing) °बल (for °बलम्)

27 $^{a}$) K4 B D01 Dn D2 5 कर्णं तु (by transp) Ś K3 संरब्धास् —$^{b}$) K1 षण्णरर्षभा, D2 भरतर्षभा, D5 7 8 पार्षतर्षभ, S (G5 missing) षण्महारथा (for षडृषर्षभा) Cd cites षडृषा —$^{c}$) Dn2 D2 5 7 8 S (G5 missing) पाञ्चालपुत्रं Ś K (K5 missing) D1 3, 6 संदृष्टा; D7 8 सरब्धा (for त्वरिता) —$^{d}$) Dn2 D2 5 जिघांसव (for °या)

28 $^{a}$) G1 M यौध (for योध-) —$^{b}$) Ś1 (marg as in text) 2 पुरस्कृतान्, B5 पुर स्थितं, Dn1 पुरस्तत, D7 3 पुर सरं (for पुरस्कृतम्) —$^{c}$) T G2–4 धृष्टद्युम्नम् (for मृत्योरास्यम्) —$^{d}$) T G2–4 मृत्युराष्ट्रम् (G3 °लोकम्) (for धृष्टद्युम्नम्) Dn2 D2 5 मेनिरे सैनिका विभो (D5 भृश)

29 $^{b}$) S (G5 missing) विसृजन् (for विकिरन्) —$^{c}$) B D01 Dn1 परित्रातुं, D7 8 च संभ्रांत (for पराक्रान्त) —$^{d}$) B1 प्रत्यदृश्यत, Dn2 D2 5 पर्य(Dn2 प्रत्य)रक्षत, D6 समपद्यत (for प्रत्य°)

30 $^{a}$) Dn2 D2 5 तमापतत संप्रेक्ष्य —$^{b}$) G1 सात्वद, M सात्वत (for सात्यकिं) —$^{d}$) Dn2 D2 5 ततो विव्याध सयुगे

31 $^{a}$) B4 D2 5 सात्यकिं —$^{b}$) T G2 विव्याथ (for °ध) D2 5 G1 M1 2 बहुभि (for दशभि) —$^{c}$) S (G5 missing) -सैन्याना (for -वीराणा) —$^{d}$) Ś2 [अ]थ (for च)

32 $^{a}$) K1 2 D1 सु, M3 5 च (for तु) B3 सात्यकेर्बलिनो राजन्, D5 G1 M1 2 सात्यकेश्चापि (D5 °श्चैव) बलिन —$^{c}$) K4 B D (D4 missing) S (except G1 M1 2, G5 missing) राजन् (for घोरो) —$^{d}$) K1 2 वह्नि (for बलि)

33 $^{a}$) D7 8 भासयस् (for त्रासयस्) Dn2 D2 5 रथ, M3 तम (for तल-) —$^{b}$) K1 2 D1 क्षत्रियर्षभ —$^{c}$) D5 T G2–4 -लोचन K1 तत्र, K2 राजन्, D5 G3 कर्णं (for कर्णं) —$^{d}$) B5 D2 5 7 सात्यकिं Ś2 प्रत्यविपद्य (sic) (for प्रत्यविध्यत) D6 corrupt

34 $^{a}$) Ś2 K1 2 तल (for इव) —$^{b}$) Dn2 D3 T G2–4 धनुषा (for °षो)

35 $^{a}$) Ś2 D5 7 8 विपाट, G1 M1 2 विपाठै (for विपाठ) D2 5 कर्ण (for -कर्णि-) —$^{c}$) Ś1 K3

विपाठकर्णिनाराचैर्वत्सदन्तैः क्षुरैरपि ।
कर्णः शरशतैश्चापि शैनेयं प्रत्यविध्यत ॥ ३५
तथैव युयुधानोऽपि वृष्णीनां प्रवरो रथः ।
अभ्यवर्षच्छरैः कर्णं तद्युद्धमभवत्समम् ॥ ३६
तावकाश्च महाराज कर्णपुत्रश्च दंशितः ।
सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ॥ ३७
अस्त्रैरस्त्राणि संवार्य तेषां कर्णस्य चाभिभो ।
अविध्यत्सात्यकिः क्रुद्धो वृषसेनं स्तनान्तरे ॥ ३८
तेन बाणेन निर्विद्धो वृषसेनो विशां पते ।
न्यपतत्स रथे मूढो धनुरुत्सृज्य वीर्यवान् ॥ ३९
ततः कर्णो हतं मत्वा वृषसेनं महारथः ।
पुत्रशोकाभिसंतप्तः सात्यकिं प्रत्यपीडयत् ॥ ४०
पीड्यमानस्तु कर्णेन युयुधानो महारथः ।
विव्याध बहुभिः कर्णं त्वरमाणः पुनः पुनः ॥ ४१
स कर्णं दशभिर्विद्ध्वा वृषसेनं च सप्तभिः ।
सहस्तावापधनुषी तयोश्चिच्छेद सात्वतः ॥ ४२
तावन्ये धनुषी सज्ये कृत्वा शत्रुभयंकरे ।
युयुधानमविध्येतां समन्तान्निशितैः शरैः ॥ ४३
वर्तमाने तु संग्रामे तस्मिन्वीरवरक्षये ।
अतीव शुश्रुवे राजन्गाण्डीवस्य महास्वनः ॥ ४४
श्रुत्वा तु रथनिर्घोषं गाण्डीवस्य च निस्वनम् ।
सूतपुत्रोऽब्रवीद्राजन्दुर्योधनमिदं वचः ॥ ४५

C 7 7654
B 7 170 45
K 7 171, 45

---

चार्य, Ś2 damaged, T G2-4 M3-5 चित्रै, G1 M1 2 तीक्ष्णं (for चापि) — d) B3 शैनेय प्रत्ययुध्यत

36 a) Bom ed युध्यमानो (for युयुधानो) — b) K4 Dn- D2 5 युधि, G1 4 M रथी (for रथ) — c) B1 तूर्णं (for कर्णं)

37 a) D2 6 तु (for च) Dn2 D- 5 कर्णं प्रमुखत कृत्वा — b) D3 6 तु (for च) K2 3 D1 G1 M दंसित, D7 8 T G2 दृशिता B (except B1) Dc1 G3 4 कर्णपुत्राश्च दशि(G3 4 °षि)ता, Dn2 D2 5 पुत्रा स्तत्र विशां पते — c) D5 G3 विविधुस्, T G2 विव्य धुस् (for °धुस्) Dn2 D2 5 सर्वे (for तूर्णं) — d) D7 निशि * (for निशितै)

38 a) Dn2 शस्त्रैर् (for अ) — b) Ś2 चामित, K1 चाभिमु, K2 D1 चाभिभु, K4 B Dc1 Dn2 D3 6 चा विभो, Dn1 चाविभो, D7 8 चाभिभो (for °भो) — c) Ś K (K5 missing) विव्याध (for अविध्यत्) Ś1 K3 Dn2 तूर्णं (for क्रुद्धो) D2,6 अविध्यत्सात्यकि स्तूर्णं

39 a) D3 6 निर्भिन्नो (for निर्विद्धो) — b) Ś2 K1 2 Dn2 महाद्युति, D2 5 महद्युधि (for विशां पते) — c) Ś K1-3 स्व(K1 सु)स्थान्, B1 2 Dc1 D3 6 स्वरथे, Dn2 च रथे, D 7 8 स (D2 च) रणे (for स रथे) Dn2 D2 तूर्णं, G1 M2 रुग्णो, M1 विरुणो (sic) (for मूढो) D5 प्रपतश्च रथे तूर्णं, T G2-4 M3-6 न्यपीदरममरे (M3-6 °दरम रथे) वीरो

40 b) K4 B D (D4 missing) G1 M महारथं (for °रथ) — Ś1 K3 om (hapl) 40c-41b — d) D5 प्रत्यविध्यत, D6 °पीडयन् (for °पीडयत्)

41 Ś1 K3 om 41ab (cf v l 40) — b) Ś2 सात्यकि स महारथ — c) T G2 विव्याय (for °ध) — d) T G2-4 स्वरन्याणै (for °माण)

42 b) K4 Dn2 D2 5 S (G3 missing) पञ्चभि (for सप्तभि) — c) Ś2 K1 2 D2 5 सहस्तौ चा(D2 5 °स्ताश्चा)पि धनुषी, D7 8 सहसा चापध ; T G2-4 हस्त्वावापे (G1 °पौ) च ध°, G1 M सवामहस्ते ध° — d) Dn2 D2 3 5 6 सात्यकि (for सात्वत)

43 a) G1 M1 2 द्वावन्ये K3 4 Dn2 D2 3 5 6 सज्जे (for सज्ये) — b) D6 भयकरौ — c) Ś1 D2 5 अयुध्येतां (for अवि°)

44 a) Dn2 तथा रौद्रे, D5 G1 M1 2 तथा युद्धे (for तु संग्रामे) — d) D8 गाजीवस्य K3 महात्मन, D2 5 च धन्विन, T G2-4 महान्स्वन, G1 M1 2 स्वनो महान् (for महास्वन)

45 D2 5 M4 om (? hapl) 45ab — b) D7 8 गांजी वस्य Some MSS च निस्वनं, B1 D8 6 महास्वन (for च नि°) — d) D7 8 तव पुत्रम् (for दुर्योधनम्) Ś K (K5 missing) D1 दुर्योधनरथं प्रति

46 Before 46, M3-5 ins कर्ण उवाच — a) K1 शर्वा, Dn2 D2 सर्वा, D5 सर्वा, G1 M सर्वं (for सर्वान्) B2 5 अरीन्, Dn1 बलीन्, Dn2 D2 चमूं, D5 चमूर्, D6 शिबी, G1 M बलं (for शिबीन्) D2, 6

C 7 7653
B 7 170 46
K 7 171 46

एष सर्वाञ्शिबीन्हत्वा मुख्यशश्च नरर्षभान् ।
पौरवांश्च महेष्वासान्गाण्डीवनिनदो महान् ॥ ४६
श्रूयते रथघोषश्च वासवस्येव नर्दतः ।
करोति पाण्डवो व्यक्तं कर्मौपयिकमात्मनः ॥ ४७
एषा विदीर्यते राजन्बहुधा भारती चमूः ।
विप्रकीर्णान्यनीकानि नावतिष्ठन्ति कर्हिचित् ४८
वातेनेव समुद्भूतमभ्रजालं विदीर्यते ।
सव्यसाचिनमासाद्य भिन्ना नौरिव सागरे ॥ ४९
द्रवतां योधमुख्यानां गाण्डीवप्रेषितैः शरैः ।
विद्रावानां शतशो राजञ्श्रूयते निनदो महान् ।
निशीथे राजशार्दूल स्तनयित्नोरिवाम्बरे ॥ ५०
हाहाकाररवांश्चैव सिंहनादांश्च पुष्कलान् ।
शृणु शब्दान्बहुविधानर्जुनस्य रथं प्रति ॥ ५१
अयं मध्ये स्थितोऽस्माकं सात्यकिः सात्वताधमः ।
इह चेल्लभ्यते लक्ष्यं कृत्स्नाञ्जेष्यामहे परान् ॥ ५२
एष पाञ्चालराजस्य पुत्रो द्रोणेन संगतः ।
सर्वतः संवृतो योधै राजन्पुरुषसत्तमैः ॥ ५३
सात्यकिं यदि हन्यामो धृष्टद्युम्नं च पार्षतम् ।

---

हन्यान् (s10) (for हत्वा) — $^{b}$) Ś K (K5 missing) मुख्यतश्च, B1 Dn1 मुख्याश्चैव, D3 6 सरथाश्च, D7 8 मुख्यान्सर्व- (for मुख्यशश्च) D1 युध्यतश्च नरर्षभ- — $^{c}$) Dn D2 5 7 S (G5 missing) कौरवाश् (for पौ°) B Dc1 Dn1 महेष्वासो (for °सान्) — After 46$^{abc}$, B Dc1 Dn1 ins

1190* विक्षिपन्नुत्तम धनु ।
पार्थस्तत्रैव नियत

[ (L 1) B5 सुमहद् (for उत्तम) — (L 2) Bom ed पार्थो विजयते तत्र ]

— $^{d}$) D7 8 गाजीव (for गाण्डीव)

47 $^{a}$) T वा (for च) K4 Dn2 D1 2 5 7 8 G1-4 M श्रूयते रथ(D2 5 वज्र)निर्घोषो — $^{b}$) K1 नन्मत- (s10), K2 नदत-, Dn2 D2 5 गर्जत, D6 मर्दन (for नर्दत) — K2 om. 47$^{cd}$ — $^{c}$) D7 8 गांजि (D7 °जी)वो (for पाण्डवो) S (G5 missing) नित्य (for व्यक्तं) — $^{d}$) Ś K1 कर्मौपायिकमात्मन, B2 4, 5 Dn2 D2 5 कर्मोपायिक°, D3 कर्मौपधिक°, D7 8 क्रुद्ध-रूप क्षय पुन Cd cites औपायिक

48 $^{a}$) D1 विदार्यते, G3 M हि दीर्यते (for विदी°) Dn2 D2 5 एक (Dn2 °प) पार्थो महाराज — $^{b}$) M3 दीर्यते (for भारती) Dn2 मर्दयत्सुमहाचमू, D2 5 सूद-यत्सुमहा(D5 °स्य महा)चमू — After 48$^{ab}$, Ś1 K3 read 49$^{cd}$ D3 om 48$^{c}$-50$^{f}$ — $^{c}$) K3 Dn2 D2 5 6 [ऽ]ने कानि (for [ऽ]नी°) B5 एव कीर्णान्यनीकानि — $^{d}$) B Dc1 Dn1 न हि, G1 M1. 2 नात्र, M3-5 तात (for नाव) Ś1 K3 कुत्रचित् (for कर्हि°)

49 D3 om 49 (cf v 1 48) — $^{a}$) B1-3 Dc1 Dn1 वातैरिव, D. G1 M1 2 °नैव (for °नेव) D5 समुद्भूतम् — $^{b}$) T G2-4 मेघ (for अभ्र-) Dn D2 5 6 विदा(D6 °शी)र्यते (for विदी°) — Ś1 K3 read 49$^{cd}$ after 48$^{ab}$ — $^{c}$) T G2-4 आलोक्य (for आसाद्य)

50 D3 om. 50 (cf. v 1. 48) T G2-4 om 50 — $^{a}$) G1 M यौध — $^{b}$) D5 7 8 गाजी(D5 °डी)व प्रेरितै शरै — $^{c}$) Dn2 D2 5 पतता समरे राजन् — $^{d}$) B निस्वनो, Dc1 Dn1 नि स्वनो (for निनदो) G1 M गजाना श्रूयते स्वन- (M3-5 ध्वनि) — After 50$^{cd}$, Ś K (K5 missing) B Dc1 Dn D2 5 6 read 51$^{cd}$ for the first time, repeating the same in its proper place D1 7 8 om 50$^{e}$-51$^{b}$ G1 M read 50$^{ef}$ after 51 — $^{e}$) G1 M रथ- (for राज)

51 D1 7 8 om 51$^{ab}$ (cf v 1 50) Ś K (K5 missing) B Dc1 Dn D2 5 6 read 51$^{cd}$, for the first time, after 50$^{cd}$ — $^{c}$) Ś2 K1 2 (all second time) रथ- (for शृणु) B3 (second time) D6 च बहुधो (D3 °धा) (for बहुविधान्) Ś K (K5 missing) B Dc1 Dn D2 5 6 (all first time) शृणु दुंदुभिनिर्घोषम् — $^{d}$) B3 (second time) ह्यर्जुनस्य — After 51, G1 M read 50$^{ef}$

52 $^{a}$) Ś K1-3 अत्र (for मध्ये) — $^{b}$) Ś2 सात्यकि पुरुषाधम, B Dc1 Dn1 D3. 6 G1 M1 2 °कि सात्वता चर, D7 °कि शत्रुतापन, D8 °कि सत्यविक्रम — D3 om. 52$^{cd}$ — $^{c}$) Ś K1 2 Dc1 Dn1 लक्ष्यते, D5 लभते (for लभ्यते) T G1 3 M1. 2 Cd लक्ष (for लक्ष्य) — $^{d}$) Ś2 K1. 2 सर्वान्, D2 5 कृत्स्नं, G1 M अन्यान् (for कृत्स्नान्)

53 $^{a}$) Ś K (K5 missing) Dn2 एव (for एष) Some MSS पचाल — $^{b}$) M3-5 संयुगे (M4 °ते) (for संगत) D2 5 द्रोणपुत्रेण सगत — D3 om. 53$^{cd}$ — $^{c}$) B Dc1 Dn1 राजन्, Dn2 T G2-4 M1 2

असंशयं महाराज ध्रुवो नो विजयो भवेत् ॥ ५४
सौभद्रवदिमौ वीरौ परिवार्य महारथौ ।
प्रयतामो महाराज निहन्तुं वृष्णिपार्षतौ ॥ ५५
सव्यसाची पुरोऽभ्येति द्रोणानीकाय भारत ।
संसक्तं सात्यकिं ज्ञात्वा बहुभिः कुरुपुंगवैः ॥ ५६
तत्र गच्छन्तु बहवः प्रवरा रथसत्तमाः ।
यावत्पार्थो न जानाति सात्यकिं बहुभिर्वृतम् ॥ ५७
ते त्वरध्वं यथा शूराः शराणां मोक्षणे भृशम् ।
यथा तूर्णं व्रजत्येष परलोकाय माधवः ॥ ५८
कर्णस्य मतमाज्ञाय पुत्रस्ते प्राह सौबलम् ।
यथेन्द्रः समरे राजन्प्राह विष्णुं यशस्विनम् ॥ ५९
वृतः सहस्रैर्दशभिर्गजानामनिवर्तिनाम् ।
रथैश्च दशसाहस्रैर्वृतो याहि धनंजयम् ॥ ६०
दुःशासनो दुर्विषहः सुबाहुर्दुष्प्रधर्षणः ।
एते त्वामनुयास्यन्ति पत्तिभिर्बहुभिर्वृताः ॥ ६१
जहि कृष्णौ महाबाहो धर्मराजं च मातुल ।
नकुलं सहदेवं च भीमसेनं च भारत ॥ ६२
देवानामिव देवेन्द्रे जयाशा मे त्वयि स्थिता ।
जहि मातुल कौन्तेयानसुरानिव पावकिः ॥ ६३
एवमुक्तो ययौ पार्थान्पुत्रेण तव सौबलः ।
महत्या सेनया सार्धं तव पुत्रैस्तथा विभो ॥ ६४
प्रियार्थं तव पुत्राणां दिधक्षुः पाण्डुनन्दनान् ।
ततः प्रववृते युद्धं तावकानां परैः सह ॥ ६५
प्रयाते सौबले राजन्पाण्डवानामनीकिनीम् ।

C 7 7678
B. 7 170 68
K 7 171 68

---

शूरं, M8–5 शूरो (for योधं) D2 5 सर्वे (D5 स वै) स संवृतो वीरै — d) Dn2 D2 5 रथै (for राजन्) T G1 2 M सत्तम (M8–5 °म·) B Dc1 Dn1 शूरैस्तव सहोदरैः

54 a) Dn1 चैव (for यदि) K4 B Dc1 Dn D2 8.7 8 T G2–4 हन्याम, D6 °द्वै (for °मो) — c) Ś1 K8 असशयो (for °य) — d) Ś1 D2 6–8 ध्रुव D3.6 विजय

55 a) M2–5 वीर (for वीरौ) — b) D1 8 महारथा — c) D5 प्रपश्याम, T G2–4 प्रयताम (for °मो) — d) K1 निहतुं, D5 निहत (for निहन्तु)

56 a) Ś K1 2 D1–3 5 6 G1 Cd पुराभ्येति

57 a) D5 ततो (for तत्र) M8–5 भवत (for बहव·) — b) S (except G4, G5 missing) प्रवीरा (for प्रवरा) — c) Dc1 Dn1 यत्र, G3 वावत् (sic) (for या°) T G2–4 चायाति (for जानाति) — d) D5 बहुधा (for °भिर्) B1 युतं (for वृतम्)

58 K4 om (hapl) 58–61 — a) Ś K1–3 D5–8 यतध्व, D2 6 त्वरतु (D5 °त) (for त्वरध्व) Ś1 K1 B Dc1 Dn1 D1.8 तथा, K8 यत, Dn2 D2 5 महा- (for यथा) — b) Ś1 K8 B1 D2 5 शूराणां (for श°) — c) Dn त्विह, D2 त्वेह, D5 त्वेष (for तूर्णं) — d) M3 (before corr) भारत (for माधव) — After 58, Bom ed ins

1191* तथा कुरु महाराज सुनीत्या सुप्रयुक्तया ।

59 K4 D2 om 59 (for K4, cf v l 58) — a) Dc1 Dn1 T G2–4 आस्थाय, D7 8 आदाय (for आज्ञाय) — d) Dn2 महायशा (for यशस्विनम्)

60 K4 om 60 (cf v l 58) — a) D2 कर्णं (for वृत·) B1 M बहुभिर् (for दशभिर्) — c) D2 6 शत (for दश) Ś K1–3 वाजिना शतसाहस्रैर् — d) B Dc1 Dn1 तूर्णं (for वृतो)

61 K4 om 61 (cf v l 58) — b) Ś2 K1 2 दुर्विमर्षण, Dn1 दुष्प्रहर्षण (for दुष्प्रधर्षण) — c) G1 M1 2 अनुयास्यंतु (for °स्यन्ति)

62 a) Dn2 D2 5 महेष्वासौ, D7 8 महाराज (for °बाहो) — d) Ś2 च सौबल, K4 B Dc1 Dn1 तथैव च, Dn2 D2 6 T G1–4 M1 2 च पांडव, M4 5 (orig) च भारत, M5 (inf lin) च मातुल (for च भारत)

63 a) K8 अपि (for इव) D7 G4 M4 देवेंद्रो — b) K4 B8–5 Dn D1 2 5 T G2 4 त्वयि मे (by transp) — c) D2 5 त्व चैव (for मातुल)

64 b) D2 5 नोदित (for सौबल) Dn2 तव पुत्रेण चोदित — D2 om 64cd — d) K8 सह (for तव) Dn2 D7 8 च दंशित, D8 च ते विभो; D5 च तैर्विभो, S (G5 missing) च दंसि (T G2 °शि) तै (for तथा विभो) B Dc1 Dn1 सह पुत्रैश्च ते वि (B5 प्र) भो, D5 तव पुत्रेण नोदित·

65 a) Dn2 D2 5 7 8 पुत्रस्य (for पुत्राणां) — b)

C 7 7678
B 7 170 66
K 7 171 68

बलेन महता युक्तः सूतपुत्रस्तु सात्वतम् ॥ ६६
अभ्ययात्त्वरितं युद्धे किरञ्शरशतान्बहून् ।
तथैव पाण्डवाः सर्वे सात्यकिं पर्यवारयन् ॥ ६७
महद्युद्धं तदासीत्तु द्रोणस्य निशि भारत ।
धृष्टद्युम्नेन शूरेण पाञ्चालैश्च महात्मनः ॥ ६८

इति श्रीमहाभारते द्रोणपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

# १४६

संजय उवाच ।
ततस्ते प्राद्रवन्सर्वे त्वरिता युद्धदुर्मदाः ।
अमृष्यमाणाः संरब्धा युयुधानरथं प्रति ॥ १
ते रथैः कल्पितै राजन्हेमरूप्यविभूषितैः ।
सादिभिश्च गजैश्चैव परिवव्रुः स सात्वतम् ॥ २
अथैनं कोष्ठकीकृत्य सर्वतस्ते महारथाः ।
सिंहनादांस्तदा चक्रुस्तर्जयन्तः स सात्यकिम् ॥ ३
तेऽभ्यवर्षञ्शरैस्तीक्ष्णैः सात्यकिं सत्यविक्रमम् ।

S ( G5 missing ) दिघक्षु पाठमाश्रणे

66 [a]) D7 8 तस्मिन् (for राजन्) — [d]) Ś K1-3 B5 D1 7 8 च, B2 3 Dc1 D3 6 स (for तु) M3-5 सात्यकिं (for सात्वतम्) B1 4 सूतपुत्रसमावृ( B1 °हु )त

67 [a]) K4 B Dc1 Dn1 त्वरितो — [b]) G3. 4 शित- (for शर ) Ś1 K3 -गणान्, D3 6 घरान् (for -शतान्) — [c]) B Dc1 Dn1 D3 6-8 पार्थिवा (for पाण्डवा ) Dn2 D4 5 समेत्य तावका सर्वे — [d]) D6 सात्यकिं प्रत्यवारयन् — After 67, Dn2 D2 5 ins

1192* भारद्वाजस्ततो गत्वा धृष्टद्युम्नरथं प्रति ।

68 [a]) B1 तदासीच्च, Dn2 D2 5 तदा चक्रे, D7 तथा त्वासीद्; D8 तयासीत, T G1-4 M तदा ह्यासीद् (for तदासीत्तु ) — [b]) Dn2 D2 5 निशीथे भरतर्षभ — [c]) B Dc1 Dn1 D2 7 8 वीरेण (for शूरेण) — [d]) Some MSS पचालैश्च, Ś1 K1 2 समतत, K3 B Dc1 G1 M महाद्भुत, Dn D2 सहाद्भुत; D6 महद्भुतं, D8 महात्मभि; T G2-4 महोद्धत (for महात्मन )

Colophon K5 D1 G5 missing — *Sub-parvan* Editions घटोत्कचवध — *Day of Drona's Generalship* K4 चतुर्थदिवसे — *Adhy name* Ś1 K1 2 4 B Dc1 Dn1 D1-3 5-8 G1 2 4 M1 2 रात्रियुद्ध, Bom ed रात्रियुद्धे सकुलयुद्धं — *Adhy no* (figures, words or both) Dn1 170, D2 171, T G1-4 M1 2 166, M3-5 165 — *Śloka no* Dn1 69

## 146

☞ This adhy is missing in K5 G5 ( cf v l 7 125 14, 137 9)

1 D1 missing up to 2[d] ( cf v l 7 141 35) — [a]) Dn2 om (with the ref ) from ततस्ते up to ते रथै (in 2[a]) D2 5 पार्थिवा, D7 [स]भ्यद्रवन् (for प्राद्रवन्) G2 ****रिता सर्वे — [b]) D2 5 त्वदीया, G2 प्राद्रवन् (for त्वरिता ) — [c]) D2 5 सक्रुद्धा (for संरब्धा )

2 D1 missing, Dn2 om up to ते रथै (for both, cf v l 1) — [a]) D2 5 6 G2 तै (for ते) — [b]) Dn2 D2 3 5-8 रत्न (for रूप्य-) — [c]) D6 सादिनश्च (for °भिश्च ) D7 8 चैन (for चैव) Dn2 D2 5 पदातै सादिभिश्चैव — [d]) K2 B2 4 5 स, D2 3 5 6 च (for स्म) K1 Dn1 सात्वता (Dn1 °ता), B5 °त (for °तम्) Bom ed परिवव्रु समतत

3 [a]) B5 D3 6 तथा (for अथ) — [b]) D5 सर्व एव (for सर्वतस्ते) — [c]) Ś1 K1 4 D8 6 T G1. 3. 4 M तथा; K3 B Dc1 Dn1 D1 G2 ततश्च (for तदा) Dn2 D2 4 5 7 8 सिंहनाद महत्कृत्वा — [d]) K4 B1 तर्जयत (B1 °ति ); D6 प्रहरतश्च, G1 M1 2 योधयति, M3-5 विजयत (M4 °ति ) (for तर्जयन्त ) Ś1 B1 5 D6-8 T G2-4 च, K2 स (for स्म) Dc1 Dn1 परस्पर, Dn2 D2 4. 5 चतुर्दिश (for स सात्यकिम्)

4 [a]) D8 G1 M1 2 अभ्यवर्षन्; T G2-4 M3-5 तेवा

C 7 7125
B. 7 173 50
K 7 174 50

निशीथे सूतपुत्रेण शरवर्षेण पीडिताः ।
एते द्रवन्ति पाञ्चालाः सिंहस्येव भयान्मृगाः ॥ ४५
एतस्यैवं प्रवृद्धस्य सूतपुत्रस्य संयुगे ।
निषेद्धा विद्यते नान्यस्त्वदृते भीमविक्रम ॥ ४६
स त्वं कुरु महाबाहो कर्म युक्तमिहात्मनः ।
मातुलानां पितॄणां च तेजसोऽस्त्रबलस्य च ॥ ४७
एतदर्थं हि हैडिम्ब पुत्रानिच्छन्ति मानवाः ।
कथं नस्तारयेद्दुःखात्स त्वं तारय बान्धवान् ॥ ४८
तव ह्यस्त्रबलं भीमं मायाश्च तव दुस्तराः ।
संग्रामे युध्यमानस्य सततं भीमनन्दन ॥ ४९
पाण्डवानां प्रभग्नानां कर्णेन शितसायकैः ।
मज्जतां धार्तराष्ट्रेषु भव पारं परंतप ॥ ५०
रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमाः ।
बलवन्तः सुदुर्धर्षाः शूरा विक्रान्तचारिणः ॥ ५१
जहि कर्णं महेष्वासं निशीथे मायया रणे ।
पार्था द्रोणं वधिष्यन्ति धृष्टद्युम्नपुरोगमाः ॥ ५२
केशवस्य वचः श्रुत्वा बीभत्सुरपि राक्षसम् ।
अभ्यभाषत कौरव्य घटोत्कचमरिंदमम् ॥ ५३

---

Ś1 K1-3 B6 D1.3 6 शरार्दिता , D2 समतत ; D6 महारया ( for शरार्पिता )

45 For the sequence in D7, cf v 1 42 — c ) Bom ed पचाला . — d ) K4 भयार्दिता , S ( except G1 M1, 2 , G6 missing ) [इ]तरे मृगा ( for भयान्मृगा ) Dn2 D2 4 5 7 8 सिंहेनेवार्दिता मृगा

46 For the sequence in D7, cf. v 1. 42 — a ) M1 2 एकस्य ( for एतस्य ) Ś1 K1-3 D1 4 5 7 8 T G3 4 M3 [प्र]व ( for [प्र]वं ) Dn2 D2 4 5 7 8 S ( G6 missing ) प्रवृत्तस्य ( for °द्धस्य ) — b ) D7 om. सूत पुत्रस्य — c ) B4 नास्य ( for नान्यस् ) — d ) K1 4 B D त्वामृते ( for त्वदृते ) Ś1 विक्रमात् ; K1 2 Dn °मं ; D6 ( before corr ) मे , T G3 4 °म ( for °म )

47 For the sequence in D7, cf. v 1 42 — b ) K1 G3 4 इवात्मन , D1 5. 7 8 महात्मना ( for इहात्मन ) — K4 om 47c–49d — c ) D2 च सर्वेषां ( for पितॄणां च ) — d ) Dn2 D1 5 7 8 T G2-4 तेजसा च ( T G2-4 °सास्त्र ) बलेन च , D2 पाडवाना च सर्वश

48 For the sequence in D7, cf v 1. 42 K4 om. 48 ( cf. v 1. 47 ). — a ) D2 यथा यथा ( for एतदर्थं ) D1 अर्थे हि ; G2 इच्छति ( for अर्थं हि ) K1 2 B3 Dn2 D1.4 G1 हैडिंबे ; Dn1 D3 7 8 हैडंबे ( Dn1 'ब ), D5 *ढंबे ( for हैडिम्ब ) — b ) Dc1 Dn1 पुत्रम् ( for पुत्रान् ) — c ) Dn2 यथा ( for कथं ) B1 नु ; B1 D1 न ( for नस् ) Dn2 D2 4 5 7 8 दुर्गात् ( for दु खात् ) S ( G6 missing ) तारयेयु कथं दु खात् — d ) S ( except G1 M1 2 ; G6 missing ) तत् ( for स ) — After 48, Dn2 D2 4 5 7 8 ins

1205* इच्छन्ति पितर पुत्रान्स्वार्थहेतोर्घटोत्कच ।
इहलोकात्परे लोके तारयिष्यन्ति ये हिता ।

[ ( L 1 ) D2 पुत्रान्पितर ( by transp ) — ( L 2 ) D4 5 7 8 इहलोके ( for °कात् ) ]

49 For the sequence in D7, cf. v 1 42 K4 om 49 ( cf v 1. 47 ) — ab ) S ( G6 missing ) त्वयि ( for तव ) B4 D6 ह्यत्र ( for ह्यस्त्र- ) Ś1 K3 दीप्त , G1 M1 2 दिव्य ( for भीम ) Ś1 K1-3 D1 दुर्धरा ( for दुस्तरा ) Dn2 D2 4 5 7 8 तवाप्यसदृशं घोर बल युद्धे महात्मन — d ) Dn2 D4 5 7 8 न समस्तव विद्यते , D2 तथा नान्यस्य विद्यते , G1 M1 2 वर्तते शत्रवो वशे

50 For the sequence in D7, cf v 1 42 — a ) G1 M1. 2 पाचालानां ( for पाण्डवाना ) — b ) All MSS ( except Ś1 K1-3 D1 , Ś2 K5 G5 missing ) निशि ( for शित ) B1 2 5 D3 शायकै ( for -सा° ) — d ) D5 पार भव ( by transp ) D1 पाप ( for पारं ) S ( except G1 M1 2 , G5 missing ) महाबल ( for पर तप )

51 For the sequence in D7, cf v 1 42 K5 om. 51ab — a ) Ś1 K3 वीर ; K1 4 तात ( for भूयो ) — d ) B4 G1 M1 2 विक्रांतपालि( B4 °शालि )न , Dn2 D2 4 5 7 8 °योधिन ( for °चारिण )

52 For the sequence in D7, cf v 1 42 — b ) D2 निशीथे मम पारणे — c ) D8 हनिष्यति ( for वधि° )

53 For the sequence in D7, cf v 1. 42 Before 53, N ( Ś2 K5 missing ) G2 4 M3-5 ins संजय उवाच — c ) Dc1 D2 कौरव्यो , D5 कौंतेयो ( for कौरव्य ) — d ) Ś1 K1-3 B5 D1 3-5 अरिंदम ( B5 D3-5 °म )

54 For the sequence in D7, cf. v 1. 42. Before

घटोत्कच भवांश्चैव दीर्घबाहुश्च सात्यकिः ।
मतौ मे सर्वसैन्येषु भीमसेनश्च पाण्डवः ॥ ५४
स भवान्यातु कर्णेन द्वैरथं युध्यतां निशि ।
सात्यकिः पृष्ठगोपस्ते भविष्यति महारथः ॥ ५५
जहि कर्णं रणे शूरं सात्वतेन सहायवान् ।
यथेन्द्रस्तारकं पूर्वं स्कन्देन सह जघ्निवान् ॥ ५६
घटोत्कच उवाच ।
अलमेवास्मि कर्णाय द्रोणायालं च सत्तम ।
अन्येषां क्षत्रियाणां च कृतास्त्राणां महात्मनाम् ॥ ५७
अद्य दास्यामि संग्रामं सूतपुत्राय तं निशि ।
यं जनाः संप्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति ॥ ५८
न चात्र शूरान्मोक्ष्यामि न भीतान्न कृताञ्जलीन् ।
सर्वानेव वधिष्यामि राक्षसं धर्ममास्थितः ॥ ५९
संजय उवाच ।
एवमुक्त्वा महाबाहुर्हैडिम्बः परवीरहा ।
अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन् ॥ ६०
तमापतन्तं संक्रुद्धं दीप्तास्यमिव पन्नगम् ।
अभ्यस्यन्परमेष्वासः प्रतिजग्राह सूतजः ॥ ६१

C. 7 7842
B 7 173 87
K 7 174 68

54, M3-5 ins अर्जुन उवाच — a) G3 4 [ए]त्र (for [ए]व) — b) Ś1 K1-3 D1 2 6 सात्वत°, M3-5 सत्यक (for सात्यकि) — c) B1 Dn1 D3 6 7 G2 मतो, D1 सत्तो (for मतौ) D2 4 5 8 भूतेषु (for सैन्येषु) — d) Dn2 तु (for च)

55 For the sequence in D7, cf v 1 42 — a) K4 D4 तद् (for स) M3-5 आशु (for यातु) — b) D5 संयुगेन हि, T G2-4 M3-5 निशि युध्यता (by transp) Ś1 K1 2 D1 युध्यता, Dn2 D2 4 7 8 G1 M1. 2 सयुगे (for युध्यतां) — c) Dn D4 6 7 8 पृष्ठतो गोप्ता, D3 °गोप्ता*, D5 °गोप्ता ते — d) K1 महा यशा, D1 °रय (for °रथ)

56 For the sequence in D7, cf v 1 42 — a) Ś1 D6 शूर, D2 4 5 7 8 तूर्णं (for शूरं) S (G5 missing) जहि कर्णं महाबाहो — b) Ś1 K1 2 4 D1 सात्य केन (for सात्वतेन) — Ś1 K1-3 D1 M3-5 om (hapl.) 56cd — d) D5 7 8 स्कदेन सुसहायवान्, G1 M1 2 उपेंद्रेण महायवान्

57 For the sequence in D7, cf v 1 42 — After the ref., S (G5 missing) ins

1206* एवमेव महाबाहो यथा वदसि मां प्रभो ।
त्वया नियुक्तो गच्छामि कर्णस्य वधकाङ्क्षया ।
[(L 1) G1 M प्नन् (for प्व)]

— a) G1 M अहम् (for अलम्) — D3 om. 57b-58a — b) D4 हि (for च) B1 3 5 Dc1 Dn1 सत्तमौ, Dn2 D2-4 7 8 भारत (for सत्तम) — c) Dn2 D3 7 8 वै, D3 lacuna (for च)

58 For the sequence in D7, cf v l. 42 D5 om 58a (cf. v l. 57) — a) D2 6.7 यास्यामि (for दास्यामि) K2 D1 समरामे (for °म) — b) D1 सुत (for सूत) G1 M पुत्रस्य (for पुत्राय) K1 2 D1 वै (for तं) — c) T G3 मा (for य) Ś1 K1-3 जयिन (for य जना) B1 Dc1 G1 M य जना कथयिष्यति; D2 यशो जना प्रवक्ष्यति — d) Ś1 K1-3 D1 भविष्यति (for धरि°)

59 For the sequence in D7, cf v 1 42 — a) Ś1 K2 3 D5 7 8 [अ]स्र- (for [अ]त्र) D6 7 8 -शून्यान् (for शूरान) K1 D5 मोक्षामि; Dn1 योत्स्यामि, D7 योक्षामि (for मोक्ष्यामि) — b) K1 2 स्वभीतान्, M3 4 न भीत (for न भीतान्) M3-5 कृतांजलिं (for °लीन्). Ś1 K3 स्वभीतानकृतांजलीन्. — c) Dn2 D5 7 8 सर्वमेव (for सर्वानेव) — d) D3 5 आश्रित (for आस्थित) — After 59, M3-5 ins an addl. colophon [*Adhy no* M3-5 166]

60 Some MSS om the ref. — a) M3-5 महा राज (for °बाहुर्) — b) K4 Dn2 D1 हैडिंबि, Dc1 Dn1 हैडंब, D2 4 5 7 हैडंबि, D3 हैडंबी (for हैडिम्ब) — c) Dn1 D4 5 7 8 तुमले, M त्वरित (for तुमुले) — d) G1 M1 2 सैन्यानि (for सैन्य वि-) D3 6 अभी सवत् (for विभीषयन्) M3-5 भीषयस्तव सैनिकान्

61 a) K2-4 D1 समेक्ष्य (for सक्रुद्ध) — b) Dn2 D2 4.5 7 8 दीप्तास्य दीप्तमूर्धजं (D2 °लोचन) — c) K1 अभ्ययात्; K2 D3 अभ्यसन्, Dc1 (marg, before corr as in text) प्रहसन्, D6 अभ्येत्य, T G2-4 अभिघ्नन् (for अभ्यस्यन्) K1 परमेष्वासा; B1 °ष्वासै K4 Dn2 D2 4 5 7 8 M3-5 प्रहसन्पु(D4 प्रसह्यपु; M3-5 अक्षोभ्य° पु)रुषव्याघ्र; B3 अभ्ययार्त्तं महेष्वास°, G1 M1 2 अक्षोभ्य प्रतिजग्राह — d) D4 कर्णं विव्याध भारत;

C 7 7843
B 7 173 68
K 7 174 69

तयोः समभवद्युद्धं कर्णराक्षसयोर्निशि । गर्जतो राजशार्दूल शक्रप्रह्लादयोरिव ॥ ६२

इति श्रीमहाभारते द्रोणपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

# १४९

संजय उवाच ।
दृष्ट्वा घटोत्कचं राजन्सूतपुत्ररथं प्रति ।
प्रयान्तं त्वरया युक्तं जिघांसुं कर्णमाहवे ॥ १
अब्रवीत्तव पुत्रस्तु दुःशासनमिदं वचः ।
एतद्रक्षो रणे तूर्णं दृष्ट्वा कर्णस्य विक्रमम् ॥ २
अभियाति द्रुतं कर्णं तद्वारय महारथम् ।
वृतः सैन्येन महता याहि यत्र महाबलः ॥ ३
कर्णो वैकर्तनो युद्धे राक्षसेन युयुत्सति ।
रक्ष कर्णं रणे यत्तो वृतः सैन्येन मानद ॥ ४
एतस्मिन्नन्तरे राजञ्जटासुरसुतो बली ।
दुर्योधनमुपागम्य प्राह प्रहरतां वरः ॥ ५
दुर्योधन तवामित्रान्प्रख्यातान्युद्धदुर्मदान् ।

---

G1 M1 2 सूतज परवीरहा

62 a) D5 T G2-4 तत॰ (for तयो) — b) K8 Dn2 D5 6 7 8 G1 M1 2 मृधे, B1 3 5 Dc1 Dn1 महत्, B2 4 D4 युधि (for निशि) — d) Some MSS ॰प्रह्ला दयोर्

Colophon om in M3-5 Ś2 K5 G5 missing — *Sub-parvan* Ś1 K8 B1 2 (marg) 3 5 D1 घटोत्कचवध — *Adhy name* K1 2 4 B (except B5) D (except D1) T G1-3 M1 2 रात्रियुद्धं, Bom ed रात्रियुद्धे घटोत्कचप्रोत्साहन — *Adhy no* Dn1 173, D2 175, T G2-4 168, G1 M1 2 167 — *Śloka no* Dn1 64

## 149

☞ This adhy is missing in K5 G5 (cf v l 7 125 15, 137 9)

1 Ś2 resumes G3 M3 4 om the ref. — After the ref., G1 M1 2 ins

1207* तस्मिंस्तथा वर्तमाने कर्णराक्षसयोर्मृधे ।

— a) D3 M3-5 राजा (for राजन्) — c) K1 Dc1 (by corr, marg *sec m*) D1 5 प्र(D5 प्रा)यातं, B2 4 आयातं, Dc1 (before corr) Dn1 युध्यतं, G2 प्रयायात् (for प्रयान्तं) B3 तु तथा (for त्वरया) Dn2 D2 4 5 7 8 M3-5 प्रतियां(Dn2 D5 प्रतिया, M3 5 उपया; M4 उपयां)तं महाबाहु — d) G3 जिघांसु॰

— After 1, D7 reads 7 148 42c-59e

2 Ś2 partly damaged — a) Dc1 Dn1 तं (for तु) B Dn2 D2 4 6 7 8 अब्रवीत्तत्र (B2 ॰दय) पुत्रस्ते — b) D1 दुर्योधनम् (for दुःशासनम्) — Before 2cd, M3-5 ins दुर्योधन — c) S (except M3-5, G5 missing) एष पार्थो (for एतद्रक्षो) Ś1 K1-3 D2 वर, Ś2 वरस् (for रणे) Dc1 Dn1 D5 6 कर्णं (for तूर्णं)

3 3ab is partly damaged in Ś2 — a) K1 2 4 D1 अपि, B1 3 4 Dc1 Dn1 प्रति (for अभि) Dn2 D2 5 7 8 रणे, D4 lacuna (for द्रुतं) K4 D1 तूर्णं (for कर्णं) — b) S (G5 missing) त (for तद्) Ś1 K8 महाव्रत, K1 Dc1 Dn D1 2 4 M2-5 ॰रथ (for ॰रथम्) — d) Ś1 K8 B1 तत्र (for यत्र) Dn1 महाबल; G1 M1 2 ॰रथ (for ॰बल॰)

4 Ś2 partly damaged — a) G1 M1 2 धीमान् (for युद्धे) — c) T G1 M तूर्णं (for कर्णं) G3 युक्तो (for यत्तो) — After 4, Dn2 D2 4 6 7 8 ins

1208* मा कर्णं राक्षसो घोरः प्रमादान्नाशयिष्यति ।

[ D2 न (for मा) D4 5 कर्णराक्षसयोर्घोर॰ (D5 ॰र) (for the prior half) ]

5 Ś2 partly damaged — b) K1 जगासुर॰ (for जटा॰) — d) D2 वर (for वर॰)

6 Before 6, M3 5 ins अलंबल, M4 जटासुत — b) D4 5 7 8 प्रमुखान्, S (G5 missing) विख्यातान् (for प्र॰) — D2 4 om (hapl) 6d-7a — d) S

पाण्डवान्हन्तुमिच्छामि त्वयाज्ञप्तः सहानुगान् ॥ ६
जटासुरो मम पिता रक्षसामग्रणीः पुरा ।
प्रयुज्य कर्म रक्षोघ्नं क्षुद्रैः पार्थैर्निपातितः ।
तस्यापचितिमिच्छामि त्वद्दिष्टो गन्तुमीश्वर ॥ ७
तमब्रवीत्ततो राजा प्रीयमाणः पुनः पुनः ।
द्रोणकर्णादिभिः सार्धं पर्याप्तोऽहं द्विषद्वधे ।
त्वं तु गच्छ मयाज्ञप्तो जहि युद्धे घटोत्कचम् ॥ ८
तथेत्युक्त्वा महाकायः समाहूय घटोत्कचम् ।
जटासुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत् ॥ ९
अलंबलं च कर्णं च कुरुसैन्यं च दुस्तरम् ।
हैडिम्बः प्रममाथैको महावातोऽम्बुदानिव ॥ १०
ततो मायामयं दृष्ट्वा रथं तूर्णमलंबलः ।
घटोत्कचं शरव्रातैर्नानालिङ्गैः समार्दयत् ॥ ११
विद्ध्वा च बहुभिर्बाणैर्भैमसेनिमलंबलः ।
व्यद्रावयच्छरव्रातैः पाण्डवानामनीकिनीम् ॥ १२
तेन विद्राव्यमाणानि पाण्डुसैन्यानि मारिष ।

C 7. 7859
B 7 174 16
K 7 175 16

( except G2, G5 missing ) समागतान ( for सहानुगान् )

7 D2 4 om $7^{ab,cd}$ (cf. v l 6) — $^b$) K3 B Dn1 D3 6-8 T G1-4 ग्रामणी ( for अग्रणी ) Dn2 रक्षसाम्प्रो वशी पुरा — $^c$) G1 M1 2 प्रयुज्य कर्म रक्षोघ्नं — $^d$) Ś1 D क्रुद्धैः, M3-5 क्षिप्र ( for क्षुद्रैः ) — $^f$) B3 त्वद्दिष्टो ( hypermetric ) ( for त्वद्दिष्टो ) D5 कर्तुम् ( for गन्तुम् ) K1 2 B Dc1 D1 T G1 2 ईश्वर Dn D2 4 6 7 8 शत्रुघातीगतात्मया, D3 त्वदिष्ट कर्तुमीश्वर — After 7, Dn D2 4 6 7 8 ins

1209* शत्रुघातेश्च राजेन्द्र मामनुज्ञातुमर्हसि ।

On the other hand, G1 M1 2 ins after 7

1210* अथ कुन्तीसुतान्सर्वान्वासुदेवपुरोगमान् ।
हत्वा भक्षयिष्यामि सुतानतुचरैः सह ।

8 $^a$) D1 6 7 8 G1 M1 2 तदा ( for ततो ) G2 राजन् ( for राजा ) — $^b$) D1 2 T G2-4 प्रियमाण, D1 द्रव ( for प्रीय ) — $^d$) D7 8 [ऽ]सि, G1 M त्व ( for ऽहं ) Ś2 K1 2 Dn D1 4 6 7 8 -जये ( for वधे ) T G2-4 पर्याप्तं च द्विषज्जये ( T °प्ता जये, G2 °पद्वधे ) — $^{ef}$) B2 D1 4 तं तु, D3 त्वनु ( for त्व तु ) Ś1 K3 transp [आ]ज्ञप्तो and युद्धे — After 8, Dn2 D2 4 6 7 8 ins.

1211* राक्षसं क्रूरकर्माणं रक्षोमानुषभक्षकम् ।
पाण्डवानां हितं नित्यं हस्त्यश्वरथघातिनम् ।
वैहायसगतिं युद्धे प्रेषयेयमसाङ्गनम् ।

[ ( L 3 ) Dn2 गतं ( for -गतिं ) D1 6 प्रेषये D7 8 प्रेषयाथ यमक्षय ( for the post half ) ]

9 Ś1 K3 om. ( hapl ) $9^{ab}$ — $^a$) Dn M1 5 [उ]क्तो ( for [उ]क्त्वा ) D8 6 महामाय, D5 °बाहु ( for °काय ) — $^b$) D3 समाह्वयद् ( for °हूय ) — For $9^{ab}$, Ś2 K1 2 4 D1 subst

1212* पूर्व तव सुतादिष्टस्तथेत्युक्त्वा महाबल ।

— $^c$) Ś2 K4 B Dc1 D1 2 8 G1 M3 6 जाटासुरिर् — $^d$) D2 6 समाकिरत् ( for अवा° )

10 Dn1 om. $10^{ab}$, Dc1 reads it on marg — $^a$) Dn2 अलंबुष, D2 °बुर्सि, D1 5 °बुर्सं, D7 °बलग्न, D8 °बुसग्न ( for अलंबलं ) — $^b$) K2 B4 D1 सु, B5 तु ( for च ) Ś1 K3 दुःसह ( for दुस्तरम् ) — $^c$) Ś2 K4 Dn2 हैडिंबि, Dn1 D1. 5 7 8 हैडंबि D3 हैडंबिस्तु प्रमथ्यैको — $^d$) S ( G5 missing ) विप्रवातो ( for महावातो ) D1. 5 7 8 द्रुमान् ( for ऽम्बुदान् )

11 $^a$) B Dc1 Dn मायाबल ( for °मयं ) S ( G5 missing ) मायामय समास्थाय — $^b$) B Dc1 Dn रक्षस ( for रथं ) B5 अलस्थल, Dc1 Dn अलंबुष, D2 °बुसि, D1 5 8 °बुष ( for अलंबल ) — D4 M3 om. ( hapl ) $11^c$–$12^b$ — $^d$) B1 Dc1 Dn1 समार्पयत्; B3 समर्द°, B2 6 S ( M8 om , G5 missing ) समर्प°; Dn2 D2 5 7 8 समाकिरत् ( for °र्दयत् )

12 D1 M3 om $12^{ab}$ ( cf v l 11 ) — $^a$) Ś1 K3 विध्यश्च; Ś2 भित्त्वा च, Dn2 D5 7 विद्ध्वा तु, D2 विव्याध ( for विद्ध्वा च ) — $^b$) Ś1 महाबल, Ś2 K ( K3 missing ) D1. 3 6 महाबलं, Dn अलंबुष, D2 °बुसि, D5 8 °बुस; D7 °बस ( for °बल ) — $^c$) Dn2 D1. 5 7. 8 शरैस्तूर्णं, D2 शरैस्तीक्ष्णैः; S ( G5 missing ) शरैः राजन् ( for शरव्रातैः )

13 D8 om. ( hapl ) $13^a$–$14^b$ — $^a$) Dn2 D1 तेन व्यद्राव्यमाणानि, D5 तेन सैन्यानि मग्नानि — $^b$) B Dc1 Dn D2 6 7 भारत ( for मारिष ) D5 पाण्डवाना महात्मनां — $^c$) Ś K1-3 D1 5. 6 सः प्रकीर्यंते ( D1 6 °त ), B1 विप्रकीर्यंते, D2 7 सम( D7 चाव )कीर्यंत ( for

C 7 7860
B 7 174 16
K 7 175 16

निशीथे विप्रकीर्यन्त वातनुन्ना घना इव ॥ १३
घटोत्कचशरैर्नुन्ना तथैव कुरुवाहिनी ।
निशीथे प्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः ॥ १४
अलंबलस्ततः क्रुद्धो भैमसेनिं महामृधे ।
आजघ्ने निशितैर्बाणैस्तोत्त्रैरिव महाद्विपम् ॥ १५
तिलशस्तस्य तद्यानं सूतं सर्वायुधानि च ।
घटोत्कचः प्रचिच्छेद प्राणदच्चातिदारुणम् ॥ १६
ततः कर्णे शरव्रातैः कुरूनन्यान्सहस्रशः ।
अलंबलं चाभ्यवर्षन्मेघो मेरुमिवाचलम् ॥ १७
ततः संचुक्षुभे सैन्यं कुरूणां राक्षसार्दितम् ।
उपर्युपरि चान्योन्यं चतुरङ्गं ममर्द ह ॥ १८
जटासुरिर्महाराज विरथो हतसारथिः ।
घटोत्कचं रणे क्रुद्धो मुष्टिनाभ्यहनद्दृढम् ॥ १९
मुष्टिनाभिहतस्तेन प्रचचाल घटोत्कचः ।
क्षितिकम्पे यथा शैलः सवृक्षगणगुल्मवान् ॥ २०
ततः स परिघाभेन द्विट्संघघ्नेन बाहुना ।
जटासुरिं भैमसेनिरवधीन्मुष्टिना भृशम् ॥ २१
तं प्रमथ्य ततः क्रुद्धस्तूर्णं हैडिम्बिराक्षिपत् ।

---

विप्र॰) —[d]) D5 S (G5 missing) इव द्रुमा (for घना इव)

14 D8 om 14[ab] (cf v l 13) —[a]) Dn2 om from र्नुन्ना up to स्तोत्रै (in 15[d]) —[b]) K4 B2 5 D5-7 S (G5 missing) तव (for कुरु) — B1 om 14[c]–16[b] —[d]) D4 5 उत्सृ(D5 विसृ)ष्टोल्का, G1 M ॰ज्यास्त्र (for ॰ज्योल्का) D5 S (G5 missing) समतत (for सहस्रश॰)

15 B1 om 15, Dn2 om up to स्तोत्रै (cf v l 14) D1 4 om (hapl) 15[a]–17[b] —[a]) K4 B5 अल-म्बुषस्, Dn1 D5 8 ॰म्बुसस्, D2 ॰म्बुसिस्, D3 6 T G3 4 M1, 2 5 ॰बल —[b]) K3 D3, 6 (by corr) T G3 4 M1 2 5 भैमसेनिर् (K3 D6 ॰नि) D2 महाहवे (for ॰मृधे) —[c]) K3 निशिभिर् (sic), K4 B (B1 om.) Dc1 Dn1 D3 6 दशभिर्; D2 5 7 8 S (G5 missing) बहुभिर् (for निशितैर्)

16 B1 om. 16[ab] (cf v l 14) D1 4 om 16 (cf. v l 15) —[a]) D8 तिलसश् Dn2 D2 5 7 8 च (D5 तु) ततो (for तस्य तद्) B5 Dn1 सवाह (for तद्यान) —[d]) Ś1 K1 2 प्राणदश्, K4 प्रणदश्, B3 5 D8 प्रणदच्; B4 प्राणदश् (for प्राणदच्) Dn प्र(Dn2 प्रा)हसच्चातिभैरव, D2 5 7 8 प्रा(D5 प्र)हसच्चा(D8 ॰संश्चा)पि भैरवं, S (G5 missing) व्यनदच्चापि भैरव

17 D1 4 om 17[ab] (cf. v l 15) —[a]) D3 6 T G2-4 शरशतै॰ (for ॰व्रातै॰) —[b]) B1 om from न्यान्सह up to र्महारा (in 19[a]) Dn2 D2 5 7 8 S (G5 missing) चापि (for अन्यान्) —[c]) B5 Dn अलबुषं, D2 ॰बुसिं, D3 8 ॰बुसश्; D6 ॰बुसं, D7 ॰बलश् —[d]) Dn2 D2, 5 7 8 मेघो वृष्ट्ये(D5 ॰ष्ट्यै, D8 ॰ष्टे)व पर्वतं; D4 मेघोत्सृष्टैव पर्वत

18 B1 om 18 (cf v l 17) —[b]) Ś1 K1 D6 G1 M1 2 रक्षसार्दित —[d]) B5 ममर्दयत् (for ममर्द ह) D7 S (G5 missing) चतुरगममर्दत

19 B1 om up to र्महारा (cf v l 17) —[a]) Ś1 K2-4 B (B1 om) Dc1 Dn2 D1 7 8 T G1-4 M2 5 जाटासुरिर् —[b]) Ś1 K1 हताश्वो, K1 lacuna (for विरथो) —[c]) T G1 M रणे क्रुद्धं, G2 महाराज (for रणे क्रुद्धो) —[d]) M1, 2 मुष्टिभ्या (for ॰ना) D3 [अ]भ्यवधीद्, D5 [अ]भिहनच्, D6 न्यवधीद्; M1 2 न्यहनद् (for [अ]भ्य॰) Ś1 द्रुतं, Dn2 D2 4 5 7 8 स स॰, S (G5 missing) भृशं (for दृढम्)

20 [a]) D7 om (? hapl) मुष्टिनाभिहत B1 निहतस्; B5 Dn2 D3 G1 2 M1 2 [अ]भ्याहतस्, D2 8 [अ]भ्य॰, M3-5 [अ]भ्यर्दितस् (for [अ]भिहतस्) Dn2 D2 4 5 7 8 G1 M सोथ, T G2-4 सोपि (for तेन) —[d]) Ś1 damaged, K4 B1 5 Dc1 Dn D1 2 4 5 7 8 सवृक्षस्तृण, B1 2 G1 ॰घन, T G2-4 M ॰तृण (for ॰गण)

21 [a]) Ś1 K1 2 B5 D1 4 5 8 परिघातेन, Dc1 Dn1 ॰भेण (for ॰भेन) D3 परिघातेन द्विपता —[b]) Ś K1-3 द्विण्मेघ(K1 ॰ज)घ्नेन वाहुना, Dn1 वज्रप्रतिमबा॰; Dn2 D4 5 7 8 द्विपघ्नेन च बा॰, D2 खड्गेन न तु बाणय (sic), D3 द्विपद्विघ्नेन बाहुना, D6 द्विट्सजघ्नेन या॰, T G3 4 द्विपरसघे(G4 ॰रसव्ये)न बा॰, M1 द्विट्संघघ्नेन बा॰ —[c]) B Dc1 Dn D1, 7 T G3, 4 M5 जाटासुरिं D2 भैमसेनिं D1, 5 G1 M1, 2 ज(G1 M2 जा)टासुरिर्भैमसेनिं —[d]) G1 2 4 M1 2 दृढं (for भृशम्) Dn1 D2 4 5 7 8 व्य(D5 व्या)हनत्क्रोधमूर्छित

दोर्भ्यामिन्द्रध्वजाभाभ्यां निष्पिपेष महीतले ॥ २२
अलंबलोऽपि विक्षिप्य समुत्क्षिप्य च राक्षसम् ।
घटोत्कचं रणे रोषान्निष्पिपेष महीतले ॥ २३
तयोः समभवद्युद्धं गर्जतोरतिकाययोः ।
घटोत्कचालंबलयोस्तुमुलं लोमहर्षणम् ॥ २४
विशेषयन्तावन्योन्यं मायाभिरतिमायिनौ ।
युयुधाते महावीर्याविन्द्रवैरोचनाविव ॥ २५
पावकाम्बुनिधी भूत्वा पुनर्गरुडतक्षकौ ।
पुनर्मेघमहावातौ पुनर्वज्रमहाचलौ ।
पुनः कुञ्जरशार्दूलौ पुनः स्वर्भानुभास्करौ ॥ २६
एवं मायाशतसृजावन्योन्यवधकाङ्क्षिणौ ।
भृशं चित्रमयुध्येतामलंबलघटोत्कचौ ॥ २७
परिघैश्च गदाभिश्च प्रासमुद्गरपट्टिशैः ।
मुसलैः पर्वताग्रैश्च तावन्योन्यं निजघ्नतुः ॥ २८
हयाभ्यां च गजाभ्यां च पदातिरथिनौ पुनः ।
युयुधाते महामायौ राक्षसप्रवरौ युधि ॥ २९

C 7 7677
B 7 174 24
K 7 175 23

22 M₁ om. 22ᵃ — ᵃ) D₃ ₆ तूर्णं (for क्रुद्धस्) Dn D₂ ₄ ₅ ₇ ₈ तत प्रमथ्य त क्रुद्ध (Dn₁ क्रुद्धस्, D₂ क्रूर) — ᵇ) D₃ क्रुद्धो, D₇ क्रुद्धो, T G₂.₄ M₁ ₈ तूर्णं, G₃ ततो (for तूर्णं) Dc₁ Dn₁ D₂ ₄ ₅ ₇ ₈ हैडम्बिर् (for हैडिम्बिर्) Ś₁ K₃ आक्षिपन, D₃ ₆ ₇ अक्षिपत् (for आ) — K₂ om 22ᶜ–23ᵈ D₂ om 22ᶜᵈ — ᶜ) Ś K₁ ₃ D₁ इन्द्रध्वजाहाभ्या, B₁₋₃ Dc₁ जोधाभ्या, M₁ lacuna (for इन्द्रध्वजाभाभ्या) Dn₁ D₄.₅ ₇ ₈ द्वाभ्या भुजाभ्या प्रगृह्य — ᵈ) D₁ निक्षिपेप (for निष्पि॰) K₁ B (except B₁) Dc₁ D₂ ₆ S (G₅ missing) च भूतले (for महीतले) — Dn D₄ ₅ ₇ ₈ ins after 22 D₂ after 22ᵃᵇ

1213* जटासुरिर्मोक्षयित्वा आत्मानं च घटोत्कचात् ।
पुनरुत्थाय वेगेन घटोत्कचमुपाद्रवत् ।

[ D₂ om line 1 — (L 1) D₅ जाटासुरिर् ]

23 K₂ om 23 (cf v 1 22) Ś K₁.₃ ₄ B₁ D₁ G₂ ₄ om (hapl) 23 — ᵃ) B₃ अल्वुपो (for अलं वलो) B₁ निक्षिप्य, D₃ ₆ S (G₂ ₄ om, G₅ missing) [अ]वाक्षिप्य (M₂₋₅ ॰स) (for विक्षिप्य) — ᵇ) S (G₂ ₄ om, G₅ missing) समुत्पाट्य (T G₃ ॰द्य) (for ॰त्क्षिप्य) — ᶜ) B₁ Dc₁ वलो, B₅ छल, D₃.₆ बलाद् (for रणे) S (G₂ ₄ om., G₅ missing) घटोत्कच बलात्कोपात् — For 23ᵃᵇᶜ, Dn D₂ ₄ ₅ ₇ ₈ subst

1214* घटोत्कचस्त्ववष्टभ्य बाहुमुद्यम्य दक्षिणम् ।
आजघानोरसि तदा

[ — (L 2) D₂ ₅ क्रुद्धो (for तदा) ]

— ᵈ) B₂ ₅ Dn₁ D₂ ₄ ₅ ₇ ₈ G₁ M₁.₂ च भूतले (for मही॰)

24 Dn₁ D₄ ₅ ₇ ₈ transp 24ᵇ and 24ᵈ — ᵇ) D₂ ₅ तुमुल(D₅ ॰द्ध)म्, D₈ गर्जितोर् Dn₁ तुमल अतिका ययो — ᶜ) K₄ Dn D₂ ₄, ₅, ₈ घटोत्कचालंवुस(K₄ Dn₂ ॰प)योस् — ᵈ) Dn D₂ ₅ ₇ ₈ भीषण (for तुमुल) Ś₁ D₁ S (except G₁, G₅ missing) रोम (for लोम) D₂ भीरूणा भयवर्धन

25 ᵃ) S (G₅ missing) वि(M₃ ₆ व्य)शेषयेताम न्योन्य — ᵇ) D₂ ₄ ₅ ₇ ₈ इतरेतर, T G₂₋₄ M₃ ₄ ₅ (*sup lin* as in text) अतिमानिनौ (for ॰यिनौ) — ᵈ) Ś₂ शक्र (for इन्द्र)

26 ᵃ) D₂ ₄ ₅ ₇ ₈ धरौ (for -निधी) — ᵇ) S (G₅ missing) -पन्नगौ (for -तक्षकौ)

27 ᵇ) Ś₂ K₂ अन्योन्य — ᶜ) D₄ अवध्येताम् (for अयु॰) — ᵈ) K₃ ₄ Dn अलंवुप, D₂ ॰वुमि-, D₄ ₆ ₈ ॰वुस, D₇ ॰बस (for ॰वल)

28 G₂ lacuna from 28ᵃ up to 7 150 26ᵇ — ᵃ) Ś₁ K₃ प*भिश्च (for परिघैश्च) — ᵇ) D₄ ₅ ₇ ₈ पाश; D₅ प्राश (for प्रास) D₂ तोमर (for मुद्गर) Ś K (K₅ missing) प्रासपट्टिश(K₁₋₃ स)मुद्गरै (K₂ रौ), T G₁ ₃ ₄ M प्रासतोमरपट्टसैः — ᶜ) Ś K₂ D₁ मुसुलैः, K₁ Dn₂ D₆ मुशलैः, B₁ ₂ ₅ मुषलैः D₂ ₄ ₅ ₇ ₈ वृक्षैर् ग्रावाभिघातैश्च, T G₃ ₄ मुसलैः पर्वतैश्चैव — ᵈ) K₃ B Dn₂ D₁ निजघ्नतु, D₂ ₄ ₅ ₇ ₈ अव(D₂ ॰यु, D₅ ॰वि)ध्यता, M₃ अभिजघ्नतु (hypermetric) (for निजघ्नतु)

29 G₂ lacuna — ᵃ) M₈ हस्ताभ्या (for हयाभ्यां) B₄ M₁.₂ गदाभ्या; D₂ ₄ ₇ ₈ रथाभ्यां (for गजाभ्यां) — ᵇ) Ś₂ K₁.₂ B₅ D₁ पदाती, Dn₁ पादाति- (for पदाति) D₂ ₄ ₅ ₇ ₈ गदा(D₂ नागा, D₅ रथा)भ्या च पदातिभि, T G₁ ₃ ₄ M रथाभ्यां पत्तिभि सह — After 29ᵃᵇ, T G₃ ins

1215* भैमसेनिरथ क्रुद्ध उद्यम्यालवल बलात् ।

[ G₃ om the prior half. G₃ उद्यम्य चल बल बलात् (hypermetric) (for the post. half) ]

C 7 7876
B 7 174 34
K 7 175 34

ततो घटोत्कचो राजन्नलंबलवधेप्सया ।
उत्पपात भृशं क्रुद्धः श्येनवन्निपपात ह ॥ ३०
गृहीत्वा च महाकायं राक्षसेन्द्रमलंबलम् ।
उद्यम्य न्यवधीद्भूमौ मयं विष्णुरिवाहवे ॥ ३१
ततो घटोत्कचः खड्गमुद्गृह्याद्भुतदर्शनम् ।
चकर्त कायाद्धि शिरो भीमं विकृतदर्शनम् ॥ ३२

तच्छिरो रुधिराभ्यक्तं गृह्य केशेषु राक्षसः ।
घटोत्कचो ययावाशु दुर्योधनरथं प्रति ॥ ३३
अभ्येत्य च महाबाहुः स्मयमानः स राक्षसः ।
रथेऽस्य निक्षिप्य शिरो विकृताननमूर्धजम् ।
प्राणदद्भैरवं नादं प्रावृषीव बलाहकः ॥ ३४
अब्रवीच्च ततो राजन्दुर्योधनमिदं वचः ।

— T G3 om 29ᶜ–31ᵇ — ᶜ) Ś1 महावीर्यौ, K1 D2 7 8 M3–5 महाकायौ (for °मायौ) — ᵈ) B Do1 राक्षसा (for राक्षस) D2 4 5 7 8 मायाशतविशारदौ

30 G2 lacuna T G3 om 30 (cf v l 29) B4 D2 4 5 om (hapl) 30–31 — ᵇ) K3 4 Dn अलंबुष, D7 °बस, D8 °बुस (for °बल) — ᵈ) Ś1 B5 Dn2 D1 च (for ह)

31 G2 lacuna B1 D2 4 5 om 31 (cf v l 30) T G3 om 31ᵃᵇ (cf v l 29) — ᵇ) B3 अलयल°, Dn °बुष, D7 8 महाबलं (for अल°) — ᶜ) K2 तदस्य, B1 Do1 Dn1 उद्यत, B3 5 Dn2 उद्यतं, T G3 भुजाभ्या (for उद्यम्य) D7 8 [अ]भ्यनयद्, T G1 3 4 M न्यहनद् (for न्यवधीद्)

32 G2 lacuna — ᵃ) D2 7 8 क्रुद्धो (for खड्गम्) — After 32ᵃ, D2 4 5 7 8 ins

1216* मण्डलाग्रं प्रगृह्य तु ।
पातित भूतले त्रस्त नाद मुक्त्वा मुहुर्मुहु ।
केशेषु स निजग्राह

[ (L 1) D5 मडलाग्रे (for °ग्र) D2 5 त (for तु) —(L 2) D2 पतित भूतलाध (for the prior half) ]

— ᵇ) Ś1 K (K5 missing) D1 G3 4 उद्धृत्य, B1 उद्यम्य; D6 सं गृह्य (for उद्गृह्य) T G3 दर्शन D2 4 5 7 8 विकृत घोरदर्शन (D5 °रूपिण) — D1 om (hapl) 32ᶜᵈ — ᶜ) Ś K (K5 missing) Do1 Dn D1 3 6 रौद्रस्य (for चकर्त) D2 चिच्छेद ताच्छिरो आजंश; D5 7 8 चिच्छेद तच्छि(D8 °दत शि)रो राजन्, T G3 4 विचकर्त शिर कायाद् — ᵈ) D2 5 7 8 शत्रोर् (for भीम) — Ś K (K5 missing) B Do1 Dn D1 3 5 6 ins after 32 D2 7 8 after 32ᵇ

1217* स्फुरतस्तस्य समरे नदतश्चापि भैरवम् ।
निचकर्त महाराज शत्रोरमितविक्रम ।

[ (L 1) D5 स्फुरंत D7 om (? hapl) from स्तस्य up to नदत in line 1 B4 चास्य, D3 5 8 चैव (for तस्य) D2 निदत (for नदतश्) K4 B1 5 Do1 Dn2 D1 3 6 चाति-, D2 7 8 नैव (for चापि) D5 नदन भैरव रव (for the post half) — D2 5 7 8 om line 2 — (L 2) Ś2 विचकर्त (for नि°) Ś1 K3 महातेजा (for °राज) Ś K (K5 missing) D1 जेना चामितविक्रम (for the post half) ]

On the other hand D2 7 8 ins after 32 D5 after 32ᵇ D5 cont after line 1 of 1217*

1218* पिङ्गाक्षं विकृतैर्दन्तैर्दीप्तया जिह्वया शुभम् ।

[ D2 पिंगाक्षैर् D5 दीप्तैर् (for दन्तैर्) D2 युत, D5 भृश (for शुभम्) D8 या जिह्वया शुभाशुभ (sic) (for the post half) ]

33 G2 lacuna — ᶜ) M3–5 चाशु (for आशु) — For 33ᵃᵇᶜ, N (K5 missing) subst

1219* शिरस्तच्चापि संगृह्य केशेषु रुधिरोक्षितम् ।
ययौ घटोत्कचस्तूर्णं

[ (L 1) Ś1 तचास्य, B4 ततोपि; D1 7 8 तथापि (for तच्चापि) D3 6 केशैश्च (for केशेषु) ]

— ᵈ) Ś K1 2 (marg as in text) 3 दुःशासन (for दुर्योधन) D2 4 5 7 8 यत्र राजा सुयोधन — After 33, D2 4 5 7 8 ins

1220* द्रोणकर्णकृपान्योधानतीत्य सुमहाबल ।

34 G2 lacuna — ᵇ) T G1 3 4 M घटोत्कच (for स राक्षस) — For 34ᵃᵇ, D2 4 5 7 8 subst

1221* कुरुयोधं समासाद्य सुयोधनमरिंदमम् ।

[ D7 8 कुरुनाथ (for °योध) ]

— ᶜ) D5 वक्षे (for रथे) D2 वि (for ऽस्य) K1 निष्पिप्य (for निक्षिप्य) D1 शारो (sic), T पुरो (sic) (for शिरो) B4 Dn2 शिरो रथेस्य निक्षिप्य — ᵈ) D2 4 5 7 8 विकृत पिंगमूर्धज — ᵉ) Ś K1 2 D1 व्यनदद्, B1 2 प्राणदन्; Dn D5 8 T G1 3 4 M3 4 प्रण (Dn1 °णु)दन् (for प्राणदद्) — ᶠ) G1 M वलाहक,

एष ते निहतो बन्धुस्त्वया दृष्टोऽस्य विक्रमः ।
पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथात्मनः ॥ ३५
एवमुक्त्वा ततः प्रायात्कर्णं प्रति जनेश्वर ।
किरञ्शरशतांस्तीक्ष्णान्विमुञ्चन्कर्णमूर्धनि ॥ ३६
ततः समभवद्युद्धं घोररूपं भयानकम् ।
विस्मापनं महाराज नरराक्षसयोर्मृधे ॥ ३७

इति श्रीमहाभारते द्रोणपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

# १५०

धृतराष्ट्र उवाच ।
यत्र वैकर्तनः कर्णो राक्षसश्च घटोत्कचः ।
निशीथे समसज्जेतां तद्युद्धमभवत्कथम् ॥ १
कीदृशं चाभवद्युद्धं तस्य घोरस्य रक्षसः ।

C 7 7291
B 7 175 2
K 7 176 2

---

35 G2 lacuna —a) D2 4 5 7 8 G1 M1. 2 तदा (for ततो) —b) K4 D1 सुयोधनम् (for दुर्यो°) —c) T G3 4 एव (for एष) Dc1 Dn1 रक्षस् (for बन्धुस्) —d) D2 त्वया दृष्टपराक्रम —e) D5 6 T G3. 4 द्रक्ष्यसि (for द्रष्टासि) Ś2 कर्कदे (for कर्णस्य) —f) G1 M एना (for एता) Ś1 K1 2 4 दुरात्मन, D6 सुयोधन, G3 तदात्मन (for तथात्मन) Ś2 शैनेय ता दुरात्मन — For 35ef, D2 4. 5 7 8 subst

1222* कर्णस्य तु शिरो गृह्य पुनर्द्रष्टा सुयोधन ।

[ D5 छित्त्व, D7 8 त्वेव (for गृह्य) D4 7 8 द्रष्टा (for द्रष्टा) ]

— After 35, Dn2 D2 4. 5 7 8 M2 ins

1223* स्वधर्ममर्थं कामं च त्रितयं योऽभिवाञ्छति ।
रिक्तपाणिर्न पश्येत राजानं ब्राह्मणं स्त्रियम् ।
सुप्रीतस्तावत्तिष्ठस्व यावत्कर्णं वधाम्यहम् ।

[ (L 1) D2 4 अर्थं- (for अर्थं) — M2 om lines 2–3 — (L 2) D5 राजानं देवतां गुरुं (for the post half) — (L 3) D7 8 त्वं हि (for तावत्) Dn2 प्रतीक्ष्यमाणस्तिष्ठस्व, Bom. ed तिष्ठस्व तावत्सुप्रीतो (for the prior half) ]

36 G2 lacuna D4 om 36a–37b —a) D2 5 7 8 कर्णं (for प्रायात्) —b) K4 B2 4 Dn2 D1 6 नरेश्वर, B1. 3 5 Dc1 Dn1 नराशन, T G1 3 4 M स (G1 om. स) राक्षस· (for जनेश्वर) D2 5 7 8 जगाम स रणोत्कटः — Before 36cd, T G3. 4 ins सजय —c) K1 B3. 4 शतशरास्, K4 B5 शरगणास्, D2 6 °वरास् (for °शतास्) —d) Ś2 partly damaged B5 D2 5 7 8 रुधिरं (for विमुञ्चन्) B5 Dc1 D5 रणे (for कर्णं)

37 G2 lacuna D4 om. 37ab (cf v 1 36) —b) Ś2 B4 D2 5 7 8 T G3 4 भयावह (for °नकम्) —c) T G1. 3 4 M अत्यद्भुत (for विस्मापन) Ś1 K1–3 B1 3 Dc1 Dn1 D2 6 भृशं राजन् (for महाराज) D2. 4 5 7 8 विस्मा(D5 °श्मा)पनीयं राजेंद्र —d) Ś K1–3 G1 M1 2 कर्ण (for नर) K2 युधि (for मृधे)

Colophon K5 G5 missing, Ś2 damaged — *Subparvan* Ś1 K3 B4 5 D1 घटोत्कचवध — *Adhy name* K4 रात्रियुद्धं, Dc1 T G1 3. 4 M1 2 अलंबलवध, Dn अलंबुषवध, D3 रात्रियुद्धे अलंबलवध, D4 7 8 जा(D4 ज)टासुरि(D8 री)वध, D6 जटासुरवध, Bom. ed. रात्रियुद्धे अलंबुषवध — *Adhy no* (figures, words or both) Dn1 175, D2 176, D3 69, T G3 4 169, G1 M1 2 166, M3–5 167 — *Śloka no* Dc1 40, Dn1 44

## 150

☞ This adhy is missing in K5 G5 (cf. v 1. 7 125. 14, 137 9)

1 G2 lacuna for 1a–26b (cf. v 1. 7 149 28) Ś2 partly damaged —a) Ś2 तत्र, K4 B Dc1 Dn D1 T G1. 3 4 M यत्तद्, D2 4 7 8 ततो, D6 यच्च (for यत्र) —c) G3. 4 M4 समसज्येतां —d) K1 दृष्टम्, K2. 3 D1 द्वंद्वम् (for युद्धम्)

2 G2 lacuna Ś2 partly damaged —a) B2 4 Dn2 D2 4–6 8 वा (for च) Ś2 B (except B1) Dc1 Dn T G1. 3 4 M रूपं (for युद्धं) —b) D2 4 5 7 8 कर्णराक्षसयोर्मृधे (D7 °धि) — After 2ab, T G1 3 4 M ins

C 7 7691
B 7 175 2
K 7 176 3

रथश्च कीदृशस्तस्य मायाः सर्वायुधानि च ॥ २
किंप्रमाणा हयास्तस्य रथकेतुर्धनुस्तथा ।
कीदृशं वर्म चैवास्य कण्ठत्राणं च कीदृशम् ।
पृष्टस्त्वमेतदाचक्ष्व कुशलो ह्यसि संजय ॥ ३
संजय उवाच ।
लोहिताक्षो महाकायस्ताम्रास्यो निम्नितोदरः ।
ऊर्ध्वरोमा हरिश्मश्रुः शङ्कुकर्णो महाहनुः ॥ ४
आकर्णाद्दारितास्यश्च तीक्ष्णदंष्ट्रः करालवान् ।
सुदीर्घताम्रजिह्वोष्ठो लम्बभ्रूः स्थूलनासिकः ॥ ५
नीलाङ्गो लोहितग्रीवो गिरिवर्ष्मा भयंकरः ।
महाकायो महाबाहुर्महाशीर्षो महाबलः ॥ ६
विकचः परुषस्पर्शो विकटोद्बद्धपिण्डिकः ।
स्थूलस्फिग्गूढनाभिश्च शिथिलोपचयो महान् ॥ ७
तथैव हस्ताभरणी महामायोऽङ्गदी तथा ।

---

1224* येन वैकर्तनः कर्णः संग्रामे तेन निर्जितः ।

[ G1 M युधि ( for तेन ) ]

— d ) K4 B Dc1 Dn T G1 M1 2 4 5 ( *sup lin* ) हया , M8 माया ( for माया ) Ś1 K8 मायाश्च विविधास्तथा, K1 2 D1 मायाश्चै( D1 ॰या चै )वायुधानि च, D2 4 5 7 8 प्रमाण चैव ( D8 च* ) कीदृश

3 G2 lacuna The portion of the text from 3a up to 84b is lost in Ś2 on missing folios K4 D1 om 3abcd — a ) D2 4 5 7 8 आयुधानि ( for किंप्रमाणा ) Ś1 K1 8 चास्य, D2 चैव ( for तस्य ) — b ) Ś1 K1–8 G1 8 4 M रथ , D2 4 5 7 8 शरा , D6 रथे ( for रथ ) M4 5 ( before corr ) ध्वजस् ( for धनुस् ) G1 M1 2 तदा ( for तथा ) — G1 M1 2 4 om 3cd — c ) D5 7 8 चर्म ( for वर्म ) — d ) B Dc1 Dn शिरस्त्राणं, D2 कचत्राण, T G2 4 M8 5 कर्ण॰ ( for कण्ठ॰ ) — M8 om 3ef — e ) D2 4 5 7 8 पृच्छ( D7 ॰ष्ट )तो मे स्वमाचक्ष्व, T G1 8 4 M1 2 4 5 पृष्टस्तन्मे समा॰ — f ) T G1, 8 4 M1 2 4 5 सर्वमेतद्यथातथं

4 Ś2 missing ( cf. v 1 3 ) G2 lacuna — a ) D7 8 T G1 8, 4 M महाबाहुस् ( for ॰कायस् ) — b ) D1 8 ताम्राक्षो ( for ॰स्यो ) K1 निह्नतोदर॰, K2 4 D1 8 4 निम्नतो॰, B1 8 4 G1 निर्णतो॰, B2 विस्तृतो॰; Dn1 D6–8 T G3 निर्नतो॰, G1 M निर्णितो॰ ( for निम्नितो॰ ) — c ) Ś1 K ( K5 missing ) D1 ऊर्ध्वकेशो, B1 ॰लोमा ( for ॰रोमा ) B1 D2 हरित्, M8 महा ( for हरि ) — d ) K1 शस्त्र , Dn1 शभु , M1 2 कुंभ ( for शङ्कु ) K1 B2 D1 8 7 M8 महाघ( D7 ॰द )नु. ( for ॰हनु )

5 Ś2 missing ( cf v 1 3 ) G2 lacuna — a ) K1, 2 4 D1 4–7 आकर्णदा( D1 ॰र्णयद्दा )रितास्यश्च — b ) K1 2 दीप्तदंष्ट्र ( K2 ॰ष्ट्रा ), Dn1 D1 5 तीक्ष्णदष्ट्रा ( for ॰ष्ट्र ) Ś1 K4 D1 करालवाक्, T G1 M कराळवान् — c ) K4 स ( for सु ) K2 Dc1 Dn ॰जिह्वौष्ठो; D5 जिह्वास्यश्, D7 8 जिह्वश्च ( for जिह्वोष्ठो ) K1 सुदीर्घा ताम्रजिह्वोष्ठ, D2 ॰र्घजिह्वस्ताम्रास्यो, D4 ॰र्घजिह्वाताम्राक्षो — d ) D2 वक्रभ्रू, D4 5 चलभ्रूश् ( for लम्बभ्रू ) D4 5 चल , D7 8 लघ ( for स्थूल ) Ś1 K1, 8 D1 ॰पिंडक , K2 पिंडिक , D2, 6 गडक ( for ॰नासिक )

6 Ś2 missing ( cf v 1 3 ) G2 lacuna — b ) B1 गिरिवर्मा, Dn1 ॰चर्मा, D2 4 5 7 8 गिरि( D2 4 महा )कायो, M1 2 गिरिवर्षा ( for ॰वर्ष्मा ) — d ) D2 4, 5 महोदर॰, D7 महाभय ( for ॰बल॰ )

7 Ś2 missing ( cf. v 1 3 ) G2 lacuna D3 transp 7 and 8 — a ) K4 B Dc1 Dn D2 विकृत॰ ( for विकच ) K2 Dn2 पुरुप ( for प॰ ) Ś1 स्पर्शौ D2 विरूपाक्ष खरस्पर्शो, D4 5 विरूपतरसस्पर्शो, T G3 4 विकटो विषमो भीमो, G1 M विकट. प( M1 पु )रुपश्चंडो — b ) Dc1 D6 विकटो बद्ध ( for ॰टोद्बद्ध ) K1, 2 D5 ॰पिंडक ( for पिण्डिक ) K4 B3 5 विकचोद्बद्धपिंड( B3 ॰डि )क , B1 विकटो मूर्द्धपिंडक , B2 4 Dn2 ॰टोद्ध( B2 ॰टोब )द्धपिंडिक , Dn1 विकृतो बद्धपिंडक , D2 विकटोद्धतपिंगल , D4 विराटोद्बद्धपिंडक , D5 विकट. पिंगलोज्वल , D7 8 ॰टो यद्धपिंगल॰, T G1, 8 4 M विनतोद्( M8–5 ॰तो य )द्धपिंडक — c ) D4 5 7 8 स्थूलास्यो ( for स्थूलस्फिग् ) Dn2 गाढनाभिश्, D4 गूढवाशश्, T G1 4 M गढनास( M8–5 ॰भ )श्, G8 दंडनामश् ( for गूढनाभिश् ) D6 तु ( for च ) — d ) D6 शिथिलोपचलो K2 शिथिलोपचयोपमान्, D2 4 5 7 8 दीर्घमेंद्रो महामुख

8 Ś2 missing ( cf. v 1 3 ) G2 lacuna D3 transp 7 and 8 — ab ) M8–5 महाकायो ( for ॰मायो ) Dn1 D2, 4 5 7 8 तथैवाभरणोपेत केयूरागदभू( D8 ॰दवि भू )षित — c ) K1 तरसा ( for ऽङ्ग॰ ) — d ) Ś1 K8 Dc1 अग्निमाली, K1 2 D1 ॰मालो, D8 6 ॰ज्वाल, D4 ॰माला, G1 M3–5 ॰ज्वालां ( for ॰मालां ) D2 यथा चल

उरसा धारयन्निष्कमग्निमालां यथाचलः ॥ ८
तस्य हेममयं चित्रं बहुरूपाङ्गशोभितम् ।
तोरणप्रतिमं शुभ्रं किरीटं मूर्ध्न्यशोभत ॥ ९
कुण्डले बालसूर्याभे माला हेममयीं शुभाम् ।
धारयन्विपुलं कांस्यं कवचं च महाप्रभम् ॥ १०
किङ्किणीशतनिर्घोषं रक्तध्वजपताकिनम् ।
ऋक्षचर्मावनद्धाङ्गं नल्वमात्रं महारथम् ॥ ११
सर्वायुधवरोपेतमास्थितो ध्वजमालिनम् ।
अष्टचक्रसमायुक्तं मेघगम्भीरनिस्वनम् ॥ १२
तत्र मातङ्गसंकाशा लोहिताक्षा विभीषणाः ।
कामवर्णजवा युक्ता बलवन्तोऽवहन्हयाः ॥ १३
राक्षसोऽस्य विरूपाक्षः सूतो दीप्तास्यकुण्डलः ।
रश्मिभिः सूर्यरश्म्याभैः संजग्राह हयात्रणे ।
स तेन सहितस्तस्थावरुणेन यथा रविः ॥ १४

C 7 7906
B 7 175 16
K 7 176 19

9 Ś2 missing (cf v l. 3) G2 lacuna — [a]) T छन्नं (for चित्र) — [b]) B1 T G3.4 रूपाक-, Dn2 D2 4 5 7 8 -रूपक- (for रूपाङ्ग) — [d]) Dn1 D4 5 M4 शोभितं, D3 शोभत, T G3 4 शोभते (for [ऽश] शोभत)

10 Ś2 missing (cf v l. 3) G2 lacuna — [a]) K2 पांडु-, Dn2 lacuna (for बाल-) — [b]) K1.2 4 D1 तया (for शुभाम्) D2 माला हेममया शुभा — [c]) D4 T विपुला (for °ल) K8 काम्य, D2 वास्यं, D4 कार्मां (for कांस्यं) — After 10, T G1 3 4 M ins

1225* ताराजालनिभं राजन्पूर्णचन्द्रसमप्रभम् ।
कण्ठसूत्रं महच्चापि तपनीयमधारयत् ।
स तेन विभ्राजत वै सविद्युदिव तोयदः ।

[(L 2) G3 4 कर्ण- (for कण्ठ-) T G1 3 4 तापनीयम् ]

11 Ś2 missing (cf. v l. 3) G2 lacuna — [a]) Dn2 किंकणी- (for किङ्किणी) — [b]) Dc1 Dn1 बहु-, D3 रथं (for रक्त-) Ś1 K (K5 missing) D1 -विभूषित (for पताकिनम्) — D4 om. (hapl) 11[c]–12[b] — [c]) B1 ऋक्षचर्मापिनद्धांगं, D2 रूप्यवर्मानव° — [d]) K2 D1.6 (m sec m) तालमात्र (for नल्व) Ś1 (before corr) समतत, Ś1 (by corr) K (K5 missing) D1.6 (m. sec. m) प्रमाणत°, Dn1 महाधन (for °रथम्)

12 Ś2 missing (cf. v l. 3) G2 lacuna — [a]) Ś1 K1 2 4 D1 रक्तायुध (for सर्वायुध) — [b]) Ś1 K1.3 4 B3 D1 2 मास्थित (B3 °त), K2 मासित; Dn2 lacuna, D5 उच्छ्रित (for मास्थितो) K4 मालज्वालिन (sic), Dn2 lacuna (for ध्वजमालिनम्) — [d]) Some MSS -निःस्वन

13 Ś2 missing (cf. v l 3) G2 lacuna — [a]) K3 B2 3 5 G1 मत्त-, Dn2 D2 4 5 7 8 तस्य, D3 6 तुंग (for तत्र) Dc1 Dn1 -सकाशो — [b]) D4 5 7 विभूषणा Dc1 Dn1 लोहिताक्षो विभीषण, D3 °क्षवि भूषणा — [c]) G3 lacuna T G1 M3.5 काळ (for काम) T G1 4 M समा (for जवा) Dn2 काम वर्णजवोपेता, D2 4–8 रूक्षरूपा (D6 कामवर्णा) वायुजवा — [d]) Ś1 वेगवतो (for बलवन्तो) K4 B Dc1 Dn1 T G1 3 4 M शत, Dn2 D2 3.5 6 च ते (for ऽवहन्) K1 हय D4 7 8 बलवतश्च हेळया — After 13, Dn2 D2 4 5 7 8 ins

1226* वहन्तो राक्षस रौद्रं बलवन्तो जितश्रमा ।
विपुलाभि सटाभिस्ते हेषमाणा मुहुर्मुहु ।

[(L 1) D7 8 वहति Dn2 D2 घोर (for रौद्र) D2 वालवतो (for बल°) — (L 2) D4 जटाभिस् (for स°) D4 हेषमाणा (for हे°) ]

On the other hand, T G1 3 4 M ins after 13

1227* मुखैर्नानाविधाकारैर्वेगवन्तो हयोत्तमा ।
रथेऽस्य युक्ता गर्जन्तोऽवहस्ते राक्षसाधिपम् ।

[L 2) G3 गच्छंतो (for गर्जन्तो) M3–5 वहतो (for ऽवहस्ते) ]

14 Ś2 missing (cf. v l. 3) G2 lacuna — [a]) D4 च (for ऽस्य) — [b]) D2 5 T G1 3 4 M सखा, D4 शिखा (for सूतो) Ś1 K3 D1 दीप्ताक्ष, D6 दीर्घास्य (for दीप्तास्य-) — After 14[ab], T G1 3 4 M ins

1228* घोररूपो महाकायः करालो विकृताननः ।

[ G1 M नादः (for -काय) ]

— [c]) Ś1 K1–3 D1 सकाशैः, K4 Dn2 D2–8 -संकाशैः (for रश्म्याभैः) — [d]) B5 D2–5 T G1 M1.3–5 स जग्राह (for संज°) D3.6 हयाग्रये, D7 8 हयोत्तमान् (for हयात्रणे) — [f]) K1.2 D5 G4 वरुणेन (for अरु°)

15 Ś2 missing (cf. v l 3) G2 lacuna D3 om. 15[abcd] — [a]) B1 संयुक्त; D2 5 7 संरक्त (for संसक्त).

C 7 7906
B 7 175 17
K 7 176 19

संसक्त इव चाभ्रेण यथाद्रिर्महता महान् ।
दिवस्पृक्सुमहान्केतुः स्यन्दनेऽस्य समुच्छ्रितः ।
रक्तोत्तमाङ्गः क्रव्यादो गृध्रः परमभीषणः ॥ १५
वासवाशनिनिर्घोषं दृढज्यमभिविक्षिपन् ।
व्यक्तं किष्कुपरीणाहं द्वादशारत्नि कार्मुकम् ॥ १६
रथाक्षमात्रैरिषुभिः सर्वाः प्रच्छादयन्दिशः ।
तस्यां वीरापहारिण्यां निशायां कर्णमभ्ययात् ॥ १७
तस्य विक्षिपतश्चापं रथे विष्टभ्य तिष्ठतः ।
अश्रूयत धनुर्घोषो विस्फूर्जितमिवाशनेः ॥ १८
तेन वित्रास्यमानानि तव सैन्यानि भारत ।
समकम्पन्त सर्वाणि सिन्धोरिव महोर्मयः ॥ १९
तमापतन्तं संप्रेक्ष्य विरूपाक्षं विभीषणम् ।
उत्स्मयन्निव राधेयस्त्वरमाणोऽभ्यवारयत् ॥ २०
ततः कर्णोऽभ्ययादेनमस्यन्नस्यन्तमन्तिकात् ।
मातङ्ग इव मातङ्गं यूथर्षभ इवर्षभम् ॥ २१
स संनिपातस्तुमुलस्तयोरासीद्विशां पते ।
कर्णराक्षसयो राजन्निन्द्रशम्बरयोरिव ॥ २२
तौ प्रगृह्य महावेगे धनुषी भीमनिस्वने ।
प्राच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः ॥ २३
ततः पूर्णायतोत्सृष्टैः शरैः संनतपर्वभिः ।

B8 (marg) चाभ्रेण (for चाभ्रेण) B2 D6 स सशक्त इवाभ्रेण, D8 रक्त इव च चाभ्रेण — $^{b}$) K1 यथा दृढ्, D2 4–6 यथाग्निर् (for °द्रिर्) D2 7 8 महतो (for °ता) — $^{c}$) G3 4 M3–5 दिविस्पृक् (for दिव°) B1 3 Dn2 D2 7 8 G1 M1–3 5 सुमहा — $^{d}$) B5 D2 T G3 4 स्यदनस्य (for नेऽस्य) B5 D6 7 समुस्थित (for °च्छ्रित) — $^{f}$) Ś1 K1–3 D3 6 दारुण, D2 कोपन (for भीषण)

16 Ś2 missing (cf v l 3) G2 lacuna. — $^{b}$) D4 दृढस्ते (sic), D5 दृढाखम् (for दृढज्यम्) B1–3 Dc1 T G3 4 M3–5 अपि, B4 Dn2 D2 4 5 7 8 अति, Dn1 corrupt, G1 M1 2 अधि (for अभि) D6 सक्षिपन् (for वि°) K2 दृढज्य सन्विनिक्षिपन् — $^{c}$) D7 8 दृढं, T G3 4 व्यक्त (for व्यक्त) B4 निष्कु, M3 निष्क, M4 किष्क (for किष्कु-) Dn1 D4 5 परीमाण (for °णाहं) — $^{d}$) D2 भारसाहं हि कार्मुक

17 Ś2 missing (cf v l 3) G2 lacuna — $^{a}$) K2 D2 4 5 तथाक्ष (for रथाक्ष) — D3 6 om 17$^{b}$–18$^{c}$ — $^{b}$) M4 प्रच्छादयद् — $^{c}$) D2 4 5 7 8 तस्या वीरप्रहारिण्या

18 Ś2 missing (cf v l 3) G2 lacuna. D3 6 om 18$^{abc}$ (cf. v l. 17) — $^{a}$) D4 5 7 8 तस्य विक्षिसचापस्य — $^{b}$) Dn1 D2 M3–5 रणे, D5 T G3 4 रथं (for रथे) Dn1 D2 4 5 वाजिन (for तिष्ठत) — $^{d}$) G1 M विस्फूर्जितम्

19 Ś2 missing (cf v l 3) G2 lacuna — $^{a}$) K1 2 D4 5 तेन विभ्राम्यमाणानि (K2 °णेन), B3 °द्रा-व्यमानानि — $^{b}$) M1 2 transp तव and सैन्यानि D2 4 5 7 सर्व (for तव) T G3 4 सैन्यानि भरतर्षभ — Ś1 K (K5 missing) D1 om 19$^{c}$–20$^{b}$ — $^{c}$) D5 सैन्यानि (for सर्वाणि)

20 Ś2 missing (cf v l 3) G2 lacuna. Ś1 K (K5 missing) D1 om 20$^{ab}$ (cf. v l 19) — $^{c}$) K3 तत्स्मयन् (for उत्स्म°) — $^{d}$) Dn2 D3 6 न्यवारयत्, D2 [ऽ]भ्यधारयत् (for °वारयत्)

21 Ś2 missing (cf. v l 3) G2 lacuna. — $^{b}$) K1 2 D1 6 इषून् (for अस्यन्) D2 अस्यत शरमतिकात् — $^{c}$) Dn2 D4 7 8 T G1 3 4 M transp मातङ्ग and मातङ्गं D2 3 मातगम् (for °तङ्ग) D5 मातगो (for °तङ्गं) — Dn2 om 21$^{d}$ — $^{d}$) K3 यूयर्षभम् B Dc1 Dn1 D2 3 6 G1 M1 2 यूथर्षभमि(D2 °भ इ)-वर्षभ

22 Ś2 missing (cf v l 3) G2 lacuna. — $^{a}$) Dc1 Dn1 D5 7 8 तुमलस् (for तुमु°) M3 4 5 (m sec m as in text) सनिपातस्तु तुमुलस् — $^{c}$) D2 4 5 7 8 युद्ध, T G1 2, 4 M नक्त (for राजन्) — $^{d}$) B1 2 सवरयोर् (for -शम्ब°)

23 Ś2 missing (cf v l 3) G2 lacuna — $^{a}$) Dn2 D2 4 5 7 8 महाभीमे (for °वेगे) — $^{b}$) Some MSS निस्वने — $^{c}$) K2 Dc1 D2 4–8 G3 4 M1 2 प्रच्छादयेताम् — D5 om. (hapl) 23$^{d}$–24$^{c}$ — $^{d}$) G1 M1 2 वीक्षमाणौ (for तक्ष°) G3 4 रथेषुभि (for महे°) M3–5 समरे संवतक्षतु

24 Ś2 missing (cf v l 3) G2 lacuna D5 om 24$^{abc}$ (cf v l 23) D4 om (hapl) 24$^{ab}$ — $^{b}$)

न्यवारयेतामन्योन्यं कांस्ये निर्भिद्य वर्मणी ॥ २४
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ ।
रथशक्तिभिरन्योन्यं विशिखैश्च ततक्षतुः ॥ २५
संछिन्दन्तौ हि गात्राणि संदधानौ च सायकान् ।
धक्ष्यमाणौ शरव्रातैर्नोदीक्षितुमशक्नुताम् ॥ २६
तौ तु विक्षतसर्वाङ्गौ रुधिरौघपरिप्लुतौ ।
व्यभ्राजेतां यथा वारिप्रस्रुतौ गैरिकाचलौ ॥ २७
तौ शराग्रविभिन्नाङ्गौ निर्भिन्दन्तौ परस्परम् ।
नाकम्पयेतामन्योन्यं यतमानौ महाद्युती ॥ २८
तत्प्रवृत्तं निशायुद्धं चिरं सममिवाभवत् ।
प्राणयोर्दीव्यतो राजन्कर्णराक्षसयोर्मृधे ॥ २९
तस्य संदधतस्तीक्ष्णाञ्शरांश्चासक्तमस्यतः ।
धनुर्घोषेण वित्रस्ताः स्वे परे च तदाभवन् ।
घटोत्कचं यदा कर्णो विशेषयति नो नृप ॥ ३०
ततः प्रादुष्करोद्दिव्यमस्त्रमस्त्रविदां वरः ।
कर्णेन विहितं दृष्ट्वा दिव्यमस्त्रं घटोत्कचः ।

C 7 7924
B 7 175 34
K 7 176 37

---

K4 B4 5 इषुभिर् (for शरैः स) —$^{c}$) K1 निवारयेताम्, B Dc1 Dn D2 T G1 3 4 M न्यदा°, D4 7 8 विदा° (for न्यवा°) —K4 om. $24^{d}$–$25^{b}$ —$^{d}$) D2 4 5 वर्मणि D8 तक्षमाणौ महेषुभि (= $23^{d}$), M3 कास्ये***मर्मणी

25 Ś1 missing (cf. v l. 3) G2 lacuna K4 om $25^{ab}$ (cf. v l 24) —$^{c}$) D2 4 5 7 8 शरवृष्टिभिरन्योन्यं —$^{d}$) D2 4. 5 7 8 निशितैस्तु, T G1. 3 4 M समरे सं (for विशिखैश्च). Dn2 तौ (for च) Ś1 K1–3 D1 ततस्तत (for °क्षतु)

26 Ś1 missing (cf v l. 3) G2 lacuna for $26^{ab}$ —$^{a}$) B Dc1 Dn1 संभिंदंतौ, D5 सछादितौ, D8 सछदंतौ (for संछिन्दन्तौ) K4 B Dc1 Dn D1 2 4 7 8 T G1 3 4 M1 2 च, D6 तु (for हि) —Dn2 om $26^{c}$–$27^{d}$ —$^{c}$) K4 धक्षमाना, B3 D2 3 6 T G3. 4 तक्षमाणौ, D1 धक्ष्यमानौ, D4 8 G1 धक्षमाणौ, G2 कीर्यमाणौ (for धक्ष्य°) —$^{d}$) D7 8 नोदीक्षतुम् (sic), M3–5 नो वीक्षि° (for नोदीक्षि°) K4 S (G5 missing) अशक्नुवन् (for °ताम्) D3 6 न द्रष्टुमपि शेकतु, D4 अनादाक्षतु न शक्नुतां (sic), D5 नदंतौ भैरवान्रवान् —For $26^{cd}$, B1 3–5 Dc1 Dn1 subst.

1229* दहन्तौ च शरोल्काभिर्दुष्प्रेक्ष्यौ च बभूवतु ।

27 Ś1 missing (cf v l 3) Dn2 om. 27 (cf v l. 26) —$^{a}$) D2 शराचित, D4 शरक्षत ; D5 सुरक्षित, S (G5 missing) हि विक्षत (for तु वि°) —$^{b}$) D2 4 5 7 S (G5 missing) शोणितौघ (for रुधिरौघ) —Dc1 Dn1 om $27^{cd}$ D8 om. $27^{c}$–$28^{d}$ —$^{c}$) K3 D1 4. 5 विभ्राजेता, B1 3 D2 व्यरा (for व्यभ्रा) D5 यथाकाले (for यथा वारि-) —$^{d}$) K1 प्रसूतौ, B D1 स्रवतौ, D2 प्रस्रवौ, D4 7 प्रश्रुतौ, D6 T G1–4 M1 2 -प्रसृतौ, M3–5 -प्रसृजौ (sic) (for -प्रस्रुतौ) D6 पुष्पिताविव किंशुकौ

28 Ś1 missing (cf. v l 3) D8 om 28 (cf. v l 27) —$^{a}$) D2 4 5 शराग्र्य, D3. 6 शरौघ (for शराग्र) Ś1 K3 विभिन्नाग्रौ, K4 B3 Dc1 Dn1 D1 3 G2 विनुन्नांगौ, B1 2 4 5 S (except G2, G5 missing) वितुन्नागौ (for विभिन्नाङ्गौ) —$^{b}$) D5 निर्निंदतौ, D6 7 निर्भि, T G2–4 विन (for निर्भिन्दन्तौ) —$^{d}$) Dn2 D2 4 5 7 महारथौ (for °द्युती)

29 Ś1 missing (cf v l. 3) —$^{a}$) T G2 प्रवृद्ध (for °त्त) —$^{b}$) Ś1 K (K5 missing) D1 सम दिन (K1 °व)म्, D3 6 समं चिरम् (by transp), D4 चित्रं समम् D5 सुचित्रमिव चाभवत् —$^{c}$) M1. 2 दीप्यतो (for दीव्यतो) —$^{d}$) S (G5 missing) निशि (for मृधे)

30 Ś1 missing (cf v l 3) —$^{a}$) K1 सददतस् S (G5 missing) चाप (G1 M1 2 पे) (for तीक्ष्णान्) D3 6–8 तयो संदधतोस्तीक्ष्णान् —$^{b}$) K1 अस्य स, D6–8 अस्यतो (for °त) D3 शराश्चासकृदस्यतो, D5 शरानासीविषोपमान् (sic) —$^{d}$) D6 ते (for स्वे) Ś1 K (K5 missing) D2–8 तस्तो (for तदा) D8 [ऽ]ब्रुवन् (for [अ]भवन्) —$^{e}$) Ś1 K1–3 तथा, B1 2 4 Dn2 D3 तदा, T G1–4 M1 2 यथा (for यदा) —$^{f}$) D1 नृप Dn2 D2 4 5 7 8 S (G5 missing) न (D4 lacuna) विशेषयते नृप (D5 7 8 नृप, G2 तस)

31 Ś1 missing (cf v l 3) D7 om $31^{abcd}$ —$^{a}$) T G2–4 ऐंद्रम्, G1 M रौद्रम् (for दिव्यम्) B (except B2) Dc1 Dn1 तत प्रादुश्चकारास्त्र, Dn2 D2–6 8 प्रादुश्चक्रे ततो दिव्यम् —$^{b}$) B (except B2) Dc1 Dn1 दिव्यम् (for अस्त्रम्) —D2 om $31^{cd}$, D8 reads the same twice —$^{c}$) K4 Dn2 D4 5 8 (both times) सधित; B1 निहतं, Dn1 विहत (for विहितं) —$^{d}$) D8 (first time) दिव्यमस्त्रविदा वर, D8 (second time)

C 7 7024
B 7 175 35
K. 7 176 37

प्रादुश्चक्रे महामायां राक्षसः पाण्डुनन्दनः ॥ ३१
शूलमुद्गरधारिण्या शैलपादपहस्तया ।
रक्षसां घोररूपाणां महत्या सेनया वृतः ॥ ३२
तमुद्यतमहाचापं दृष्ट्वा ते व्यथिता नृपाः ।
भूतान्तकमिवायान्तं कालदण्डोग्रधारिणम् ॥ ३३
घटोत्कचप्रमुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ॥ ३४
ततोऽश्मवृष्टिरत्युग्रा महत्यासीत्समन्ततः ।
अर्धरात्रेऽधिकबलैर्विमुक्ता रक्षसां बलैः ॥ ३५
आयसानि च चक्राणि भुशुण्ड्यः शक्तितोमराः ।
पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टिशास्तथा ॥ ३६
तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिपाः ।
पुत्राश्च तव योधाश्च व्यथिता विप्रदुद्रुवुः ॥ ३७
तत्रैकोऽस्त्रबलश्लाघी कर्णो मानी न विव्यथे ।
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् ॥ ३८
मायायां तु प्रहीणायाममर्षात्स घटोत्कचः ।
विससर्ज शरान्घोरान्सूतपुत्रं त आविशन् ॥ ३९
ततस्ते रुधिराभ्यक्ता भित्त्वा कर्णं महाहवे ।
विविशुर्धरणीं बाणाः संक्रुद्धा इव पन्नगाः ॥ ४०
सूतपुत्रस्तु संक्रुद्धो लघुहस्तः प्रतापवान् ।

---

दिव्यमस्त्रं मदोत्कच —$^{e}$) $Dn_{3}$ $D_{2\,4\,5\,7\,8}$ ततो (for महा) —$^{f}$) $K_{4}$ $B_{4}$ $D_{1}$ $G_{1}$ $M_{1\,2}$ राक्षसीं (for °स) $G_{3}$ -पूर्वज (for नन्दन) $Dn_{3}$ $D_{2\,4\,5\,7\,8}$ राक्षसीं राक्षसेश्वर°

32 $Ś_{2}$ missing (cf. v l 3) —$^{a}$) $Dn_{3}$ $D_{2\,4\,5\,7\,8}$ पर्वत (for मुद्गर) —$^{b}$) $D_{5\,7\,8}$ शिला (for शैल) $Dn_{3}$ $D_{2\,4\,5\,7\,8}$ $G_{3}$ -मुद्गर (for पादप) —$^{c}$) $D_{4\,5\,7\,8}$ रा($D_{8}$ र)क्षस घोररूपं च —$^{d}$) $D_{2\,4\,5\,7\,8}$ वृत, $D_{6}$ नृप (for वृत)

33 $Ś_{2}$ missing (cf v l 3) —$^{a}$) $D_{4}$ lacuna, $G_{4}$ समुद्यत ; $M_{3\,4\,5}$ (*inf lin*) समुद्यस्य (for °त) $Dn_{3}$ $D_{2\,4\,5\,7\,8}$ समुद्यतमहाशस्त्र —$^{b}$) S ($G_{5}$ missing) निशाम्य (for दृष्ट्वा ते) $G_{1}$ $M_{1\,2}$ [अ]भवन् (for नृपा) —$^{d}$) $Ś_{1}$ $K_{1-3}$ $D_{1\,3\,6}$ पाणिन ($K_{1}$ °ना) (for धारिणम्)

34 $Ś_{2}$ missing (cf. v l 3) —$^{a}$) $K_{2\,4}$ B (except $B_{4}$) Dn $D_{1\,2\,4\,5\,7\,8}$ T $G_{2}$ $M_{3-5}$ -प्रयुक्तेन (for -प्रमुक्तेन) —$^{c}$) $B_{4}$ $D_{5-8}$ प्रशुश्रु($D_{8}$ °श्रु)वुर् (for प्रसुस्रुवुर्) $G_{1}$ $M_{1\,2}$ हया (for गजा) $M_{3-5}$ सुस्रुवुश्च हया मूत्रं —$^{d}$) K ($K_{5}$ missing) $B_{1\,4}$ $Dn_{1}$ विव्यधुश्; $Dn_{3}$ विव्य*श्; $D_{7\,8}$ विव्यशुश् (for °थुश्) $D_{6}$ नराधिपा, T $G_{2-4}$ तदा भृश (for नरा भृशम्)

35 $Ś_{2}$ missing (cf v l 3) —$^{c}$) $D_{2\,4\,5\,7\,8}$ अर्धरात्रा($D_{5}$ °ऽया)धिकबलैर् —$^{d}$) $B_{5}$ $G_{1}$ $M_{1.2}$ गणै (for बलै°) $Dn_{3}$ $D_{1\,2\,4\,5\,7\,8}$ T $G_{2-4}$ $M_{3-5}$ विमु($D_{5}$ निर्मु)क्ता राक्षसैर्भृश

36 $Ś_{2}$ missing (cf. v l 3) —$^{b}$) $K_{3}$ मुसुण्ड्य, $B_{1\,2}$ भुपुण्ड्य°, $D_{2}$ भृशुंड्य, $D_{3}$ भुसुंड्य, $D_{4}$ भुखंय (corrupt), $D_{5}$ भृशंड्य, $D_{6}$ भुशंड्य, $D_{7\,8}$ मुशड्य, T $G_{2}$ मुशुंड्य, $G_{1}$ $M_{1-4}$ मुसंड्य°, $G_{3}$ मुसुड्य°, $G_{4}$ मुसड्य, $M_{5}$ मुसंड्य (for भुशुण्ड्य) —$^{c}$) $B_{1}$ [अ]-विरलं, T $G_{1\,2}$ M °रळा (for °रला) $D_{6}$ स्थूणा (for शूला) —$^{d}$) $B_{1}$ शत्रुघ्ना, $M_{2}$ शतघ्न (for °घ्न्य°) $K_{2\,3}$ $D_{1}$ पट्टिसास्, $D_{5\,7\,8}$ °शस्, S ($G_{5}$ missing) पट्टसास् (for पट्टिशास्)

37 $Ś_{2}$ missing (cf v l 3) —$^{a}$) $K_{2\,3}$ $D_{3\,6}$ $M_{4\,5}$ (*sup lin*) तमुग्रम्, $D_{2}$ तद्दुर्गम्, $D_{5}$ तद्ग्रकम् (for तदुग्रम्) —$^{b}$) $D_{2}$ तत्र (for युद्ध) $K_{3}$ B $Dc_{1}$ $Dn_{1}$ $D_{3\,6}$ नराधिप ($K_{3}$ °प), $D_{4\,5}$ नृपाधिक, $G_{1}$ $M_{1\,2}$ नरर्षभा (for नराधिपा) — $D_{4\,5}$ om 37$^{c}$–45$^{b}$ —$^{c}$) $D_{2}$ पौत्राश्, $G_{1}$ M यौधाश् (for यो°) —$^{d}$) $B_{3}$ च (for वि)

38 $Ś_{2}$ missing (cf v l 3) $D_{4\,5}$ om 38 (cf v l 37) —$^{c}$) $Dn_{3}$ $D_{2}$ स (for च) —$^{d}$) $B_{4\,5}$ $Dn_{1}$ S ($G_{5}$ missing) ता घटोत्कचनिर्मिता

39 $Ś_{2}$ missing (cf v l 3) $D_{4\,5}$ om 39 (cf v. l 37). —$^{a}$) $Ś_{1}$ $K_{1\,2}$ $D_{3\,6}$ प्रहीनायाम् $Dn_{3}$ मायां तु निहतां दृष्ट्वा, $D_{2}$ दृष्ट्वा माया तु निहताम् —$^{b}$) $K_{1}$ अमर्षश् (for °र्षात्) $Ś_{1}$ $K_{1-3}$ $B_{5}$ $D_{7\,8}$ च (for स) —$^{c}$) $D_{3}$ विशसर्ज (sic) (for विस°) $Dn_{1}$ $D_{1}$ om घोरान्स् —$^{d}$) $B_{5}$ समाविशन्, $D_{3}$ च जघ्निवान्, $D_{6}$ जिघांसवान्, $D_{7\,8}$ च ते विशन् (for त आविशन्) $Dn_{3}$ $D_{2}$ सूतपुत्रवधेप्सया

40 $Ś_{2}$ missing (cf v l 3) $D_{4\,5}$ om 40 (cf. v l 37) —$^{a}$) $D_{7\,8}$ जातास् (for ततस्) $D_{2}$ रुधिरा

घटोत्कचमतिक्रम्य विभेद दशभिः शरैः ॥ ४१
घटोत्कचो विनिर्भिन्नः सूतपुत्रेण मर्मसु ।
चक्रं दिव्यं सहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ४२
क्षुरान्तं बालसूर्याभं मणिरत्नविभूषितम् ।
चिक्षेपाधिरथेः क्रुद्धो भैमसेनिर्जिघांसया ॥ ४३
प्रविद्धमतिवेगेन विक्षिप्तं कर्णसायकैः ।
अभाग्यस्येव संकल्पस्तन्मोघमपतद्भुवि ॥ ४४
घटोत्कचस्तु संक्रुद्धो दृष्ट्वा चक्रं निपातितम् ।
कर्णं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ॥ ४५
सूतपुत्रस्त्वसंभ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः ।
घटोत्कचरथं तूर्णं छादयामास पत्रिभिः ॥ ४६
घटोत्कचेन क्रुद्धेन गदा हेमाङ्गदा तदा ।
क्षिप्ता भ्राम्य शरैः सापि कर्णेनाभ्याहतापतत् ॥ ४७
ततोऽन्तरिक्षमुत्पत्य कालमेघ इवोन्नदन् ।
प्रववर्ष महाकायो द्रुमवर्षं नभस्तलात् ॥ ४८
ततो मायाविनं कर्णो भीमसेनसुतं दिवि ।
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ॥ ४९
तस्य सर्वान्हयान्हत्वा संछिद्य शतधा रथम् ।
अभ्यवर्षच्छरैः कर्णः पर्जन्य इव वृष्टिमान् ॥ ५०
न चास्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम् ।
सोऽदृश्यत मुहूर्तेन श्वाविच्छललितो यथा ॥ ५१
न हयान्न रथं तस्य न ध्वजं न घटोत्कचम् ।

C 7 7945
B 7 173 53
K 7 176 58

मक्ता ( for °भ्यक्ता ) — $^{b}$ ) M3–5 विध्वा ( for भित्त्वा ) — $^{d}$ ) G1 M1. 2 मक्षुब्धा, M3–5 मस्द्धा ( for मक्रुद्धा )

41 Ś2 missing ( cf v 1 3 ) D4 5 om. 41 ( cf v 1 37 ) D6 om 41$^{cd}$ — $^{c}$ ) Ś1 K1 3 G1 M2 अभिक्रम्य, K2 अभिद्रुत्य ( for अतिक्रम्य )

42 Ś2 missing ( cf v 1 3 ) D4 5 om 42 ( cf v 1 37 ) — $^{a}$ ) G1 3 4 M विनिर्भिण्ण — $^{b}$ ) D7 8 मारिप ( for मर्मसु ) — $^{d}$ ) D2 7 अ( D2 व्य )गृह्णाद्व्ययि वेंद्रिय

43 Ś2 missing ( cf v 1 3 ) D4 5 om 43 ( cf. v 1 37 ) — $^{b}$ ) S ( G5 missing ) रणे ( for मणि ) — $^{c}$ ) K1 B1 D6 आधिरथे ( B1 °थं ), T G3–4 अति रथे ( for आधि° ) — $^{d}$ ) D3 ( before corr ) भीमसेन ( for भैमसेनिर् )

44 Ś2 missing ( cf. v 1. 3 ) D4 5 om. 44 ( cf v 1 37 ) — $^{a}$ ) M3 प्रवृद्धम् ( for प्रवि° )

45 Ś2 missing ( cf v 1 3 ) D4 5 om. 45$^{ab}$ ( cf v 1 37 ) — $^{a}$ ) D3 6 सु ( for तु ) — $^{b}$ ) G2 lacuna for चक्र निपातितम् M3–5 विनाशितं ( for नि पातितम् ) — $^{c}$ ) K1 2 4 Dn2 D2–8 T G1–3 M4 प्र ( M4 वि )च्छादयद् ( for प्राच्छा° )

46 Ś2 missing ( cf. v 1 3 ) — $^{a}$ ) D5 तव ( for सूत ) M4 च ( for तु ) K2 मभ्रातो ( for [अ]सं° ) D4 7 8 तव पुत्रस्तु सभ्रान्तो — $^{b}$ ) D2–6 द्रावयन्नतिविक्रम — $^{c}$ ) Dn2 lacuna for रथं तूर्णं

47 Ś2 missing ( cf v 1 3 ) — $^{a}$ ) Dn2 D2 5 7 8 तु गदा ( for क्रुद्धेन ) — $^{b}$ ) T G3 4 transp गदा and तदा Dn2 D5 7 8 नद्ध, D2 नव ( for गदा ) K1 B1 तथा ( for तदा ) D4 नद्धा हेमगदा तदा — $^{c}$ ) D2–5 चाम्य D3 चाम्य; M3 5 भूमौ ( for भ्राम्य ) Ś1 K1–3 Dn2 D1 3 8 चापि, T G2 सोपि ( for सापि ) — $^{d}$ ) K1 2 D4 5 [अ]भ्यहता

48 Ś2 missing ( cf v 1 3 ) — $^{a}$ ) D3 6 आप्लुत्य ( for उत्पत्य ) — $^{b}$ ) S ( except G3 4, G5 missing ) काळ ( for काल ) D4 5 7 8 G4 [आ]नदन् ( D3 त् ) ( for [उ]न्नदन् ) — $^{c}$ ) D2 4 5. 7 8 S ( G5 missing ) ववर्ष सु ( D7 °र्षंत, D8 र्षं तु ) ( for प्रववर्ष ) K1 2 मायो ( for -कायो ) — $^{d}$ ) D2 4 5 7 8 महाबल, T G1 2 नभस्थलात् ( for °स्तलात् )

49 Ś2 missing ( cf v 1 3 ) — $^{a}$ ) D2 मायावृत, D4 5 T G2–4 M3–5 वृत ( for °विन ) — $^{c}$ ) Dn1 अतिविव्याध, T G2 अभि° — $^{d}$ ) B4 M3–5 [अ] शुमान् ( for [अ]शुभि )

50 Ś2 missing ( cf. v 1. 3 ) — $^{b}$ ) K1 स तदा, G1 M1 2 बहुधा ( for शतधा ) — $^{c}$ ) B1 स्वयं ( for शरैः )

51 Ś2 missing ( cf v 1 3 ) — $^{a}$ ) Dn2 D3 6 तस्य ( for चास्य ) D4 7 8 स्याद् ( for [आ]सीद् ) Ś1 K1–3 अभिन्नं च, S ( G5 missing ) अनिर्भिण्ण ( for °न्न ) — $^{b}$ ) D6 [ऽ]प्यङ्गुलम् ( for द्व्यङ्गुलम् ) Ś1 K1 2 D1 गात्रे द्व्यङ्गुल( K1 ल )मात्रक, D5 गात्रमध्यर्धमङ्गुल — D6 om 51$^{c}$–52$^{d}$ — $^{d}$ ) D2 श्वा च ( for श्वाविद् ) Ś1 K1–3 D1 सशल्को ( K1 2 °ल्यो, D1 °र्ल ); Dn D3 T

C 7 7145
B 7 175 56
K. 7 176 59

दृष्टवन्तः स समरे शरौघैरभिसंवृतम् ॥ ५२
स तु कर्णस्य तद्दिव्यमस्त्रमस्त्रेण शातयन् ।
मायायुद्धेन मायावी सूतपुत्रमयोधयत् ॥ ५३
सोऽयोधयत्तदा कर्णं मायया लाघवेन च ।
अलक्ष्यमाणोऽथ दिवि शरजालेषु संपतन् ॥ ५४
भैमसेनिर्महामायो मायया कुरुसत्तम ।
प्रचकार महामायां मोहयन्निव भारत ॥ ५५
स स्म कृत्वा विरूपाणि वदनान्यशुभाननः ।
अग्रसत्सूतपुत्रस्य दिव्यान्यस्त्राणि मायया ॥ ५६
पुनश्चापि महाकायः संछिन्नः शतधा रणे ।
गतसत्त्वो निरुत्साहः पतितः खाद्व्यदृश्यत ।
हतं तं मन्यमानाः स्म प्राणदन्कुरुपुंगवाः ॥ ५७
अथ देहैर्नवैरन्यैर्दिक्षु सर्वास्वदृश्यत ।
पुनश्चापि महाकायः शतशीर्षः शतोदरः ॥ ५८
व्यदृश्यत महाबाहुर्मैनाक इव पर्वतः ।
अङ्गुष्ठमात्रो भूत्वा च पुनरेव स राक्षसः ।
सागरोर्मिरिवोद्धूतस्तिर्यगूर्ध्वमवर्तत ॥ ५९
वसुधां दारयित्वा च पुनरप्सु न्यमज्जत ।

---

G3 4 शल(Dn1 D3 °लि)लतो, D4 सविवशो, D5 शल्यैर्वृतो, D7 सविवृतो (for शललितो)

52 Ś2 missing (cf v l 3) Ś1 D3 om 52 (for D3, cf v l 51) —$^a$) D2 M3–5 हया (for हयान्) B1 रयास्, D4 5 रथस् (for रथं) — K3 om 52$^{cd}$ —$^c$) B4 च, G2 तु (for स) —$^d$) D6 अति (for अभि) K1 B Do1 Dn1 D1. 3 6 -सछुत, K4 सछुत, T G3–4 -सछुतैः, G1 M संवृते (for °तम्) Dn2 D2 4 5 7 शरौघेणापि(Dn2 D2 °भि)सवृतं (Dn2 °ते)

53 Ś2 missing (cf v l 3) —$^b$) B5 सातयन्, Do1 T G1–4 M1 शातय(G1 °ये)त्, D6 (m sec m) श्यातयत् (sic) (for शातयन्) D7 8 अस्त्रेणास्त्रमशातयत्

54 Ś2 missing (cf v l 3) —$^a$) Ś1 K1–3 D3 6 स (K3 D3 सो) योधयस्, Do1 D2 4 5 अ(Do1 स)योधयत्, D7 8 सोवच°, M4 सोन्वयोधत् (for सोऽयोधयत्) D4 तूर्णं (for कर्णं) —$^b$) D4 तु (for च) —$^c$) Ś1 K1–3 D3 6 अक्षो(K3 °क्षु)भ्यमानो (D3 6 °णो); B2 D2 प्र(D2 अ)क्षुभ्यमाणो; D1 M3 4 अलक्ष्यमानो, M5 अक्षण्यमानो (for अलक्ष्यमाणो) K4 B1 3–5 Dn D4 अलक्ष्य(D4 °क्षुभ्य)माणानि दिवि; Do1 अलक्ष्यमाणानि च दिवि (hypermetric), D5 8 अक्षोभ्यमाणेपि दिवि, D7 अक्षोभ्यमाणोप्यदिवि (sic) —$^d$) D4 *पतत् Ś1 K1–3 D1 3.6 शरजालैः समापतत् (K3 D1 °न्), K4 B Do1 Dn °जालानि चा(Dn2 सं)पतन्, D7 8 °जालेन संपतत् (D7 °न्)

55 Ś2 missing (cf v l 3) —$^a$) Dn2 महा**, D6 महाबाहुर्, G2 °कायो (for °मायो) —$^c$) B Do1 Dn1 D1 T G2–4 वि(D1 प्र)चचार महाका(T G3–4 °मा)यो, Dn2 D4 5 7 8 G1 M विचका(G1 M °चा)रात्मनात्मानं (G1 M1 2 °कर्णं), D2 चकारात्मानमात्मान

56 Ś2 missing (cf v l 3) —$^a$) B5 शश्वत्, Dn D1 2 5 स तु, D3 6 सोस्स (sic), D4 सोतु, D7 8 सर्मं (for स स्म) —$^b$) B2 Dn2 D2 4 5 7 8 [अ]शुभानि च (for °नन) —$^c$) K4 D4 5 6 (marg, sec m as in text) T G2 3 अग्रत (for अग्रसत्) —$^d$) Dn2 D4 5 7 8 वीर्यवान् (for मायया)

57 Ś2 missing (cf v l 3) D1 om 57 —$^a$) K2 महामाय (for °काय) — M4 om (hapl) 57$^b$–58$^c$ —$^b$) Ś1 सभिन्न, D4 5 8 स छिन्न (for स छिन्न) D3 6 शतशो, T G2 शतया (for शतधा) —$^c$) Dn2 D2 4 5 7 8 M3 हृत (for गत) Ś1 K3 महाकाय (for निरुत्साह) —$^d$) Ś1 K3 परित (for पतित) D4 5 स, G1 M1 2 [ऽ]पि (for खाद्) D3 6 8 अदृश्यत Dn2 D2 पतित समदृश्यत, T G2–4 M3 5 °तो वि(M3 5 सु)व्यदृश्यत — D3 om (hapl) 57$^e$–58$^b$ —$^e$) K1 द्रुत त, B Do1 Dn1 S (G5 missing) तं हत (by transp) K1 2 Dn2 D2 7 G3. 4 च (for स्म) D4 5 8 हतं त हन्यमानाश्च —$^f$) Dn2 D2 7 8 प्रणेदु; D4 5 प्राणेदु; D6 प्रानंद, G1 M1 2 प्रणदन् (for प्रा°) K1 2 B4 D4 -सत्तमा (for पुगवा)

58 Ś2 missing (cf v l 3) D3 om 58$^{ab}$, M4 om 58$^{abc}$ (for both, cf v l 57) —$^a$) B3 वेगैर् (for देहैर्) —$^b$) K1 दृश्यत (for [अ]दृ°) —$^c$) M5 महामाय (for °काय)

59 Ś2 missing (cf v l 3) —$^a$) K1 2 D1 2 4 5 8 अदृश्यत (for व्य°) Dn2 D5 7 8 महाराज, S (G5 missing) °कायो (for °बाहुर्) —$^c$) D2 तु, D4 5 7 8 स (for च), —$^d$) D3. 6 G1 च राक्षस°;

अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः ॥ ६०
सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते ।
क्षितिं द्यां च दिशश्चैव माययावृत्य दंशितः ॥ ६१
गत्वा कर्णरथाभ्याशं विचलत्कुण्डलाननः ।
प्राह वाक्यमसंभ्रान्तः सूतपुत्रं विशां पते ॥ ६२
तिष्ठेदानीं न मे जीवन्सूतपुत्र गमिष्यसि ।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ६३

इत्युक्त्वा रोषताम्राक्षं रक्षः क्रूरपराक्रमम् ।
उत्पपातान्तरिक्षं च जहास च सुविस्वरम् ।
कर्णमभ्याहनच्चैव गजेन्द्रमिव केसरी ॥ ६४
रथाक्षमात्रैरिषुभिरभ्यवर्षद्धटोत्कचः ।
रथिनामृषभं कर्णं धाराभिरिव तोयदः ।
शरवृष्टिं च तां कर्णो दूरप्राप्तामशातयत् ॥ ६५
दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ ।

C 7 7961
B 7 173 71
K 7 176 74

---

D5 घटोत्कच (for स राक्षस) —$^{e}$) D6 [उ]द्भुतस् (for [ट]द्रू°) —$^{f}$) D2 5. 7 8 अन्वधंत (for तत)

60 Ś2 missing (cf v l 3) Dc1 om (? hapl.) $60^{ab}$ —$^{a}$) Ś1 धारयत्वा, K1 2 D1 पूरयित्वा, K3 धार**, G3 4 नाटयित्वा (for दार°) D2 तु, M1 [अ]थ (for च) —$^{b}$) K4 निमज्जत, T G2–4 न्य (G3 4 म)मज्ज च (for °ज्जत) D2 पुनरप्येव मज्जति, D4 °श्चैन मज्जति, D °स्त स गच्छति — Dn1 om $60^{cd}$ —$^{c}$) Ś1 K3 अतोऽस्य*, T G3 अदृश्य च (for °श्यत) S (G5 missing) पुनस् (for तदा) K1 2 D1 निमग्न एकतस्तत्र, D4 5 7 8 दृश्यमान पुनस्तत्र —$^{d}$) Ś1 K1 D3 G2 उन्मज्जतो, B1 र्जितो, D2 °ज्यते, D4 5 7 °ज्जते, T G3 उज्जिपतो (for उन्मज्जितो) B6 [ऽ]न्यद (sic) (for ऽन्यत)

61 Ś2 missing (cf v l. 3) —$^{ab}$) Ś1 K1–3 अव- तीर्य, B5 सोवतिष्य (sic), D6 T G2–4 सोविवीर्यो (for सोऽवतीर्य) B1 S (G5 missing) transp पुन and रथे K1 -पुरस्कृते, Dc1 (before corr) Dn D3–8 -परिस्कृते, G1 M1 2 विभूषिते (for परिष्कृते) —$^{c}$) Ś1 K3 गा, B Dc1 Dn ख (for द्या) M1 2 5 दिश —$^{d}$) K4 B Dc1 Dn [अ]भ्येत्य, D6 (marg as in text, *sec m*) [आ]वृत्ति (for [आ]वृत्य) K2 3 G1 3 4 M दसित (for दंशित) D4 मायया वृत्तिदर्शिन

62 Ś2 missing (cf v l 3) —$^{a}$) B Dc1 (before corr) D2–8 रथाभ्यास (B3 °से) (for °भ्याश) —$^{b}$) Ś1 K (K5 missing) Dc1 D1 3 6–8 G1 M1 2 व्यचर(Dc1 °ल)त्, B2 3 Dn2 विचरत्, T G2 M5 प्रा(M5 प्र)- चलत्, G3 4 M3 4 प्रचरत् (for विचलत्) Dn2 कुंड- लानव (for °नन) D2 4 5 व्यचरन्मडलानि स (D2 च) —$^{c}$) D2 आह (for प्राह) D2. 4 5 8 अदीनात्मा, G3 असभ्रात (for °भ्रान्त)

63 Ś2 missing (cf v l. 3) —$^{a}$) Ś1 K (K5 missing) तिष्ठ (for [इ]दानीं) K3 [इ]ति, B Dc1 Dn1 क (for न) K3 मा (for मे) Dn2 तिष्ठेदानीं मेनीयहून् (sic) —$^{c}$) Ś1 युद्धश्रद्धामद तेद्य, K1 2 (marg as in text) 3 D1 युद्ध कृत्वा त्वह (K1 हत, K3 मद) तेद्य, B5 युद्ध श्राद्धमह तेद्य (sic)

64 Ś2 missing (cf. v l 3) —$^{a}$) D2 4 5 7 8 क्रोध (for रोष) Ś1 K2 3 D2 4 5 M1 2 ताम्राक्षो, K3 4 D1 रक्ताक्षो (for -ताम्राक्ष) — Ś1 K1 2 om $64^{bc}$ —$^{b}$) K3 4 om. from रक्ष up to जहास (in $64^{d}$) D1 om (hapl) from रक्ष up to न्तरिक्ष (in $64^{c}$) D4 om रक्ष D2 8 पराक्रम D6 भीम रूपो महाबल —$^{c}$) B2 3 5 D5 [अ]तरीक्ष D1 स, D4 5 7 8 स, G1 M तज् (for च) —$^{d}$) D1 -जगाम (for जहास) K4 B2 Dc1 Dn1 D3 6 M3 4 सु (D3 स)विस्वर, G1 M1 2 विकस्वर (for सुविस्वरम्) Ś1 K1 2 स जहास च विस्व(K2 स्त)र, D2 4 5 7 8 शरानष्टौ मुमोच ह —$^{e}$) K1 2 4 B Dc1 Dn D1 T G2–4 M4 अभ्यहनच्, D4 अभ्यागतश्, D7 8 अभ्या (D8 °भ्य)हतश् (for °हनच्) —$^{f}$) K4 B (except B4) D3 केशरी

65 Ś2 missing (cf v l 3) —$^{a}$) D5 अर्थाक्ष (for र°) Ś1 K1 2 D1 तथा त सायकै प(K1 ख)ड्गिर्, K3 तथा तम**पड्गिर्, D2 रथे रथे रक्षमाणैर् — K4 om $65^{c}$–$66^{d}$ —$^{c}$) Dn2 om (hapl) from रथिनाम् up to घटोत्कच (in $66^{c}$) D4 5 रथानाम् (for रथि°) —$^{e}$) Dn1 D3 6 T G2–4 तु (for च) —$^{f}$) B Dc1 Dn1 D6 T G2–4 दूरात्, M3–5 दूरे (for दूर) K1 दूरप्राप्ता च शातयत्, D2 4 5 7 8 ह्यप्राप्तामच्छिनत्तदा

66 Ś2 missing (cf v l. 3) K4 om 66, Dn2 om. up to घटोत्कच (for both, cf v l 65) —$^{a}$) S (G5 missing) तु (for च) Dc1 (before corr as in text) G1 निहता (for वि°) D2 4 5 7 8 दृष्ट्वा तां (D5 वि) निहतां माया — G3 om (hapl) $66^{bc}$ —$^{b}$) D2 4 5 7 8 कर्णेन च महात्मना —$^{c}$) Ś1 K3

C 7 7961
B 7 175 72
K 7 176 74

घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ॥ ६६
सोऽभवद्गिरिरित्युच्चः शिखरैस्तरुसंकटैः ।
शूलप्रासासिमुसलजलप्रस्रवणो महान् ॥ ६७
तमञ्जनचयप्रख्यं कर्णो दृष्ट्वा महीधरम् ।
प्रपातैरायुधान्युग्राण्युद्वहन्तं न चुक्षुभे ॥ ६८
स्मयन्निव ततः कर्णो दिव्यमस्त्रमुदीरयत् ।
ततः सोऽस्त्रेण शैलेन्द्रो विक्षिप्तो वै व्यनश्यत ॥ ६९
ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ।
अश्मवृष्टिभिरत्युग्रः सूतपुत्रमवाकिरत् ॥ ७०
अथ संधाय वायव्यमस्त्रमस्त्रविदां वरः ।
व्यधमत्कालमेघं तं कर्णो वैकर्तनो वृषा ॥ ७१
स मार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्वशः ।
जघानास्त्रं महाराज घटोत्कचसमीरितम् ॥ ७२
ततः प्रहस्य समरे भैमसेनिर्महाबलः ।
प्रादुश्चक्रे महामायां कर्णं प्रति महारथम् ॥ ७३
स दृष्ट्वा पुनरायान्तं रथेन रथिनां वरम् ।
घटोत्कचमसंभ्रान्तं राक्षसैर्बहुभिर्वृतम् ॥ ७४
सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा ॥ ७५
नानाशस्त्रधरैर्घोरैर्नानाकवचभूषणैः ।

---

च माया वै, K1 2 D1 G4 पुनर्मायां, G1 M1 2 ततो माया (for ततो माया) —$^d$) K1 2 D1 प्रभु, D8 परा, G4 तत (for पुन)

67 Ś2 missing (cf v l 3) —$^a$) Ś1 K2 8 D1 G1 M1 2 अत्युच्चै, K1 °च्चै, D7 8 °प्र (for °च्च) D4 सोभवद्गिरि * त्युक्त, T G2-4 गिरिरत्युच्चशिखरैर् —$^b$) D4 शयरैस्, D6 शिपिरैस्, T G2 महाद्रिस्, G3 4 मरुद्भिस् (for शिखरैस्) —$^c$) D8 पाशासि (for प्रासासि) Ś1 K2 D1 मुसुल, K1 Dc1 Dn D4 6-8 मुशल, B2 3 5 मुपल, D5 मुशलैर् (for मुसल) —$^d$) D4 शूल (for जल) Dc1 (before corr) D4 6 प्रश्रवणो, D7 8 प्रस्रवणैर् (for °वणो)

68 Ś2 missing (cf v l. 3) —$^a$) B1 प्रक्ष (for प्रख्य) —$^b$) B4 D2-8 M3-5 दृष्ट्वा कर्णो (by transp) Ś1 (orig) K3 महामना, Ś1 (sup lin) K1 2 4 D1 महारथ (for महीधरम्) —$^{cd}$) D7 8 पातयन् (for प्रपातैर्) D2 [उ]ग्राण्युद्धमतं, D5 [उ]ग्रो युद्धमत, D7 8 [आ]शु न्यधमन् (for [उ]ग्राण्युद्वहन्त) D8 6 प्रपातैरायुधैरुग्रैर्, S (G5 missing) शस्त्रप्रताप(M5 °पात)मत्युग्र K1 उद्वर्तंत, D3 6 युध्यमान, D4 ** मतं, S (G5 missing) विक्षिपतं (for उद्वहन्त)

69 Ś2 missing (cf v l 3) —$^b$) G1 M वज्रम् (for दिव्यम्) Ś1 K1-3 B1-4 Dc1 (before corr) Dn2 D1 7 उदैरयत् (B1 न्), K4 उदीर्य यत्, B5 D4 6 8 रयन् (for °रयत्) —$^c$) D6 शस्त्रेण (for सोऽस्त्रेण) —$^d$) Dn1 D4 विक्षिप्ता, D2 विभिन्नो (for विक्षिप्तो) D5 स, D7 8 स्वे (for वै) D3. 6 विनश्यत, T G3 4 M1 (sup lin as in text) 3-5 व्यद्दश्यत (for व्यन°)

70 Ś2 missing (cf. v l 3) —$^b$) D4 5 ऐन्द्रायुधो K1 युधि, D5 T G2-4 भुवि (for दिवि) —$^c$) K2 D1 S (G5 missing) उग्राभि (for अत्युग्र) —$^d$) D3 4 7 इवाकिरत् (for अवा°)

71 Ś2 missing (cf v l 3) —$^a$) D2 तत (for अथ) —$^c$) T G2 व्यथमत् (for व्यध°) S (G5 missing) काळ (for काल-) D2 4 5 मेघाभ (for -मेघं त) —$^d$) Ś1 K (K5 missing) B Dc1 Dn D1 2 4 5 7 8 वृष, D3 6 मृधे (for वृषा)

72 Ś2 missing (cf v l 3) D5 transp $72^{ab}$ and $72^{cd}$ —$^b$) S (G5 missing) सर्वत (for °श) D2 4 5 निजघान (D5 विनिर्जित्य) हिडंब(D2 °बि)ज

73 Ś2 missing (cf v l 3) —$^b$) B2 D4 5 7 8 महारथ (for °बल) —$^c$) D4 महाकाय (for °माया) —$^d$) K1 2 D1 महामना, D5 8 °रथ, M3-5 °बल (for °रथम्) Ś1 K3 कर्णमेवमयोधयत्

74 Ś2 missing (cf v l 3) —$^b$) B3 D2 3. 5. 6 वर (for वरम्) S (G5 missing) रथेनायतकार्मुक —$^d$) D3 6 राक्षस राक्षसैर्वृत

75 Ś2 missing (cf v l 3) —$^b$) B Dc1 Dn D6 मातग (for द्विरद-) D4 6 मरुद्भिरिव वासव —$^c$) Ś1 K1-3 D1 रथस्थितैर्गजस्थैश्च — K1 om $75^d$–$76^c$ —$^d$) B3 G4 अपि (for तथा)

76 Ś2 missing (cf. v l 3) K1 om $76^{abc}$ (cf v l 75). —$^a$) T G3 4 -धारैर् (for -धरैर्). Dn1

वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवम् ।
दृष्ट्वा कर्णो महेष्वासो योधयामास राक्षसम् ॥ ७६
घटोत्कचस्ततः कर्णं विद्ध्वा पञ्चभिराशुगैः ।
ननाद भैरवं नादं भीषयन्सर्वपार्थिवान् ॥ ७७
भूयश्चाञ्जलिकेनाथ समार्गणगणं महत् ।
कर्णहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ॥ ७८
अथान्यद्धनुरादाय दृढं भारसहं महत् ।
व्यकर्षत बलात्कर्ण इन्द्रायुधमिवोच्छ्रितम् ॥ ७९
ततः कर्णो महाराज प्रेषयामास सायकान् ।
सुवर्णपुङ्खाञ्शत्रुघ्नान्खचरान्राक्षसान्प्रति ॥ ८०
तद्बाणैरर्दितं यूथं रक्षसा पीनवक्षसाम् ।
सिंहेनेवार्दितं वन्यं गजानामाकुलं कुलम् ॥ ८१
विधम्य राक्षसान्बाणैः साश्वसूतगजान्विभुः ।
ददाह भगवान्वह्निर्भूतानीव युगक्षये ॥ ८२
स हत्वा राक्षसीं सेनां शुशुभे सूतनन्दनः ।
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ॥ ८३
तेषु राजसहस्रेषु पाण्डवेयेषु मारिष ।
नैनं निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव ॥ ८४

C 7 7960
B 7 175 90
K. 7 176 92

---

नाना ( for घोरैर् ) —$^{b}$ ) Ś1 भूपितं ( for भूषणं ) Dn1 -कवचैरायुधैस्तथा —$^{c}$ ) Ś1 क्रूर, K2 M1 2 घोरैर्, D2 4 7 8 शूरैर्, D6 वीरैर् ( for क्रू° ) —$^{d}$ ) B1 मागर ( for वासवम् ) D5 महाबलपराक्रमैः —$^{e}$ ) D2 महेष्वास —$^{f}$ ) D2. 6 S ( G5 missing ) राक्षसान् ( for °सम् ) D7 8 पातयामास राक्षसान्

77 Ś2 missing ( cf v l 3 ) —$^{a}$ ) D2 4 5 7 8 तदा ( for तत ) —$^{b}$ ) D5 6 भित्त्वा ( for विद्ध्वा ) B2 4 D1 सायकैः ( for आशुगैः ) K1 2 S ( G5 missing ) भित्त्वा पञ्चभिरायसैः —$^{c}$ ) S ( G5 missing ) सुमहा ( for भैरव ) —$^{d}$ ) D1 भैरवान् ( for -पार्थिवान् )

78 Ś2 missing ( cf v l 3 ) D1 om 78$^{a}$–80$^{b}$ —$^{b}$ ) B1 4 Dc1 Dn1 M1 2 4 5 गुण, D5 गणैर्, G2 गणान् ( for गण ) D5 महान्, G2 बहून् ( for महत् ) — D5 om. ( hapl ) 78$^{c}$–79$^{b}$ —$^{c}$ ) M1 2 गत ( for स्थितं ) —$^{d}$ ) T G2–4 स ( for [आ]शु )

79 Ś2 missing ( cf. v l. 3 ) D1 om 79, D5 om. 79$^{ab}$ ( for both, cf v l 78 ) —$^{c}$ ) K1 व्यकर्षत, K3 4 B ( except B2 ) Dc1 Dn विचकर्ष, D3 अकर्षत, D6 व्या*कर्षद् ( for व्यकर्षत ) S ( G5 missing ) विकर्षन्बलवान्क ( G1 M1 2 °वस्क )र्ण —$^{d}$ ) S ( G5 missing ) सेंद्रायुधम् ( for इन्द्रा° ) B2 Dn1 D2 5 7 8 उत्थित ( for उच्छ्रितम् )

80 Ś2 missing ( cf v l. 3 ) D1 om. 80$^{ab}$ ( cf v l. 78 ) —$^{c}$ ) G1 विशिखान् ( for शत्रुघ्नान् ) —$^{d}$ ) K4 B2 3. 5 खेचरान्, D2 व्यचरद् ( for खचरान् ) Dc1 Dn1 D2 4 5 7 8 राक्षस, D3. 6 S ( G5 missing ) खचरान् ( for राक्षसान् )

81 Ś2 missing ( cf v l 3 ) G1 M1 2 om 81 M3 4 read 81 after 1231* —$^{a}$ ) Ś1 K3 D3 4 5 त, D6 स ( for तद् ) —$^{b}$ ) D3 राक्षस ( for रक्षसा ) —$^{c}$ ) Ś1 K1 2 D5 [यु]व ( for [इ]व ) Ś1 K3 [आ]कुल ( for [अ]र्दित ) T G2–4 स्थित ( for वन्य ) M3–5 सिंहैरिव यथौ मत्त —$^{d}$ ) D2 6 अकुल D2 4 5 यथा ( for कुलम् ) B1 गजानां कुलमाकुलं — After 81, M3 4 ins

1230* निहत्य राक्षसान्कर्णं पुनर्हैडिम्बमर्दयत् ।
तत्तु दृष्ट्वा महत्कर्म राधेयस्य महात्मन ।
क्रोधेनाभिप्रजज्वाल भैमसेनिर्घटोत्कच ।

82 Ś2 missing ( cf v l 3 ) —$^{a}$ ) D2 4 5 7 8 व्यधमद्, T G2–4 विशस्य, G1 M न्यहनद् ( for विधम्य ) —$^{b}$ ) K3 D5 -ध्वजान्, T G3 4 हयान्, G2 रथान् ( for गजान् ) Dc1 प्रभु, D6 रथान् ( for विभु ) —$^{d}$ ) D2 7 8 भूतानिव G1 M यथा भूतानि सक्षये — After 82, G1 M1–4 ins

1231* तत कर्णो महाराज राक्षसान्व्यधमच्छरैः ।

— After the above, M3 4 read 81 followed by 1230* — G1 M1 2 cont after 1231* M3 4 after 1230*

1232* स स्म कृत्वा विरूपाणि व्यात्तानि वदनानि च ।
राधेयस्याच्छिनद्बाणैरस्त्राणि विविधानि च ।
छादयामास च शरैर्धाराभिरिव पर्वतम् ।
गन्धर्वनगराकारं पुनरन्तरधीयत ।

[ M3 om line 2 With lines 3–4, cf. 96 ]

83 Ś2 missing ( cf v l 3 ) G1 M om 83–104 —$^{c}$ ) Dn1 D5 पुरैव K3 त्रिदिव ( for त्रिपुर ) K3 2 D1–7 T G2–4 हत्वा ( for दग्ध्वा )

84 Ś2 missing up to 84$^{ab}$ ( cf. v l 3 ) G1 M om. 84 ( cf v. l 83 ) —$^{b}$ ) D6 पाण्डवेषु च ( for

C. 7 7990
B. 7 175 91
K. 7 176 93

ऋते घटोत्कचाद्राजन्राक्षसेन्द्रान्महाबलात् ।
भीमवीर्यबलोपेतात्क्रुद्धाद्वैवस्वतादिव ॥ ८५
तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत ।
महोल्काभ्यां यथा राजन्सार्चिषः स्नेहबिन्दवः ॥ ८६
तलं तलेन संहत्य संदश्य दशनच्छदम् ।
रथमास्थाय च पुनर्मायया निर्मितं पुनः ॥ ८७
युक्तं गजनिभैर्वाहैः पिशाचवदनैः खरैः ।
स सूतमब्रवीत्क्रुद्धः सूतपुत्राय मा वह ॥ ८८
स ययौ घोररूपेण रथेन रथिनां वरः ।
द्वैरथं सूतपुत्रेण पुनरेव विशां पते ॥ ८९
स चिक्षेप पुनः क्रुद्धः सूतपुत्राय राक्षसः ।
अष्टचक्रां महाघोरामशनिं रुद्रनिर्मिताम् ॥ ९०
तामवप्लुत्य जग्राह कर्णो न्यस्य रथे धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽप्यवपुप्लुवे ॥ ९१
साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्त्वा सुरास्तत्र विसिस्मियुः ॥ ९२
कर्णं तु सर्वभूतानि पूजयामासुरञ्जसा ।
यदवप्लुत्य जग्राह देवसृष्टां महाशनिम् ॥ ९३
एवं कृत्वा रणे कर्ण आरुरोह रथं पुनः ।
ततो मुमोच नाराचान्सूतपुत्रः परंतपः ॥ ९४

---

°षेषु) T G2–4 भारत (for मारिष) —d) Ś2 मारिष, B8 Dc1 Dn1 D8 6 T G2–4 पार्थिव, D2 मानव, D4 5 7 8 भारत (for पार्थिव)

85 G1 M om 85 (cf v l 83) —c) D7 भीमवीर्याद् (for °वीर्य) D4 शिरारिव्यवरोपेताद् (sic) —d) Ś2 अपि (for इव)

86 G1 M om. 86 (cf v l 83) —c) B4 Dc1 महाराज (for यथा राजन्) —d) D2 सविष (for सार्चिष)

87 G1 M om 87 (cf v l 83) —c) D- तदा (for पुनर्) —d) Ś1 K8 पुर॰, Ś2 B8 तथा, B1 2 4 5 Dc1 Dn1 तदा, Dn2 तत (for पुन)

88 G1 M om 88 (cf. v l 83) —b) B2 खगै, D2 स्वनै, D1 8 परै (for खरै) —d) K4 D1 7 om (hapl) from मा वह up to सूतपुत्राय (in 90b) Ś1 K2 8 B Dc1 Dn1 D2–4 6 8 G3 4 मा वह, D5 मा नय (for मा वह)

89 K1 D1 7 G1 M om 89 (cf. v l 88, 83) D8 om 89a–90b

90 G1 M om. 90 (cf v l. 83) K4 D1 7 om. up to सूतपुत्राय (cf v l. 88) D8 om 90ab (cf v l 89) D4 reads 90ab twice. —a) D8 6 स (for स) D5 तत (for पुन) —Dn1 repeats 90cd after 1233* —c) D4 अष्टवक्रा, D5 °वक्त्रा, T G2–4 °घटा (for °चक्रा) Dn1 (second time) चिक्षेप सूतपुत्राय —d) Ś2 K4 B2 4 Dc1 Dn2 D5 7 8 T G2 अशनीं (K4 °नी) Dc1 देव॰, T G3. 4 तत्र (for रुद्र) — After 90, K2 (marg) B Dc1 Dn D5 6 ins

1233* द्वियोजनसमुत्सेधां योजनायामविस्तराम् ।
आयसीं निचितां शूलैः कदम्बमिव केसरैः ।

[(L 1) B5 त्रियोजन॰ (for द्वि°) —(L 2) K2 निशितां (for निचितां) D6 सूनैः (for शूलैः) K2 B केशरैः ]

— After the above, Dn1 repeats 90cd

91 G1 M om 91 (cf. v l 83) —a) T G3. 4 आप्लुत्य च (for अवप्लुत्य) G2 स तामाप्लुत्य जग्राह —b) B Dc1 Dn1 महद् (for रथे) —c) D4 चैनं (for चैनां) D2 चिक्षेप चासनात्तस्य —d) D2 5 7 8 [ऽ]थ पुप्लुवे (for ऽवपु°)

92 G1 M om 92 (cf v l 83) —b) D5 भस्मी (for भस्म) —c) B5 विवेष (for °श) —d) D7 8 शूरास् (for सुरास्) Ś1 K1–3 विसिस्मिरे, Ś2 D1 वि*स्मिरे, Dn2 D1 8 T2 (inf lin) विसिस्मयु, G3. 4 °स्मियु D5 सर्वभूतानि विस्मयु॰, G2 ततो देवा विसिस्मियु

93 G1 M om 93 (cf. v l 83) —a) Dc1 Dn1 कर्णस्य, Dn2 D2 4 5 7 8 कर्णं च (for कर्णं तु) —b) Dc1 Dn1 ओजसा (for अञ्जसा) —c) D6 (by corr) याम् (for यद्) D4 lacuna from प्लुत्य up to देव (in 93d) —d) Ś2 K1 2 B5 Dc1 Dn1 D1 G3 महाशनीं

94 G1 M om. 94 (cf v l. 83) —a) T G2–4 रथं (for रणे) D2 कर्मं (for कर्णं) —b) B5 (also as in text) Dc1 प्रति (for पुन॰) —c) Ś1 K2 नाराच,

अशक्यं कर्तुमन्येन सर्वभूतेषु मानद ।
यदकार्षीत्तदा कर्णः संग्रामे भीमदर्शने ॥ ९५
स हन्यमानो नाराचैर्धाराभिरिव पर्वतः ।
गन्धर्वनगराकारः पुनरन्तरधीयत ॥ ९६
एवं स वै महामायो मायया लाघवेन च ।
अस्त्राणि तानि दिव्यानि जघान रिपुसूदनः ॥ ९७
निहन्यमानेष्वस्त्रेषु मायया तेन रक्षसा ।
असंभ्रान्तस्ततः कर्णस्तद्रक्षः प्रत्ययुध्यत ॥ ९८
ततः क्रुद्धो महाराज भैमसेनिर्महाबलः ।
चकार बहुधात्मानं भीषयाणो नराधिपान् ॥ ९९
ततो दिग्भ्यः समापेतुः सिंहव्याघ्रतरक्षवः ।
अग्निजिह्वाश्च भुजगा विहगाश्चाप्ययोमुखाः ॥ १००
स कीर्यमाणो निशितैः कर्णचापच्युतैः शरैः ।
नगराद्रिवनप्रख्यस्तत्रैवान्तरधीयत ॥ १०१
राक्षसाश्च पिशाचाश्च यातुधानाः शलावृकाः ।
ते कर्णं भक्षयिष्यन्तः सर्वतः समुपाद्रवन् ।
अथैनं वाग्भिरुग्राभिस्त्रासयांचक्रिरे तदा ॥ १०२
उद्यतैर्बहुभिर्घोरैरायुधैः शोणितोक्षितैः ।
तेषामनेकैरेकैकं कर्णो विव्याध चाशुगैः ॥ १०३
प्रतिहत्य तु तां मायां दिव्येनास्त्रेण राक्षसीम् ।

C 7 8000
B 7 175 112
K 7 176 114

---

Dn2 D2 4 5 7 8 त्रिशिखा( D5 °पा )न् ( for नाराचान् ) — d ) B. प्रतापवान्, Dn1 D1 परतप ( for °प )

95 G1 M om. 95 ( cf v l 83 ) — a ) Ś K1 2 स्वशक्यं नृप तत्कर्तुं — d ) K4 D3–5 -दर्शन ( K4 °नं )

96 G1 M om. 96 ( cf v l 83 ) — b ) Ś1 K8 D5 तोयद , D6 पर्वत ( for °त ) — c ) Ś1 K3 नगराकारै

97 G1 M om 97 ( cf. v l 83 ) G3 reads 97–98 twice ( without var ) — a ) Ś1 K3 च स, Ś2 K1 2 D5 वै स ( by transp ) K1 4 B1 5 Dn2 D1. 2 4 5 7 8 महाकायो, T G2–4 °बाहो ( for °मायो ) — d ) D2 व्यधमद् ( for जघान ) Ś2 -सूदन T G2–4 जघानारिनिषूदन

98 For the repetition in G3, cf v l 97 G1 M om 98 ( cf v l 83 ) — a ) D2 विहन्यमानेषु — b ) Ś1 K2 3 Dn1 राक्षस ( for रक्षसा ) — c ) Ś2 K1 2 4 B Dc1 Dn1 D1 G3 4 तदा ( for तत ) Ś1 K3 कर्णं ( for कर्णस् ) — d ) Ś2 K1 2 4 D1 पर्यवारयत्, Dc1 Dn2 D3 6 प्रत्यपूज( Dn2 °योध )यत् ( for °युध्यत ) Ś1 ( orig ) K8 तद्रया ***वर्षं, Ś1 ( marg ) तद्रयाक्षापैद वारयत् ( sic )

99 G1 M om 99 ( cf. v l. 83 ) — d ) Ś K ( K5 missing ) Dc1 Dn D1 2 4. 5 7 8 T G2–4 भीषयानो, D3 6 °यन्वै ( for °याणो ) B Dc1 Dn D2 4 5 7 8 महारथान् ( for नराधिपान् )

100 G1 M om 100 ( cf v l 83 ) — a ) D3 6 दिशः ( for दिग्भ्य ), — c ) Dn2 ह्य ( for च ) D2 5 अग्निजिह्वायुगभुजा ( sic ) — d ) T [अ]योमुखा ( for [अ]यो° )

101 G1 M om. 101 ( cf. v l 83 ) B5 om 101 — a ) K1 स कीर्यमानो, Dn2 D2–4. 6 आ( D3 6 सं ) कीर्यमाणो K4 B ( B5 om ) Dc1 Dn D1–3. 6 T G2–4 विशिखै ( for निशितै ) — b ) B1 शितै , Dc1 Dn1 तदा ( for शरै° ) — c ) G4 -चय ( for -वन ) K3 -प्रख्यैस्, B4 प्राख्यस् ( for -प्रख्यस् ) B1 2 Dc1 Dn ना( Dc1 न )गराद्रि( Dc1 [ before corr ] द्रि )व द्रुमोक्ष्यस्, B8 D2 4 नागराद्रि( D4 नगरारि )वनप्रख्यस्, D5 नागराद्रिव सक्रुद्धस्, D7 8 नागराजसदृक्कांतिस्

102 G1 M om. 102 ( cf. v l 83 ) — b ) K4 D1. 2 7 शिलावृका ( D2 °ता ), B Dc1 Dn D3 5 6 तथैव च, D4 शिलावका , D8 शिलाशका , T G3 4 समावृता , G2 समन्तत ( for शलावृका ) — After 102ab, B Dc1 Dn D3 5 6 ins

1234* शालावृकाश्च बहवो वृकाश्च विकृताननाः ।

[ D6 हरयो ( for बहवो ). ]

— c ) Ś1 K3 4 ते कर्णं क्षपयिष्यंत — d ) G2 संवृता ( for सर्वत ) — f ) K1 2 4 D1 तर्जयांचक्रिरे तदा

103 G1 M om 103 ( cf v l 83 ) — b ) D2 4 5 7 8 सायुधै ( for आ ) D1 शोणितोच्छितै — c ) Ś1 अनीकैर् ( for अने° ) D2 4 5 7 8 तेषां म( D2 व )र्माणि चैकैक — d ) T G2 विव्याथ ( for °ध ) Ś1 K3 B Dc1 Dn1 सायकै , D7 वाशुगै ( for चा )

104 G1 M om 104 ( cf v l 83 ) Dn1 om ( hapl ) 104a–105b — a ) K3 Dn2 D3 5 प्रतिहन्य ( sic )

C 7 8001
B 7 173 112
K 7 176 114

आजघान हयानस्य शरैः संनतपर्वभिः ॥ १०४
ते भग्ना विकृताङ्गाश्च छिन्नपृष्ठाश्च सायकैः ।
वसुधामन्वपद्यन्त पश्यतस्तस्य रक्षसः ॥ १०५
स भग्नमायो हैडिम्बः कर्णं वैकर्तनं ततः ।
एष ते विदधे मृत्युमित्युक्त्वान्तरधीयत ॥ १०६

इति श्रीमहाभारते द्रोणपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

# १५१

संजय उवाच ।
तस्मिंस्तथा वर्तमाने कर्णराक्षसयोर्मृधे ।
अलायुधो राक्षसेन्द्रो वीर्यवानभ्यवर्तत ॥ १
महत्या सेनया युक्तः सुयोधनमुपागमत् ।
राक्षसानां विरूपाणां सहस्रैः परिवारितः ।
नानारूपधरैर्वीरैः पूर्ववैरमनुस्मरन् ॥ २
तस्य ज्ञातिर्हि विक्रान्तो ब्राह्मणादो बको हतः ।
किर्मीरश्च महातेजा हिडिम्बश्च सखा तथा ॥ ३
स दीर्घकालाध्युषितं पूर्ववैरमनुस्मरन् ।
विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे ॥ ४

---

(for °स्य) — $^{b}$) D5 राक्षस — $^{c}$) Ś2 D2 शरान् (for हयान्) Dn2 D2 4 5 7 8 घोरान् (for अस्य)

105 Dn1 om 105$^{ab}$ (cf v l 104) T G3 4 read 105$^{ab}$ twice — $^{a}$) Ś K (K5 missing) D1 8 भिन्ना, D4-6 मग्ना (for भग्ना) B3 4 विक्षतांगाश्च, B5 D7 8 विक्षि°, D6 निकृ°, G1 विपृतागाश्च, G3 (second time) विहृता°, G4 (second time) विघृता°, M1 2 विविधा° (for विकृताङ्गाश्च) — $^{b}$) K3 4 B Dc1 D1 T (both second time) G2 3 (both times) 4 (second time) M3-5 भिन्नपृष्ठाश्च, D2 क्षत°, D6 क्षिन्न° (sic), T (both first time) छिन्नवर्म्माश्च (for °पृष्ठाश्च) — $^{d}$) K2 D4 6 7 राक्षस, T G3 राक्षसा D5 नदंतो भैरवा श्रवान्

106 $^{a}$) D4 7 8 T M1 2 स (for स) K4 B5 Dn D1. 2. 6 (before corr as in text) हैडिंबि, D3 7 8 हैडवि; D4 5 हैडंब B3 भग्नमायो हि हैडिंब — $^{b}$) Ś1 B Dc1 Dn2 D3. 6 तदा (for तत) — $^{c}$) Ś K1-3 मन्युम् (for मृत्युम्)

Colophon K5 G5 missing — *Sub-parvan* Ś K1-3 B1 3 4 Dc1 Dn2 D1 4 5 7 8 G1 M1 2 घटोत्कचवध — *Adhy name* K4 B Dc1 Dn1 D1-3 6 G1 2 4 M1 2 रात्रियुद्ध, Bom ed रात्रियुद्धे कर्णघटोत्कचयुद्ध — *Adhy no* (figures, words or both) Dn1 175, D2 176, D3 70, T G2-4 170, G1 M1 2 169, M3-5 168 — *Śloka no.* Dn1 113.

## 151

☞ This adhy is missing in K5 G5 (cf v l 7 125 14, 137 9)

1 $^{a}$) D2 तदा (for तथा) — $^{b}$) M3-5 नर (for कर्ण) — $^{c}$) B5 अलंबुषो, D1 अलायुद्धो (for °युधो) — $^{d}$) B3 अभ्यपद्यत (for °वर्तत)

2 D6 om 2$^{bc}$ — $^{b}$) B Dc1 Dn1 दुर्योधनम् (for सुयो°) K3 D1 6 (marg) 7 उपाद्रवत्, D3. 6 (orig) °सदत् (for °गमत्) — $^{d}$) D5 राक्षसै (for सहस्रै) — $^{e}$) Dc1 घोरै, D3 6 वीर (sic) (for वीरै) — $^{f}$) D4 7 सर्व (for पूर्व) Ś1 K3 पूर्ववैराण्यनुस्मरन्

3 D3 om (hapl.) 3$^{a}$-4$^{b}$ — $^{a}$) D1. 7 8 भ्राता (for ज्ञातिर्) — $^{b}$) D7 8 ब्राह्मणार्थे (for °दो) — $^{c}$) Ś K1-3 किंदीरश्च, B5 किम्मारश्च, Dn1 किमीरश्च, D1 4 कर्मारश्च, D5 कर्मीरस्व, D7 कीर्मारिश्च, D8 किर्मीरिश्च; T G2 M3 किम्मीरश्च, G1 M1-3 कृम्मीरश्च, M4 कृर्मीरश्च (for किर्मी°) D6 तु (for च) T G1. 3 4 M महाराज, G2 °बाहुर् (for °तेजा) — $^{d}$) Dc1 D4 6-8 हैड (Dc1 D8 हिड)बश्च, Dn1 D2 5 हैडं (Dn1 हिड-, D2 हिडिं)बस्य (for हिडिम्बश्च) K3 तव, B (except B1) Dc1 Dn तदा (for तथा) G1 M हिडिंबश्च प्रिय सखा

4 D1 3 om 4$^{ab}$ (for D3, cf v l 3) — $^{a}$) K1 -कालाम्युषितं, D5 कालाध्युषित, D6 -कालमुषितं; M3

म मत्त इव मातङ्गः संक्रुद्ध इव चोरगः ।
दुर्योधनमिदं वाक्यमब्रवीद्युद्धलालसः ॥ ५
विदितं ते महाराज यथा भीमेन राक्षसाः ।
हिडिम्बबककिर्मीरा निहता मम बान्धवाः ॥ ६
परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा ।
किमन्यद्राक्षसानन्यानस्मांश्च परिभूय ह ॥ ७
तमहं सगणं राजन्सवाजिरथकुञ्जरम् ।
हैडिम्बं च सहामात्यं हन्तुमभ्यागतः स्वयम् ॥ ८
अद्य कुन्तीसुतान्सर्वान्वासुदेवपुरोगमान् ।
हत्वा संभक्षयिष्यामि सर्वैरनुचरैः सह ।
निवारय बलं सर्वं वयं योत्स्याम पाण्डवान् ॥ ९
तस्य तद्वचनं श्रुत्वा हृष्टो दुर्योधनस्तदा ।
प्रतिपूज्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः ॥ १०
त्वां पुरस्कृत्य सगणं वयं योत्स्यामहे परान् ।
न हि वैरान्तमनसः स्थास्यन्ति मम सैनिकाः ॥ ११
एवमस्त्विति राजानमुक्त्वा राक्षसपुंगवः ।
अभ्ययात्त्वरितो भीमं सहितः पुरुषादनैः ॥ १२
दीप्यमानेन वपुषा रथेनादित्यवर्चसा ।
तादृशेनैव राजेन्द्र यादृशेन घटोत्कचः ॥ १३
तस्याप्यतुलनिर्घोषो बहुतोरणचित्रितः ।

C 7 808
B 7 176 15
K 7 177 15

---

कालेरुषित (for क्रा°) —$^{b}$) B- Dc1 ज्ञाति (for पूर्वं) Dn om स्मरन — K1 om 4$^{cd}$ D2 om 4$^{c}$–5$^{b}$ —$^{c}$) B Dc1 Dn1 तन् (for [तु]नन) D5 विज्ञापयन्निनायुद्ध

5 D. om. 5$^{ab}$ (cf v 1 4) —$^{d}$) K1 लालसं, P1 मानस (for लालस)

6 $^{a}$) Dc1 Dn1 D-3 हिडंब, D1 हैडंब (for हिडिम्ब) Ś K2 किर्दीरा, K1 किटीरा, D1 4 7 कर्मीरा, T G2 किर्मीरा, G1 M1 2 कुन्मीरा, M2 3 कूर्मीरा (for किर्मीरा) D हिडंबश्च स किर्मिरो —$^{d}$) K1 निहता समरायत्ता (sic)

7 $^{a}$) Ś1 K1 Dc1 Dn D1 परामर्शश्च —$^{b}$) Dc1 Dn2 D- 1-3 हिडंबाया Ś1 T G1-4 M1 2 transp कृत and पुरा M3-5 कृत पार्थेन वै पुरा —$^{c}$) D1 om द्राक्षसान —$^{d}$) B1 Dc1 Dn1 D1 8 हि, D2 3 5 6 स (for ह) D5 अस्मांश्च परिभूयसि

8 $^{a}$) K1 D1 त्वामहं, Dc1 Dn1 तमद्य, D8 तदह (for तमह) D1 4 शरण (for सगण) —$^{b}$) G1 M1-4 (inf lin as in text) नर (for रथ) K2 D1-3 कुञ्जरान —$^{c}$) Ś1 K1 G1 हैडिंबिं, Dc1 Dn2 हैडंब, Dn1 D2 5 7 8 हैडिंबिं (for हैडिम्ब) D8 स (for च) D1 महामात्य (for महा°) D1 हैडंब सुमहामात्यं —$^{d}$) G1 M1 2 [स]र्वेणा (for स्वयम्) T G2-4 M3-5 हन्तुमभ्यागता (M2 °त) वय

9 $^{a}$) Dn2 D1 अथ (for अद्य) —$^{c}$) T G1 2 4 M [स]र्व, G2 त (for स) D2 हत्वा तु समविष्यामि —$^{d}$) M3-5 सर्वान (for सर्वैर्) —$^{e}$) S (G missing) निवार्य च (for °रय) —$^{f}$) D5 7 8 यास्याम (for योत्स्याम) D3 6 सह योत्स्यामि पाण्डवान — After 9, G1 M1 2 ins

1235* तदह सगणाग्राजन्सयोत्स्यामि च पाण्डवान् ।

10 Before 10, M3-5 ins सजय —$^{a}$) Bom ed [तु]तद् (for तद्) —$^{b}$) K1 तथा, T G2-4 [स]र्वान्, G1 M नृपा (for तदा) —$^{c}$) B Dc1 Dn प्रतिगृह्य (for °पूज्य) —$^{d}$) S (G missing) भ्रातृभि सह भारत

11 Dn1 om 11 Before 11, M3-5 ins दुर्योधन —$^{a}$) M2 त्वा (for त्वा) D1 शरण, G1 M5 सगणा (for °ण) — G2 om 11$^{cd}$ —$^{c}$) D2 6 वैरार्त (D6 र्ति) (for वैरान्त) K1 मनसा (for मनस) T न न स्थास्यति पार्थास्तु, G1 M1 2 न च स्थास्यति पाहुना, G3 4 निहतवैरार्तमनस, M3-5 एते सर्वे सुमनस —$^{d}$) G2 M3-5 तव (for मम) T पुरत सहसैनिका, G1 M1 2 प्रमुखे तव सैनिका

12 $^{b}$) G2 गत्वा (for उक्त्वा) —$^{c}$) Ś1 K3 D2 त्वरया (for त्वरितो) K4 B Dn2 भीमिं, M3-5 वीरैर् (for भीमं) —$^{d}$) Ś1 Dn1 सहित पुरुषादनै, K1 Dn2 D2 4 6 7 8 °त पुरुषादकै (K1 °शतै), T G1-4 M1 2 सहित खचरैरमी, M3-5 आयद्वकचचैरमी

13 $^{a}$) S (G5 missing) महता (for वपुषा) — After 13, Dn1 reads 16$^{ab}$

14 K1 om. 14 —$^{b}$) B1 om चित्रित — With 14$^{cd}$, cf 7 149 11$^{cd}$ —$^{c}$) Dn2 अक्ष (for ऋक्ष) —$^{d}$) Ś1 K3 महान् (for महा).

C 7 6901
B 7 176 15
K 7 177 15

ऋक्षचर्मावनद्धाङ्गो नल्वमात्रो महारथः ॥ १४
तस्यापि तुरगाः शीघ्रा हस्तिकायाः खरस्वनाः ।
शतं युक्ता महाकाया मांसशोणितभोजनाः ॥ १५
तस्यापि रथनिर्घोषो महामेघरवोपमः ।
तस्यापि सुमहच्चापं दृढज्यं बलवत्तरम् ॥ १६
तस्याप्यक्षसमा बाणा रुक्मपुङ्खाः शिलाशिताः ।
सोऽपि वीरो महाबाहुर्यथैव स घटोत्कचः ॥ १७
तस्यापि गोमायुबडाभिगुप्तो
बभूव केतुर्ज्वलनार्कतुल्यः ।
स चापि रूपेण घटोत्कचस्य
श्रीमत्तमो व्याकुलदीपितास्यः ॥ १८
दीप्ताङ्गदो दीप्तकिरीटमाली
बद्धस्रगुष्णीपनिबद्धखड्गः ।
गदी भुशुण्डी मुसली हली च
शरासनी वारणतुल्यवर्ष्मा ॥ १९
रथेन तेनानलवर्चसा च
विद्रावयन्पाण्डववाहिनीं ताम् ।
रराज संख्ये परिवर्तमानो
विद्युन्माली मेघ इवान्तरिक्षे ॥ २०
ते चापि सर्वे प्रवरा नरेन्द्रा
महाबला वर्मिणश्चर्मिणश्च ।
हर्षान्विता युयुधुस्तत्र राज-
न्समन्ततः पाण्डवयोधवीराः ॥ २१

इति श्रीमहाभारते द्रोणपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

---

15 [a]) Dn$_2$ दीर्घा, D$_{4\ 5\ 8}$ शीघ्रं (for शीघ्रा) — [b]) Dn$_2$ D$_{5\ 7\ 8}$ स्वरस्वरा, D$_4$ तु भास्वरा (for खरस्वना) — [c]) Ś$_1$ रथ, Ś$_2$ K$_{1\ 2}$ रथे, D$_1$ रथैर्, D$_6$ रथ (for शत) — [d]) K$_1$ भोजिन (for -भोजना)

16 D$_1$ om 16–17 Dn$_1$ reads 16$^{ab}$ after 13 — [a]) G$_1$ M [स्य]थ (for [स्य]पि) Dn$_1$ [स्य]तुल (for रथ) — [c]) M$_{1\ 2}$ तु (for सु) — [d]) D$_5$ सुदृढ (for दृढज्य) B Dc$_1$ Dn D$_2$ दृढज्य कनकोज्ज्वल, D$_4$ दृढ यधलवत्तर (sic), S (except G$_1$ M$_{1\ 2}$, G$_5$ missing) दृढज्य बलवद्दृढ

17 D$_1$ om 17 (cf v l 16) — [b]) D$_8$ रुक्मपुखै (for °पुङ्खा°) B$_6$ शिलाशितै, Dn$_2$ D$_{4\ 8}$ °सिता (for °शिता). — [d]) Ś$_1$ D$_{2\ 4\ 5\ 7\ 8}$ G$_1$ M$_{1\ 2}$ च (for स)

18 D$_4$ om 18 — [a]) Ś$_1$ वटाभिगुप्तो; K$_{3,4}$ B Dc$_1$ Dn$_2$ D$_{3,6}$ T G$_{3\ 4}$ बलाभिगुप्तो (D$_{3\ 6}$ °युक्तो), Dn$_1$ यडाभिभूतो, D$_{2\ 5}$ बलाभिभूतो; G$_{1\ 2}$ M बळाभिगुप्तो (for यडा°) — [b]) Ś$_2$ -रूप; D$_5$ वर्ण (for तुल्य) — [c]) Ś$_1$ वीरेण (for रूपेण) G$_4$ om घटोत्कचस्य — [d]) Dc$_1$ D$_{3\ 6}$ श्रीमत्तरो, Dn$_1$ श्रीमन्नरो, D$_{7\ 8}$ तुल्य स्तमो, M$_{3-5}$ श्रीमान्घर्मौ (for श्रीमत्तमो) Dc$_1$ Dn$_1$ व्यापित (for व्याकुल) D$_6$ दीपिकास्य (for °तास्य) T G$_{1-4}$ M$_{1\ 2}$ श्रीमत्तमो हाटकसंनिकाशः.

19 [a]) The portion from दीप्ताङ्गदो up to संख्ये in 7 152 39$^c$ is lost in Ś$_1$ on missing folios B (except B$_2$) Dc$_1$ Dn D$_2$ दीप्तागदी (for °गदो) — [b]) D$_{4\ 5\ 7\ 8}$ बहुस्रगुष्णीषपिनद्धखड्ग (D$_5$ °गात्र) — [c]) Dn D$_{4\ 5}$ गदा (for गदी) K$_{2\ 3}$ D$_1$ भुसुंडी, Dc$_1$ भुपुंडी, D$_{3\ 6}$ भुशांडी, D$_4$ भुखडी, D$_5$ भुशाढी, D$_{7\ 8}$ भुखंडी, T G$_{3\ 4}$ भुसु(G$_4$ स)ठी, G$_1$ M भुसंठी (M$_5$ °ढी), G$_2$ भुसिंढी (for भुशुण्डी) Ś$_1$ K$_2$ मुसुली, K$_1$ D मुशली, B$_{2\ 3\ 5}$ मुपली (for मुसली) Ś$_1$ K$_{1-3}$ D$_1$ शरी (for हली) — [d]) K$_4$ D$_{3\ 5}$ T M$_{3-5}$ तुल्य घर्मा, D$_4$ °वर्मा (for °वर्ष्मा)

20 Ś$_2$ missing (cf v l 19). — [a]) Ś$_1$ K$_{1\ 2}$ D$_6$ तेनाचल, Dn$_2$ D$_2$ तेनानिल; D$_4$ तेमाविमल (for तेना नल). K$_4$ Dn$_2$ D$_{3,4}$ G$_1$ M$_{3\ 4}$ वर्चसा तदा; B$_{1,3\ 5}$ Dc$_1$ Dn$_1$ -वर्चसेन, B$_3$ D$_{3\ 6}$ तुल्यवर्चसा (for वर्चसा च). D$_{6\ 7,8}$ रथेन तेनातिबलेन वर्चसा — [b]) D$_1$ व्य द्रावयन् (for विद्रा°) T G$_{3\ 4}$ -योधवीरान् (for वाहिनीं ताम्) B$_4$ स, D$_{4\ 5\ 7\ 8}$ तदा (for ताम्) — [c]) G$_{1\ 2}$ M सखे (for संख्ये) D$_6$ परिवर्तमाने — [d]) B$_{1-3\ 5}$ Dc$_1$ Dn$_1$ विद्युद्युतो, B$_4$ °घ्नलो (for °न्माली) B (except B$_4$) D$_5$ इवातरीक्षे

21 Ś$_2$ missing (cf v l 19) — [a]) D$_5$ प्रबला (for प्रवरा) S (G$_5$ missing) ते चास्य सर्वे सचरा नरेन्द्र

# १५२

संजय उवाच ।

तमागतमभिप्रेक्ष्य भीमकर्माणमाहवे ।
हर्षमाहारयाचक्रुः कुरवः सर्व एव ते ॥ १
तथैव तव पुत्रास्ते दुर्योधनपुरोगमाः ।
अप्लवाः प्लवमासाद्य तर्तुकामा इवार्णवम् ॥ २
पुनर्जातमिवात्मानं मन्वानाः पार्थिवास्तदा ।
अलायुधं राक्षसेन्द्रं स्वागतेनाभ्यपूजयन् ॥ ३
तस्मिंस्त्वमानुषे युद्धे वर्तमाने भयावहे ।
कर्णराक्षसयोर्नक्तं दारुणप्रतिदर्शने ॥ ४
उपप्रैक्षन्त पाञ्चालाः स्मयमानाः सराजकाः ।
तथैव तावका राजन्घूर्णमानास्ततस्ततः ॥ ५
चुक्रुशुर्नेदमस्तीति द्रोणद्रौणिकृपादयः ।
तत्कर्म दृष्ट्वा संभ्रान्ता हैडिम्बस्य रणाजिरे ॥ ६
सर्वमाविग्नमभवद्धाहाभूतमचेतनम् ।

C 7 8032
B 7 177 7
K 7 178 8

---

( G1 M3 °द्रा ) — $^{b}$ ) Ś1 K1. 2 D1 वर्म्मिणश्च ( for वर्मिणश्च ) Dn1 चार्मि**, D4 5 7 8 चापहस्ता ( for चर्मिणश्च ) — $^{c}$ ) K1 2 D1 हयान्विता, D4 हर्षायुधा, M2 हर्षान्वित ( for न्विता ) K3 4 B2. 3 5 युयुधुस्तस्य, T G1-4 M1 2 मयुयुधुस्तु ( G1 M1 2 °धु स्त ) ( for युयुधुस्तत्र ) D. M3-5 तत्र, D3 वीरान्, T योधा, G3 4 योधा ( for राजन् ) — $^{d}$ ) B1 समस्या ( for समन्तत ) D3 6 पार्थिव ( for पाण्डव ) B Dc1 Dn1 T G2-4 योधवीरान्, D5 °वीर°, M3-5 वीरयौधान ( for -योध वीरा ) G1 M1 2 समागता पाढवयौधवीरान्

Colophon Ś2 K5 G5 missing — *Sub-parvan* K1 2 B1 3 Dn D4 5 7 8 G1 M1 2 घटोत्कचवध, D6 घटोत्कचयुद्ध — *Adhy name* K1 4 B Dc1 D1-3 7 8 T G1-4 रात्रियुद्ध, D6 अलायुधागमन, Bom. ed रात्रियुद्धे अलायुधयुद्धं — *Adhy no* ( figures, words or both ) Dn1 176, D2 177, T G2-4 171, G1 M1 2 170, M3-5 169 — *Śloka no* Dc1 Dn1 22

## 152

☞ This adhy is missing in K5 G5 ( cf. v l 7 125 14, 137 9 )

1 Ś2 missing up to मत्स्ये in 39$^{c}$ ( cf v l 7 151 19 ) — $^{c}$ ) Ś1 K3 हर्षमाहारयामासु — $^{d}$ ) D5 M3-5 हि, G1 M1 2 ह ( for ते ) Ś1 K3 कुरव सर्वतो रणे

2 Ś2 missing ( cf v l 1 ) — $^{a}$ ) D4 5 यथैव ( for त° ) D3 S ( G5 missing ) च ( for ते ) — After 2$^{ab}$, D3 reads 3$^{cd}$ — $^{c}$ ) Dn2 om ( hapl ) वा प्लु — $^{d}$ ) D1 यथार्णवं ( for इवा° )

3 Ś2 missing ( cf v l 1 ) — $^{a}$ ) D4 7 8 जाता ( for जातम् ) — $^{b}$ ) B Dc1 Dn1 मन्वाना पुरुषर्षभा — D3 reads 3$^{cd}$ after 2$^{ab}$

4 Ś2 missing ( cf. v l 1 ) — $^{a}$ ) B1 2 D8 मानुषे ( for [त्व]मा ) — $^{b}$ ) Ś1 K2-4 B2 D1 2 6 G3 महाभये, G2 4 महाहवे ( for भयावहे ) — $^{c}$ ) K1 D8 6 युद्ध ( for नक्त ) — $^{d}$ ) K1 2 D1 M3 5 दारुणे, Dn1 D2 5 6 दारुण ( for °ण ) Dn2 D3 6 दर्शन ( for दर्शने ) — After 4, S ( G5 missing ) ins

1236* न द्रौणिर्न कृपो द्रोणो न शल्यो न च माधव ।
एक एव तु तेनासीद्योद्धा कर्णो रणे नृपा ।

[ ( L 1 ) G3 4 शलो ( for शल्यो ) ]

5 Ś2 missing ( cf v l 1 ) — $^{a}$ ) K2 3 D5-7 G1 M1. 2 4 उपप्रेक्षत, D4 प्रेक्ष्य तु ( for °प्रैक्षन्त ) Bom ed पचाला ( for पाञ्चाला ) — $^{b}$ ) K3 स राजका, D5 सराक्षसा ( for सराजका ) — B2 reads 5$^{cd}$ on marg — $^{c}$ ) S ( G5 missing ) व्यभ्रमस्तावकाश्चापि — $^{d}$ ) K1 2 घू ( K2 घू )र्णमाणास्, K3 D5 पूर्णमानास्, B Dc1 Dn1 D3 वीक्ष( Dc1 °क्ष्य )माणास्, Dn2 D2 4 5 7 8 यतमानास् ( for घूर्ण° )

6 Ś2 missing ( cf v l 1 ) — $^{b}$ ) D6 द्रोणिर् ( for द्रोण ) — Ś1 K1-3 repeat 6$^{c}$ after 6$^{d}$ — $^{c}$ ) Ś1 K3 ( both first time ) transp तत्कर्म and दृष्ट्वा Ś1 K1-3 ( all second time ) B1-3 Dc1 सभ्रांत ( for °ता ) — D1 om 6$^{d}$-7$^{a}$ — $^{d}$ ) Dc1 Dn2 D2 4 5 7 8 हैडबस्य Ś1 K3 महारणे ( for रणाजिरे )

7 Ś2 missing ( cf. v l 1 ) Ś1 K1-3 D1 om 7$^{a}$ ( for D1, cf v l 6 ) — $^{a}$ ) D4 आविश्यम् ( for आविग्नम् ) — $^{b}$ ) Ś1 K1-3 D1 महाभूतम् ( for हाहाभूतम् ) — $^{c}$ ) S ( except G1 M4, G5 missing ) तत° ( for तव )

C 7 6032
B 7 177 7
K 7 178 8

तव सैन्यं महाराज निराशं कर्णजीविते ॥ ७
दुर्योधनस्तु संप्रेक्ष्य कर्णमार्तिं परां गतम् ।
अलायुधं राक्षसेन्द्रमाहूयेदमथाब्रवीत् ॥ ८
एष वैकर्तनः कर्णो हैडिम्बेन समागतः ।
कुरुते कर्म सुमहद्यदस्यौपयिकं मृधे ॥ ९
पश्यैतान्पार्थिवाञ्शूरान्निहतान्भैमसेनिना ।
नानाशस्त्रैरभिहतान्पादपानिव दन्तिना ॥ १०
तवैष भागः समरे राजमध्ये मया कृतः ।
तवैवानुमते वीर तं विक्रम्य निबर्हय ॥ ११
पुरा वैकर्तनं कर्णमेष पापो घटोत्कचः ।
मायाबलमुपाश्रित्य कर्शयत्यरिकर्शनः ॥ १२
एवमुक्तः स राज्ञा तु राक्षसस्तीव्रविक्रमः ।
तथेत्युक्त्वा महाबाहुर्घटोत्कचमुपाद्रवत् ॥ १३
ततः कर्णं समुत्सृज्य भैमसेनिरपि प्रभो ।
प्रत्यमित्रमुपायान्तं मर्दयामास मार्गणैः ॥ १४
तयोः समभवद्युद्धं क्रुद्धयो राक्षसेन्द्रयोः ।
मत्तयोर्वाशिताहेतोर्द्विपयोरिव कानने ॥ १५
रक्षसा विप्रमुक्तस्तु कर्णोऽपि रथिनां वरः ।
अभ्यद्रवद्भीमसेनं रथेनादित्यवर्चसा ॥ १६
तमायान्तमनादृत्य दृष्ट्वा ग्रस्तं घटोत्कचम् ।
अलायुधेन समरे सिंहेनेव गवां पतिम् ॥ १७
रथेनादित्यवपुषा भीमः प्रहरतां वरः ।

---

8 Ś2 missing (cf v 1 1) — a) D8 च (for तु) — b) K1 परागार्तिं (for परा गतम्) — c) B6 अलावुधं (for अलायुधं) — d) K3 समाहूयेदम् (for आहूयेदम्) B Dc1 Dn1 D2 5 स (D2 om स) माहूयेदमब्रवीत्

9 Ś2 missing (cf. v 1 1) Before 9, M3-5 ins दुर्योधन — b) Dc1 Dn1 D2 4 5 7 8 हैडंबेन Ś1 K3 D1 सम गत (for समागत) — c) D1 सुकरं (for सुमहद्) S (G5 missing) कुरुते सुमहत्कर्म — d) K1 2 D1 2 4 5 7 अस्योपयिक, M1 2 असौ° (for अस्यौ°)

10 Ś2 missing (cf v 1 1) — ab) K1-3 D1 तस्य (for पश्य) K1 2 transp पार्थिवान् and निहतान् — c) D5 विनिहतान् (for अभि°) — d) Dc1 पांडवान् (for पादपान्)

11 Ś2 missing (cf. v 1 1) — a) B1 तत्रैष, D4 5 तथैव (for तवैष) S (G5 missing) भार (for भाग) — b) S (G5 missing) ज्ञाति (for राज) — c) K2 T G2-4 तथा, M1 2 तस्य (for तव) D5 वीर D4 7 8 तत्रैवानुमत वीरं — d) K1 2 D1 त्व (for त) K3 B3 Dc1 Dn1 G2 निवर्तय, B5 निसूदय (for निबर्हय) D4 विक्रम्य निबर्हय*, D8 विक्रम्य बर्हयत्पुरा

12 Ś2 missing (cf v 1 1) — ab) D4 transp कर्णं and एष Dn1 पार्थो, D8 6 एव (for पापो) D3 वैकर्तनं कर्णमेष पापो घोरो घटोत्कच — c) B Dc1 Dn1 D2 3 6 G4 समाश्रित्य (for उपा°) M3-5 मायया बलमाश्रित्य — d) Ś1 K (K5 missing) B D1 3 6 कर्षयति (for कर्श°) Ś1 K1 2 कर्षण, B1 3 5 D1 6 -कर्षण, K4 D3 -कर्शण, B2 कर्षन B4 Dc1 कर्शन, Dn1 कर्शन (for -कर्शन) Dn2 D4 5 7 8 मा हन्याच्छत्रुतापन (Dn2 °कर्शन, D2 °कर्षण D4 °पातन, D5 °तापन)

13 Ś2 missing (cf v 1 1) — b) B2 4 D2 भीम (for तीव्र) Ś1 K (K5 missing) D1 राक्षस कृ निश्चय — c) D7 महाबाहु (for °बाहुर्)

14 Ś2 missing (cf. v 1 1) — b) D4 om रपि D7 om प्रभो — d) K1 2 मदयामास, Dc1 D6 G M1 2 अर्द, D4 अर्ह° (for मर्द°)

15 Ś2 missing (cf. v 1 1) — a) Dn2 D2 5 7 8 तत (for तयो) — b) D6 क्रूरयो (for क्रुद्धयो) D8 क्रुद्धयो रक्षसोस्तदा — c) K3 4 B Dc1 Dn D1-5-8 T G2 वासिताहेतोर्, D4 वास्तुता° (for वाशिता°)

16 Ś2 missing (cf v 1 1) — a) K3 D4 राक्षसा Dn2 D5 7 8 राक्षसाद् (for रक्षसा) Ś1 K1 2 B1 D1 विप्रयुक्तस्तु — b) D5 कुर्वाणो (for कर्णोऽपि) S (G5 missing) बलिना (for रथिना) — D6 om (hapl) 16c-18b — d) G2 कर्णोपि रथिना वर (= 16b)

17 Ś2 missing (cf v 1 1) D5 om 17 (cf. v 16) — b) S (G5 missing) ग्रस्तं दृष्ट्वा (by transp) — c) G3 हलायुधेन — d) K2 सिंहेनैव

किरञ्शरौघान्प्रययावलायुधरथं प्रति ॥ १८
तमायान्तमभिप्रेक्ष्य स तदालायुधः प्रभो ।
घटोत्कचं समुत्सृज्य भीमसेनं समाह्वयत् ॥ १९
तं भीमः सहसाभ्येत्य राक्षसान्तकरः प्रभो ।
सगणं राक्षसेन्द्रं तं शरवर्षैरवाकिरत् ॥ २०
तथैवालायुधो राजञ्शिलाधौतैरजिह्मगैः ।
अभ्यवर्षत कौन्तेयं पुनः पुनररिंदमः ॥ २१
तथा ते राक्षसाः सर्वे भीमसेनमुपाद्रवन् ।
नानाप्रहरणा भीमास्त्वत्सुतानां जयैषिणः ॥ २२
स ताड्यमानो बलिभिर्भीमसेनो महाबलः ।
पञ्चभिः पञ्चभिः सर्वांस्तानविध्यच्छितैः शरैः ॥ २३
ते वध्यमाना भीमेन राक्षसाः खरयोनयः ।
विनेदुस्तुमुलान्नादान्दुद्रुवुश्च दिशो दश ॥ २४
तांस्त्रास्यमानान्भीमेन दृष्ट्वा रक्षो महाबलम् ।
अभिदुद्राव वेगेन शरैश्चैनमवाकिरत् ॥ २५
तं भीमसेनः समरे तीक्ष्णाग्रैरक्षिणोच्छरैः ।
अलायुधस्तु तानस्तान्भीमेन विशिखान्रणे ।
चिच्छेद कांश्चित्समरे त्वरया कांश्चिदग्रहीत् ॥ २६
स तं दृष्ट्वा राक्षसेन्द्रं भीमो भीमपराक्रमः ।
गदां चिक्षेप वेगेन वज्रपातोपमां तदा ॥ २७

C 7 8053
B 7 177 28
K 7 178. 29

---

18 Ś2 missing (cf v l 1) D5 om. 18[ab] (cf v l 16) D1 om 18 — [a]) D1 शोभितस्तेन वपुषा — [b]) D3 6 भीमसेन (D6 °नि°) प्रतापवान्

19 Ś2 missing (cf v l 1) — [a]) Dc1 आयातम् B4 भीमसेनमभिप्रेक्ष्य, D3 6 तमभिप्रेक्ष्यमायात — [b]) D1 om. प्रभो D. अलायुधमरिंदम — [c]) D4 5 7 8 परित्यज्य (for समुत्सृज्य) — [d]) K3 तदाह्वयत्, Dn2 D2 4 7 8 ततोभ्ययात्, D5 समभ्ययात्, D6 समर्दयत् (for समाह्वयत्)

20 Ś2 missing (cf v l 1) — [b]) D5 प्रभु (for प्रभो) — [c]) B1 2 Dc1 Dn1 स, D3 6 च (for त)

21 Ś2 missing (cf v l 1) T G3 om (hapl) 21[a]-29[b] — [a]) B5 [अ]लासुतो (for °युधो) — [b]) Dn2 छित्वा धौतैर् (for शिलाधौतैर्) — [c]) D3 अभ्यवर्तत, G2 अभ्यवर्षस्त (for °वर्षत) — [d]) Dn1 D2 4 7 अरिं दम, Dn2 D5 8 G2 4 अरिंदम (for दम)

22 Ś2 missing (cf v l 1) T G3 om 22 (cf. v l 21) — [c]) Ś1 K3 धाराप्रहरिणो, K1 2 D1 धारा प्रहरणा, M (except M1) नानाप्रहरणैर् (for °प्रहरणा) K3 om. भीमा — [d]) B1 जयैषिणा Ś1 K3 त्वत्पुत्राणां जयैषिणा

23 Ś2 missing (cf. v l 1) T G3 om 23 (cf v l 21) — [a]) K3 B Dc1 Dn D2 G2 4 बहुभिर् (for बलिभिर्) G1 M1 2 स पीड्यमानो बहुभिर् — K2 reads 23[cd] on marg — [c]) D4 5 पांडव (for the first पञ्चभि) — [d]) D5 अविध्यत (for तानविध्यत्) D7 8 transp शितै and शरै G4 ताडय भिदितै शरै

24 Ś2 missing (cf. v l 1) T G3 om 24 (cf v l 21) — [a]) Ś1 K3 ताड्यमाना, Dn2 युध्य (for वध्य) K2 अभिदुद्राव वेगेन — [b]) D3 -योद्धय (for -योनय) Dn2 D2 4-8 राक्षसा क्रूरबुद्धय (D7 8 यो धिन), G1 2 4 M सा खचरा रणे — [c]) Dc1 Dn1 तुमलान्, Dn2 D4 6 7 8 च महा, G1 M चातुलान् (for तुमु°) Ś1 K2 3 D1 विनेदुस्तुमुला राजन्, K1 स्तु तुमला राजन् (hypermetric) — [d]) Bom. ed ते (for च) D7 om दश

25 Ś2 missing (cf v l 1) T G3 om 25 (cf v l 21) M3-5 om. 25[a]-26[b] — [a]) D4 6 7 8 त्रस्य मानान्, G4 ताड्य (for त्रास्य) — [b]) Some MSS महाबल — [d]) G1 M1 2 अवारयत् (for किरत्)

26 Ś2 missing (cf v l 1) T G3 om 26 (cf v l 21) M3-5 om 26[ab] (cf v l 25) G4 om. (hapl) 26[a]-29[b] — [b]) D2 4 5 7 8 आ (D2 चा)-चिनोत् (for अक्षिणोत्) — [c]) G2 [ऽ]पि (for तु) K1 D5 तानस्तान्, D4 तान्सर्वान्, D7 8 तास्तान्स (for तानस्तान्) — [d]) M3-5 निशितान् (for विशिखान्) — D4 5 om 26[ef] — [e]) D7 8 मुक्तांश्चिच्छेद समरे — [f]) G1 2 M उरसा (for त्वरया) D2 7 8 अग्रसीत् (for हीत्)

27 Ś2 missing (cf v l 1) T G3 4 om 27 (cf. v l 21, 26) — [b]) B2 4 पराक्रम (for °क्रम°) — [d]) G1 M वज्रपातसमां (M3-5 °म) तदा

28 Ś2 missing (cf v l 1) T G3 4 om 28 (cf v l 21, 26) — [a]) G1 2 M समेक्ष्य (for वेगेन) — [b]) K2 B1 3 Dc1 Dn1 G1 2 M तदा

C 7 6053
B 7 178 28
K 7 179 30

तामापतन्तीं वेगेन गदां ज्वालाकुलां ततः ।
गदया ताडयामास सा गदा भीममाव्रजत् ॥ २८
स राक्षसेन्द्रं कौन्तेयः शरवर्षैरवाकिरत् ।
तानप्यस्याकरोन्मोघान्राक्षसो निशितैः शरैः ॥ २९
ते चापि राक्षसाः सर्वे सैनिका भीमरूपिणः ।
शासनाद्राक्षसेन्द्रस्य निजघ्नू रथकुञ्जरान् ॥ ३०
पाञ्चालाः सृञ्जयाश्चैव वाजिनः परमद्विपाः ।
न शान्तिं लेभिरे तत्र राक्षसैर्भृशपीडिताः ॥ ३१
तं तु दृष्ट्वा महाघोरं वर्तमानं महाहवे ।
अब्रवीत्पुरुषश्रेष्ठो धनंजयमिदं वचः ॥ ३२
पश्य भीमं महाबाहो राक्षसेन्द्रवशं गतम् ।
पदवीमस्य गच्छ त्वं मा विचारय पाण्डव ॥ ३३
धृष्टद्युम्नः शिखण्डी च युधामन्यूत्तमौजसौ ।
सहिता द्रौपदेयाश्च कर्णं यान्तु महारथाः ॥ ३४
नकुलः सहदेवश्च युयुधानश्च वीर्यवान् ।
इतरान्राक्षसान्घ्नन्तु शासनात्तव पाण्डव ॥ ३५
त्वमपीमां महाबाहो चमूं द्रोणपुरस्कृताम् ।
वारयस्व नरव्याघ्र महद्धि भयमागतम् ॥ ३६
एवमुक्ते तु कृष्णेन यथोद्दिष्टा महारथाः ।
जग्मुर्वैकर्तनं कर्णं राक्षसांश्चेतरान्रणे ॥ ३७
अथ पूर्णायतोत्सृष्टैः शरैराशीविषोपमैः ।
धनुश्चिच्छेद भीमस्य राक्षसेन्द्रः प्रतापवान् ॥ ३८
हयांश्चास्य शितैर्बाणैः सारथिं च महाबलः ।
जघान मिषतः संख्ये भीमसेनस्य भारत ॥ ३९

---

(for तत) —$^{c}$) Dn2 om ताडया —$^{d}$) G2 भूमिम् (for भीमम्)

29 Ś2 missing (cf v 1 1) T G3 4 om 29$^{ab}$ (cf v 1 21, 26) B4 om 29$^{ab}$ —$^{a}$) K1 lacuna, G1 M1 2 त (for स) —$^{c}$) D8 6 क्षय (for अस्य) —$^{d}$) Ś1 K1-3 D1 विविधै, D8 विशिखै (for निशितै) D8 शितै (for शरै)

30 Ś2 missing (cf v 1. 1) —$^{b}$) B Dc1 Dn1 D2 रजन्या (for सैनिका) D5 भीमरूपा प्रहारिण —$^{c}$) D1 5 समताद् (for शासनाद्) —$^{d}$) D3 निजघ्नुरि तरेतर

31 Ś2 missing (cf v 1 1) —$^{b}$) T G2-4 स वाजिरथकुञ्जरा —$^{c}$) B5 शक्ति (for शान्ति)

32 Ś2 missing (cf v 1 1) —$^{ab}$) Ś1 K (K4 missing) D1 ततो (for त तु) Dn2 transp तु and दृष्ट्वा M4 transp महाघोरं and वर्तमान Ś1 नृत्यमान, K1 2 D1 रक्तपानं (for वर्तमान) B (except B1) Dc1 Dn D3 6 S (except G2, G6 missing) महाहवं (for °हवे) —$^{c}$) K1 व्याघ्रो (for श्रेष्ठो) K4 B Dc1 Dn1 S (G6 missing) अब्रवीत्पुंडरीकाक्षो

33 Ś2 missing (cf v 1 1) —$^{a}$) K4 B (except B1) Dc1 Dn बाहु (for -बाहो) Ś1 K3 पश्य भीमो महाबाहू —$^{b}$) Ś1 K3 गत (for गतम्) —$^{c}$) B1-3 Dc1 Dn पदमस्यानुगच्छ त्व

34 Ś2 missing (cf v 1 1) —$^{b}$) D. युयुधानोत्तमौजसौ —$^{c}$) K3, 4 B Dc1 Dn D2 3 T G1 4 सहितौ (for °ता) K1 द्रौपदीयश्च; D4 5 8 देयैश्च (for °देयाश्च) —$^{d}$) D6 पातु (for यान्तु) D1 om महारथा

35 Ś2 missing (cf v 1 1) —$^{c}$) D2 हत्वा, D4 5 7 8 T G2-4 हतु (for घ्नन्तु) —$^{d}$) D4 om from पाण्डव up to भयमा (in 36$^{d}$) T G1 2 M पार्थिवा (G1 M3-5 °च), G3, 4 पाण्डवा

36 Ś2 missing (cf v 1 1) D4 om up to भयमा (cf v 1 35) —$^{b}$) K1 B5 परिस्कृ(B. °ष्कृ)ता (for पुर°) —$^{c}$) S (G6 missing) धारयस्व (for वार°) Dn2 D5 8 महाबाहो (for नरव्याघ्र) —$^{d}$) D6 महद्भयमिहागत

37 Ś2 missing (cf v 1 1) —$^{a}$) D2 6 उक्तेन (for उक्ते तु) —$^{b}$) K4 यथोद्दिष्टो, D4 यथोद्दिष्टं, M3-5 यथादिष्टा (M3 °ष्ट) (for यथोद्दिष्टा) Ś1 K3 Dn2 D2 3 6-8 रथोत्तमा (D7 °म), D4 5 तथोत्तमा (for महारथा) K1 2 D1 यथोद्दिष्ट (D1 °ष्टो) नरोत्तमा (D1 °म) —$^{c}$) Dn2 om र्तनं क —$^{d}$) Dn2 राक्षसा (for °साश्च) B1 2 4 Dn1 चैव तान्, B3 5 Dc1 D6 चेतरे, Dn2 [क्ष]पि तान्, D2 4 7 8 [इ]तरान् (for चेत°) D5 राक्षसेंद्रान्महाबलान्

38 Ś2 missing (cf v 1 1)

39 Ś2 missing up to 39$^{c}$ (cf v 1 1) K4 om

सोऽवतीर्य रथोपस्थाद्धताश्वो हतसारथिः ।
तस्मै गुर्वीं गदां घोरां स विनद्योत्ससर्ज ह ॥ ४०
ततस्तां भीमनिर्घोषामापतन्तीं महागदाम् ।
गदया राक्षसो घोरो निजघान ननाद च ॥ ४१
तद्दृष्ट्वा राक्षसेन्द्रस्य घोरं कर्म भयावहम् ।
भीमसेनः प्रहृष्टात्मा गदामाशु परामृशत् ॥ ४२
तयोः समभवद्युद्धं तुमुलं नररक्षसोः ।
गदानिपातसंह्रादैर्भुवं कम्पयतोर्भृशम् ॥ ४३
गदाविमुक्तौ तौ भूयः समासाद्येतरेतरम् ।
मुष्टिभिर्वज्रसंह्रादैरन्योन्यमभिजघ्नतुः ॥ ४४
रथचक्रैर्युगैरक्षैरधिष्ठानैरुपस्करैः ।
यथासन्नमुपादाय निजघ्नतुरमर्षणौ ॥ ४५
तौ विक्षरन्तौ रुधिरं समासाद्येतरेतरम् ।
मत्ताविव महानागावकृष्येतां पुनः पुनः ॥ ४६
तमपश्यद्धृषीकेशः पाण्डवानां हिते रतः ।
स भीमसेनरक्षार्थं हैडिम्बं प्रत्यचोदयत् ॥ ४७

C 7 8073
B 7 177 48
K 7 176 49

इति श्रीमहाभारते द्रोणपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

---

39 — $^a$) D4 7 8 शतैर्, T G1-4 महा (for शितैर्) — $^c$) D3 6 द्यित (for मिपत) G1 M सखे (for संख्ये) — $^d$) B Dc1 Dn1 राक्षस, D5 M3-5 मारिप (for भारत)

40 $^c$) Ś K1-3 D1 G3 4 तस्मिन् (for तस्मै) D1 गुर्वी — $^d$) D7 8 सविनद्य (for स विनद्य) K1 न विद्योत्ससर्ज ह (submetric), B Dc1 Dn1 D2 विनद्य त्सस्मर्ज ह, D4 सविद्योतं ससर्ज ह, S (G5 missing) विनदन्वै स°

42 $^a$) K1 त्वद्, K4 B2 D1. 3-6 G1 4 M1 2 त (for तद्) — $^c$) D5 [ऽ]थ हृष्टात्मा, G1 3 4 M [ऽ]प्रहृ° (for प्रहृ°) — $^d$) Dn2 D4 5 7 8 उग्रा (for आशु) Ś K1 2 B1 3 5 Dc1 D1 परामृषत्

43 $^b$) K1 2 Dc1 राक्षसो (for रक्षसो) D1. 5 7 8 तुमलं नरराक्षसो — $^c$) G3 om गदा D3 निर्घात, D6 मघात (for निपात) K2 D4 5 7 -सह्रादैर्, B4 निह्रादैर (for संह्रादैर्) — D2 om (hapl.) 43$^d$-44$^c$ — $^d$) K1 2 Dc1 D1 3 6 8 G1 M1-3 कंपयतो (D2 ते) (for °यतोर्) D4 5 भुव कपयतो भृशं (sic)

44 D2 om 44$^{abc}$ (cf. v l 43) — $^a$) D3 T गदा (for गदा) Ś K1-3 D6 वियुक्तौ; T G3 4 विमुच्य (for विमुक्तौ) — After 44$^{ab}$, D3 reads 46$^{cd}$ for the first time repeating it in its proper place, while D6 reads it K1. 2 G4 om (hapl) 44$^c$-46$^b$ — $^c$) Ś2 G1 M -मकाशैर्, T G2 3 संघातैर् (for संह्रादैर्)

45 K1 2 G4 om 45 (cf. v l 44) — $^a$) G2 तथाक्षैश्च (for युगैरक्षैर्) — $^b$) Ś1 K3 अपस्करै, S (G4 om, G5 missing) अव° (for उप) — $^c$) G1 तथासन्नम्, G2 यथा योगम् (for यथासन्नम्) D1. 5 यथा समुपदायातौ — $^d$) Dn2 D7 8 तौ (for नि) B5 D6 G1 M1 2 अमर्षिणौ, T G2 3 अरिंदमौ (for अमर्षणौ) D4 5 जघ्नतू रोमहर्षणौ

46 K1 2 G4 om 46$^{ab}$ (cf v l 44) — $^a$) D4 5 विक्षिपतौ (for विक्षरन्तौ) — D3 reads 46$^{cd}$ for the first time after 44$^{ab}$, D6 reads it after 44$^{ab}$ — $^c$) Ś2 om. इव D2 महानागा, D3 (first time) °नागाव्, D4 °नागाद् (for नागाव्) — $^d$) Ś2 K1 2 D1 आकृष्येतां, K4 B Dc1 Dn D2 8 (second time) 5 G3 4 M3 च कृपाते, D4 चाक्षेपेता, D7 8 अक्षेपवा (D8 पेता), T G2 M5 चकर्षाते (for अकृष्येता) Dn2 D4 5 7 8 परस्पर (for पुन पुन) G1 M1 2 4 चकृपा( M4 °कर्षा )वितरेतरं

47 $^a$) Ś2 K1 2 D1 G3 4 ताव्, K4 B Dc1 Dn D2 T G2 तद् (for तम्) D2 6 चापश्यद्, D4 अप श्यन् — $^c$) T G2 3 M1. 2 मोक्षार्थं (for रक्षार्थं) Ś2 K1 2 D1 G4 भीमसेनस्य र( G4 मो )क्षार्थं — $^d$) K3 D1 हैडिंबिं, K4 D5 8 हैडर्बीं, Dn1 हैडब, D2 4 7 हैडंबिं (for हैडिम्ब) B (except B3) Dc1 Dn1 S (G5 missing) पर्यचोदयत्; D3 5-8 प्रत्यनो° (for प्रत्यचो°)

Colophon K5 G5 missing — *Sub-parvan* Ś1 K1 2 B Dc1 Dn2 D1 3 6 घटोत्कचवध — *Adhy name* K1 B1 3 4 Dc1 D1 2 4 5 7 8 G1 2 4 M1 2 रात्रियुद्ध, D6 रात्रियुद्धे भीमालायुधसग्राम, M3 5 रात्रियुद्धे भीमालायुधयुद्ध, Bom ed रात्रियुद्धे अलायुधयुद्ध — *Adhy no* (figures, words or both) Dn1 177, D3 72, T G2-4 172, G1 M1 2 171, M3-5 170 — *Śloka no* Dn1 48

# १५३

C 7 8074
B 7 178 1
K 7 178 9

संजय उवाच ।
संप्रेक्ष्य समरे भीमं रक्षसा ग्रस्तमन्तिकात् ।
वासुदेवोऽब्रवीद्वाक्यं घटोत्कचमिदं तदा ॥ १
पश्य भीमं महाबाहो रक्षसा ग्रस्तमन्तिकात् ।
पश्यतां सर्वसैन्यानां तव चैव महाद्युते ॥ २
स कर्णं त्वं समुत्सृज्य राक्षसेन्द्रमलायुधम् ।
जहि क्षिप्रं महाबाहो पश्चात्कर्णं वधिष्यसि ॥ ३
स वार्ष्णेयवचः श्रुत्वा कर्णमुत्सृज्य वीर्यवान् ।
युयुधे राक्षसेन्द्रेण बकभ्रात्रा घटोत्कचः ।
तयोः सुतुमुलं युद्धं बभूव निशि रक्षसोः ॥ ४
अलायुधस्य योधांस्तु राक्षसान्भीमदर्शनान् ।
वेगेनापततः शूरान्प्रगृहीतशरासनान् ॥ ५
आत्तायुधः सुसंक्रुद्धो युयुधानो महारथः ।
नकुलः सहदेवश्च चिच्छिदुर्निशितैः शरैः ॥ ६
सर्वांश्च समरे राजन्किरीटी क्षत्रियर्षभान् ।
परिचिक्षेप बीभत्सुः सर्वतः प्रक्षिपञ्शरान् ॥ ७
कर्णश्च समरे राजन्व्यद्रावयत पार्थिवान् ।
धृष्टद्युम्नशिखण्ड्यादीन्पाञ्चालानां महारथान् ॥ ८
तान्वध्यमानान्दृष्ट्वा तु भीमो भीमपराक्रमः ।
अभ्ययात्त्वरितः कर्णं विशिखान्विकिरन्रणे ॥ ९

## 153

☞ This adhy is missing in K5 G5 (cf. v 1 7 125 14, 137 9)

1 a) Ś K1-3 D1 त दृष्ट्वा, K4 Dn2 D2 4 5 7 8 स(D4 5 स)दृश्य (for संप्रेक्ष्य) Dn2 D2 3 6 S (G5 missing) transp समरे and भीम — b) G1 M1 2 राक्षस (for रक्षसा) D3 अतिके — D1 om (hapl) 1c-2b — c) Ś K1-3 हृषीकेशो (for वासुदेवो) K4 B Dc1 Dn1 राजन् (for वाक्यं) — d) Ś1 K3 नृप, K1 2 4 B Dc1 Dn1 वच, Dn2 D2 3 6-8 तत, D1 पुन (for तदा)

2 D4 om. 2ab (cf v 1 1) D5 6 om (hapl) 2ab — a) D7 om छाया — b) = 1b B Dc1 Dn आहवे; D3 अतिके (for °कात्) — d) D4. 5 तथा (for तव)

3 a) D3 6 कर्णं सं; D4 तु कर्णं; S (G5 missing) कर्णं तु (for कर्णं त्वं) — c) D7 om छाया — d) S (G5 missing) हनिष्यसि (for वधि°)

4 d) Ś1 K3 भैमसेनिर् (for बकभ्रात्रा) — e) Dn2 D2 7 8 T G2-4 तु, D1 स (for सु) D4 5 7 8 तुमलं (for तुमुल) — After 4, N (K5 missing) ins

1237* अलायुधस्य चैवोग्र हैडिम्बस्य च भारत ।

[D3 चैवापि (for चैवोग्र) Dc1 Dn1 D2 4 5 7 8 हैड म्बस्य. Bom ed हैडिंबेश्चापि भारत (for the post half).]

5 D4 transp 5ab and 5cd — a) D4 अलायुधस्तु, G1 हलायुधस्य Ś1 घोरास्तु, K3 4 B Dc1 Dn1 D3 6 योधाश्च, M1 2 5 योधास्तु — b) Ś2 Dn2 D2 5. 7 8 घोर (for भीम) B1 विक्रमान् (for दर्शनान्) D1 पाचाला द्रोणमेव तु — c) G1 M1 2 [उ]त्पतत (for [आ]प°)

6 D3 om (hapl) 6a-7b — a) K4 D1 अलायुध, Dc1 (before corr) Dn2 D1 5 अलायुध, Dc1 (by corr) युयुधान, D2 अलायुधं (for आत्तायुध) Dn1 D2 5 7 8 T G2-4 तु (for सु) G1 M1 2 सुसं क्रुद्धान् (for °द्धो) D6 युधामन्युश्च सक्रुद्धो — d) Ś K (K5 missing) D1 चिच्छेद, Dn2 D2 5 बिभिदुर् (for चिच्छि°) D4 युयुधानो महारथ (= 6b)

7 D3 om 7ab (cf v 1 6) D4 om 7a-10b — a) Dn2 सर्वाश् D5 तु (for च) — b) Dn1 किरीटी क्षत्रियर्षभ° — D1 om 7cd — d) K4 B Dc1 Dn1 D5 S (G5 missing) प्रकिरन्, Dn2 D2 प्राक्षिपन् (for प्रक्षि°).

8 D4 om 8 (cf v 1 7). — b) D7 8 प्राद्रावयत (for व्यद्रा°) G1 M1 2 पाण्डवान् (for पार्थिवान्) D5 द्रावयामास पार्थिवान् — d) Bom. ed पचालाना

9 D4 om 9 (cf. v 1 7) — a) B1 3 Dc1 Dn1 [अ]थ (for तु) D7 8 तान्दृष्ट्वा वध्यमानास्तु — b) D7 om (hapl) भीम D1 पराक्रम (for °क्रम) — c) K1 G3 अभ्यायात्, D5 अन्व° (for अभ्य°).

C. 7 ... B. 7 ... K. 7 ... 

ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते ॥ २६
अस्माकं हि वनस्थानां हैडिम्बेन महात्मना ।
बालेनापि सता तेन कृतं साह्यं जनार्दन ॥ २७
अस्त्रहेतोर्गतं ज्ञात्वा पाण्डवं श्वेतवाहनम् ।
असौ कृष्ण महेष्वासः काम्यके मामुपस्थितः ।
उषितश्च सहास्माभिर्यावन्नासीद्धनंजयः ॥ २८
गन्धमादनयात्रायां दुर्गेभ्यश्च स तारिताः ।
पाञ्चाली च परिश्रान्ता पृष्ठेनोढा महात्मना ॥ २९
आरम्भाच्चैव युद्धानां यदेष कृतवान्प्रभो ।
मदर्थे दुष्करं कर्म कृतं तेन महात्मना ॥ ३०
स्वभावाद्या च मे प्रीतिः सहदेवे जनार्दन ।
सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे ॥ ३१
भक्तश्च मे महाबाहुः प्रियोऽस्याहं प्रियश्च मे ।
येन विन्दामि वार्ष्णेय कश्मलं शोकतापितः ॥ ३२
पश्य सैन्यानि वार्ष्णेय द्राव्यमाणानि कौरवैः ।
द्रोणकर्णौ च संयत्तौ पश्य युद्धे महारथौ ॥ ३३
निशीथे पाण्डवं सैन्यमाभ्यां पश्य प्रमर्दितम् ।
गजाभ्यामिव मत्ताभ्यां यथा नडवनं महत् ॥ ३४

---

26 Ś2 missing (cf v 1 8) —a) K4 B Do1 Dn D2 4 5 7 8 मे, T G1-4 नो (for ते) —b) B1 कर्मणा (for धर्माणा) —c) B (except B2) Do1 S (G5 missing) वध्या (for -हत्या) —d) Ś1 K1-3 D1 4 6 M3 4 यत्र (for यः) S (except G3, G5 missing) नानुरुध्यते (for नावबु°)

27 Ś2 missing (cf v 1 8) —b) Do1 Dn1 D2 4 5 7 8 हैं (D5 हे) डम्बेन (for हैडिम्बेन) —c) K1 2 Dn D2 सतानेन, T सदा तेन (for सता तेन) —d) D7 om कृतं B1 Do1 Dn सह्यं (for साह्यं) S (G5 missing) महात्मना (for जनार्दन)

28 Ś2 missing (cf v 1 8) —a) D5 पार्थं (for ज्ञात्वा) — After 28ab, D2 8 ins

1257* आगम्य स सहायेन कृता रक्षा महात्मना ।
सोऽद्य कर्णेन निहतः पश्यतां पापचेतसाम् ।
अस्य पापस्य मोक्षं हि कथं यास्यामि माधव ।

[D2 om line 1 — (L 2) D8 सोय (for सोऽद्य)]

—c) S (G5 missing) महाबाहु (T °हु) (for महेष्वास) —d) Do1 Dn1 मामुपाश्रित, D7 °पास्थित, D5 समुप°, T मामयन्वित

29 Ś2 missing (cf v 1 8) —b) Ś1 K1 2 (marg) Dn2 D1 स्म च (by transp), D8 6 चास्म (sic), G2 च सु Ś1 K1 2 D1 चारिता (sic) (for ता) D1 दुर्गेभ्यश्च स्मृता**, T G1 4 दुर्गे वार्मनि चा' G1 4 ता )रिता —c) M3-5 परिग्राता (for °श्रान्ता), Do1 पांचाली च परिश्रांता —d) Dn1 D1 4 पृष्ठेनोद्वह त्मना — After 29, D7 ins

1258* दिष्टां हि विनयं कृष्णा महदेवस्य धाज्ञया ।
दृष्टां तु गत्वा पौरस्य कर यै दापितो बलात् ।

30 Ś2 missing (cf v 1 8) —a) K1 आरभश्च, B1 D1. 8 T G3 4 °भांश्च, B5 Do1 आरंभे; Dn2 अभिज्ञश्च, D2 4 5 7 8 आरभे, D6 अर्दिनांश्च (for आरम्भाच्च) B1 च रणस्थाना, Dn1 चैव पुत्राणा, D2 चैव सर्वत्र (for चैव युद्धानां) —b) Dn2 D7 8 यदेव; D2 6 यथैष, D1 5 यदेवं (for यदेष) D1. 5 विभो (D5 °भु), D2 पुन, D7 8 S (except G1, G5 missing) प्रभु (for प्रभो) —cd) K3 4 B (except B1) Do1 Dn D2 G1 मदर्थे (for °र्थं) Dn2 T G3 दुष्कृत (for दुष्कर) T G1-4 transp कर्म and तेन B2-5 Do1 Dn1 महाहवे (for °त्मना)

31 Ś2 missing (cf v 1 8) D1 4 5 om (hapl) 31bc —c) B Do1 Dn1 परमा (for द्विगुणा) G2 सैव द्विगुणिता प्रीती

32 Ś2 missing (cf v 1 8) —a) D1 5 7 8 मम (for च मे) —b) K4 T G3. 4 स (for च) —c) B Do1 Dn1 T G1 3 4 M1 2 तेन (for येन) —d) K4 D1 G1 पातित, B (except B1) Do1 D2 -पीडित, D6 -कशित (for -तापित)

33 Ś2 missing (cf v 1 8) —b) Ś1 K1 D1 6 म्राव्यमानानि —c) B (except B1) Do1 Dn1 D2 8 G3 तु स, D8 इमौ (for च स). D1 5 7 सयत्तौ, M3-5 संयुक्तौ (for संयत्तौ)

34 Ś2 missing (cf v 1 8) —b) Dn2 D1 5 पुत्रपश्य; D5 पुत्रसैन्य (for माभ्यां पश्य). B1 3 5 पश्यत; B2 Do1 Dn1 पश्य च; B4 पश्याव; S (G1 missing) माथ (M3-5 थाद )व (for पश्य प्र) —c) Dn2 तत्राभ्याम् (sic) (for गजाभ्याम्) —d) D8 बलात् (for यथा) Ś1 K (K5 missing) B Do1 Dn D1, 3-8 G3 4 नलवन; T G1, 2 M नळ° (for नड°). D1 यया तै

अनादृत्य बलं बाह्वोर्भीमसेनस्य माधव ।
चित्रास्त्रतां च पार्थस्य विक्रमन्ते स्म कौरवाः ॥ ३५
एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः ।
निहत्य राक्षसं युद्धे हृष्टा नर्दन्ति संयुगे ॥ ३६
कथमस्मासु जीवत्सु त्वयि चैव जनार्दन ।
हैडिम्बः प्राप्तवान्मृत्युं सूतपुत्रेण संगतः ॥ ३७
कदर्थीकृत्य नः सर्वान्पश्यतः सव्यसाचिनः ।
निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ॥ ३८
यदाभिमन्युर्निहतो धार्तराष्ट्रैर्दुरात्मभिः ।
नासीत्तत्र रणे कृष्ण सव्यसाची महारथः ॥ ३९
निरुद्धाश्च वयं सर्वे सैन्धवेन दुरात्मना ।
निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्मणि ॥ ४०
उपदिष्टो वधोपायः कर्णस्य गुरुणा स्वयम् ।
व्यायच्छतश्च खड्गेन द्विधा खड्गं चकार ह ॥ ४१
व्यसने वर्तमानस्य कृतवर्मा नृशंसवत् ।
अश्वाञ्जघान सहसा तथोभौ पार्ष्णिसारथी ।
तथेतरे महेष्वासाः सौभद्रं युध्यपातयन् ॥ ४२
अल्पे च कारणे कृष्ण हतो गाण्डीवधन्वना ।
सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं मम ॥ ४३
यदि शत्रुवधे न्याय्यो भवेत्कर्तुं च पाण्डवैः ।
द्रोणकर्णौ रणे पूर्वं हन्तव्याविति मे मतिः ॥ ४४
एतौ मूलं हि दुःखानामस्माकं पुरुषर्षभ ।

C 7 8340
B 7 183. 47
K 7 184 47

---

व्यसने महत्

35 Ś1 missing (cf v 1 8) — a) T G1-4 अनादृत्य (for °दृत्य) K1 बलं बाहोर्, M3-5 महाबाहो — b) B1 D मारिष, M3 ° विक्रम (for माधव) — c) Ś1 K2 D4 6 G2 चित्रार्थता (for °स्त्रता) D 7 8 या (for च) — d) Dn D2 4 5 7 8 विक्रमंति (for °मन्ते) G3 4 [s]स्य (for स्म) B Dc1 विक्रम तेज एव च

36 Ś1 missing (cf. v 1 8) — a) M3-5 एव (for एष) D1 एष कर्णश्च द्रोणश्च — d) D1 दृष्ट्वा (for हृष्टा) Ś1 K (K4 missing) Dn2 D1. 6 G2 नर्दंति (for नर्दन्ति) B1-3 Dc1 Dn1 संघश, B4 सर्वश (for संयुगे)

37 Ś1 missing (cf v 1 8) D3 6 om 37 — a) K3 वास्मासु, B Dc1 Dn1 चा° (for स्म°) — b) K1 जनार्दने — c) K4 हैडंबि, Dc1 Dn1 D2 4 5 7 8 हैडंब, Dn2 D1 हैडिंबि (for हैडिम्ब) G2 M3-5 प्राप्तुयान् (for प्राप्तवान्)

38 Ś1 missing (cf v 1 8), — c) T G1-4 निहतो राक्षसश्रेष्ठो.

39 Ś1 missing (cf. v. 1. 8), — b) M3 महात्मभि (for दुरा°) — c) S (G4 missing) तदा (for रणे) — d) Ś1 K (K4 missing) D1 परंतप ; D5 G1 महाबल (for °रथ)

40 Ś1 missing (cf. v 1 8) — a) K1 निरुद्धश्च, B1 विरुद्धाश्च (for नि°), D1 om श्च वय D5. 6 सर्वे (for सर्वे) — b) Dn2 D2 4 5 7 8 T G1-4 M3 महात्मना (for दुरा ) — d) Ś1 K (K4 missing) D1 तस्य, M3-5 तु न (sic) (for तत्र)

41 Ś1 missing (cf v 1 8) — a) M3 महोपाय (for वधो ) D3 6 उपदिष्टे वधोपाये — b) G2 कर्णाय (for कर्णस्य) — c) D1 व्यायच्छतस्य D7 8 G1 M3-5 महेन, M1. 2 कर्णेन (for खड्गेन) D3 6 चरतस्तस्य खड्गेन — d) K4 D1 चक्र (for खड्ग) T G3 4 स (for ह). D7 8 द्विधा ज्या निचकर्त ह

42 Ś1 missing (cf v 1 8) — c) T G3 4 तरसा (for सहसा) D3 om (hapl ) from सा up to पार्ष्णि (in 42d) — d) K2 प्राष्टि, K3 D1 S (except G2, G4 missing) प्राष्टि (for पार्ष्णि ) — e) D4. 5 T G2-4 M3-5 अथेतरे (for तथे°)

43 Ś1 missing (cf. v 1 8) — b) Dc1 D4 7 गांजीव (for गाण्डीव ) K1 D6 धन्विना (for धन्वना) — d) Dn2 तु (for च) M3 महत् (for मम).

44 Ś1 missing (of. v 1 8) — b) M1 2 रणे (for भवेत्). K1 lacuna; B Dc1 Dn1 हि; T G1-4 तु; G1 M स्म (for च). — c) B Dc1 Dn1 S (G4 missing) कर्णद्रोणौ (for द्रोणकर्णौ).

45 Ś1 missing (of. v 1 8). — a) D1 4. 5 7 8 एतत् (for एतौ) K2 मुखौ हि; K3 B (except B1) Dc1 Dn हि मूल (by transp ) — b) B3 D6 भरतर्षभ — G3 om 45c–46d — c) Dn1 om from समास्य up to ततो (in 49a) — d) K2 (sup lin ) 4

C 7 6341
B 7 163. 46
K. 7 164 47

एतौ रणे समासाद्य पराश्वस्तः सुयोधनः ॥ ४५
यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः ।
तत्रावधीन्महाबाहुः सैन्धवं दूरवासिनम् ॥ ४६
अवश्यं तु मया कार्यः सूतपुत्रस्य निग्रहः ।
ततो यास्याम्यहं वीर स्वयं कर्णजिघांसया ।
भीमसेनो महाबाहुर्द्रोणानीकेन संगतः ॥ ४७
एवमुक्त्वा ययौ तूर्णं त्वरमाणो युधिष्ठिरः ।
स विस्फार्य महच्चापं शङ्खं प्रध्माप्य भैरवम् ॥ ४८
ततो रथसहस्रेण गजानां च शतैस्त्रिभिः ।
वाजिभिः पञ्चसाहस्रैस्त्रिसाहस्रैः प्रभद्रकैः ।
वृतः शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात् ॥ ४९
ततो भेरीः समाजघ्नुः शङ्खान्दध्मुश्च दंशिताः ।
पाञ्चालाः पाण्डवाश्चैव युधिष्ठिरपुरोगमाः ॥ ५०
ततोऽब्रवीन्महाबाहुर्वासुदेवो धनंजयम् ।
एष प्रयाति त्वरितो क्रोधाविष्टो युधिष्ठिरः ।
जिघांसुः सूतपुत्रस्य तस्योपेक्षा न युज्यते ॥ ५१
एवमुक्त्वा हृषीकेशः शीघ्रमश्वानचोदयत् ।
दूरं च यातं राजानमन्वगच्छज्जनार्दनः ॥ ५२
तं दृष्ट्वा सहसा यान्तं सूतपुत्रजिघांसया ।
शोकोपहतसंकल्पं दह्यमानमिवाग्निना ।
अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम् ॥ ५३
कर्णमासाद्य संग्रामे दिष्ट्या जीवति फल्गुनः ।

---

B Do1 Dn1 D2 5 6 समाश्वस्त (for परा°)

46 Ś2 missing (cf v 1 8) Dn2 G3 om 46 (cf v 1 45) —a) Do1 तत्र, D4 5 स तु (for यत्र) —b) D2 सानुज (for °ग) —c) D2 महा बाहुं, D3 6 °राज (for °बाहु) —d) D4 om from दूर up to महाबाहु (in 47c) M3-5 द्रोणानीके जयद्रथं

47 Ś2 missing (cf v 1 8) Dn2 om 47 (cf v 1 45) D4 om 47abcde (cf v 1 46) Do1 Dn1 om 47c-48b —c) Ś1 K1-3 D1 3 6 यत्तो (for ततो) D5 योधामि, M3-5 योत्स्यामि (for यास्यामि) —d) D2 5 7 8 सूतपुत्र (for स्वयं कर्ण)

48 Ś2 missing (cf v 1 8) Dn2 om 48 (cf v 1 45) Do1 Dn1 om 48ab (cf v 1 47) Before 48, M3-5 ins संजय उवाच —a) G2 यया (for ययौ) B1 D2 4 5 7 8 कर्ण (for तूर्णं) —b) T G1-4 यतमानो (for त्वरमाणो) —c) S (G5 missing) विस्फा(G2 °स्फा)र्य सु (M3-5 च) (for स विस्फार्य). —d) Ś1 K3 चाध्माय; K1, 2 D1 चाध्माप्य; K4 D1 8 प्र(D8 प्रा)ध्माय, Dn1 आपूर्य; D2, 5 दध्माप्य (D5 °य), D7 lacuna (for प्रध्माप्य) D7 om भैरवम्

49 Ś2 missing (cf v 1 8) Dn2 om up to ततो (cf v 1 45) —a) Ś1 वृतो (for ततो) G1 M गज (for रथ) —b) D4 5 G1 M रथाना (for गजाना) D3, 6 नियुतैस् (for च शतैस्) —d) K4 lacuna, B Do1 Bom ed पां(Bom ed. प)चालै स-, D4 5 7 8 सहस्रैस्तु (D7 8 °स्रैश्च), T G2-4 केक यैश्च (for त्रिसाहस्रै) Dn1 पांचालै सह मद्रकै —e) K3 त्वरित (for °तो) —f) Ś1 K3 [ऽ]न्ययात्, B1 G1 2 M1 2 [ऽ]न्वगात् (for ऽन्वयात्)

50 Ś2 missing (cf. v 1 8) —a) M3 समाजग्मु (for °जघ्नु) —b) Ś1 K1-3 D1 4 8 उच्चैश् (for दध्मुश्) D5 शखांश्चैव पृथक्पृथक्, S (G5 missing) पणवा(M1 पटहा, M2 पत्नहा)नकगोमुखान् (G2 M3-5 °खा) — After 50ab, S (G5 missing) ins

1259* शङ्खशब्दरवाश्चैव बाणशब्दाश्च दंसिता ।

[ M3 5 चक्रु शखरवांश्चैव (for the prior half) ]

—c) K3 पचाला

51 Ś2 missing (cf v 1 8) —c) Ś1 K1 2 T G3 4 त्वरित (for °तो) —e) K1 2 4 D1 -पुत्रं वै, G1 M -पुत्र स (for पुत्रस्य) —f) Ś1 K (K5 missing) B4 D2, 4 5, 7, 8 विद्यते (for युज्यते) D3, 6 युक्तमेतस्य विद्यते.

52 Ś2 missing (cf. v 1 8) —b) D3 4 6 अनो दयत्, D5 अचोदयन् —c) K1 3 D2 M3-5 च यात, K4 Do1 Dn1 प्रया(Do1 °या)त, D3 5 6 या(D6 जा)त च (by transp) —d) D6 अन्वागच्छज्

53 Ś2 missing (cf v 1 8) —a) D4 यातं (for यान्त). —B4 om 53c-54b, —c) T G3 4 M3-5

सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान्हि सः ॥ ५४
न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तं भरतर्षभ ।
सृजेतां स्पर्धिनावेतौ दिव्यान्यस्त्राणि सर्वशः ॥ ५५
वध्यमानेषु चास्त्रेषु पीडितः सूतनन्दनः ।
वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर ॥ ५६
ततो भवेत्ते व्यसनं घोरं भरतसत्तम ।
दिष्ट्या रक्षो हतं युद्धे सूतपुत्रेण मानद ॥ ५७
वासवीं कारणं कृत्वा कालेनापहतो ह्यसौ ।
तवैव कारणाद्रक्षो निहतं तात संयुगे ॥ ५८
मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः ।
प्राणिनामिह सर्वेषामेषा निष्ठा युधिष्ठिर ॥ ५९
भ्रातृभिः सहितः सर्वैः पार्थिवैश्च महात्मभिः ।
कौरवान्समरे राजन्नभियुध्यस्व भारत ।
पञ्चमे दिवसे चैव पृथिवी ते भविष्यति ॥ ६०
नित्यं च पुरुषव्याघ्र धर्ममेव विचिन्तय ।
आनृशंस्यं तपो दानं क्षमां सत्यं च पाण्डव ॥ ६१
सेवेथाः परमप्रीतो यतो धर्मस्ततो जयः ।
इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत ॥ ६२

C. 7 8361
B. 7 183 67
K 7 184 67

इति श्रीमहाभारते द्रोणपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

---

सतस्, G1. 2 M1 2 संतापं (for सकल्पं) —$^e$) D2 अति (for अभि)

54 Ś2 missing (cf v 1 8) B1 om. 54$^{ab}$ (cf. v 1. 53) Before 54, B1–3 5 Dc1 Dn D2 3 5 6 M3–5 ins व्यास उवाच —$^a$) D3 6 समरे (for सग्रामे) —$^b$) K3 4 B1–3 5 D फाल्गुन —$^c$) Dn1 D3 5 सव्यसाची- (for साचि) —$^d$) D1 हृ स, G2 असौ (for हि स)

55 Ś2 missing (cf v 1 8) —$^a$) Ś1 K3 चायाद् (for चागाद्) Ś1 K1 2 D1 द्वैरथे (for थ) —$^b$) Dn2 तु, D2 ते, D1 5 7 8 च (for त) B Dc1 Dn1 दिष्ट्या तेन महारणे, D3. 6 S (G5 missing) दिष्ट्या तेन नरर्षभ (D3 6 T G3 °भ) —$^c$) Dc1 स्पर्धितावू, D1 वर्धितावू (for स्पर्धिनावू) B1 चोभौ (for एतौ) —$^d$) K1 Dn2 D1 5 7 8 सर्वत (for °श)

56 Ś2 missing (cf v 1 8) —$^a$) Dn2 विध्य मानेषु (for वध्य°) —$^b$) M1. 2 व्रीडित (for पीडित) — Dn2 om. 56$^c$–57$^d$ —$^d$) K1 D1 मुच्येद्, Dn1 मोचेद् (for मुञ्चेद्)

57 Ś2 missing (cf v 1 8) Dn2 om 57 (cf v 1 56) —$^b$) T G2–4 भारतसत्तम —$^c$) D6 पार्थ (sic) (for रक्षो) Dn1 D7 हतो (for हत) M3–5 दिष्ट्या युद्धे हत रक्ष —$^d$) B1 सयुगे (for मानद)

58 Ś2 missing (cf v 1 8) —$^a$) D1. 5 7 ज्ञात्वा (for कृत्वा) —$^b$) Ś1 K (K5 missing) D1 3 6 कर्णेन (for कालेन) K3 Dn1 [अ]पकृतो, K4 D1 8 S (G5 missing) °हृतो, B1. 3 [उ]पहृतो, B2 4 5 Dc1 D2 [उ]पहतो, Dn2 [अ]पि हतो (for [अ]पहतो) M3–5 [ऽ]पि (for हि) —$^c$) K1 T तथा (for तव) —$^d$) M3–5 तत्र (for तात)

59 Ś2 missing (cf v 1 8) —$^a$) K1 Dn2 D1. 4–8 M1 2 क्रुद्धो (D6 °द्धे) (for क्रुधो) G3 भारत (for भ) —$^c$) G2 अपि (for इह)

60 Ś2 missing (cf v 1 8) —$^b$) D5 सहस्रश (for महात्मभि) —$^c$) Ś1 K3 Dn2 D2 4 5 7 3 सर्वान् (for राजन्) —$^d$) Dn1 D3 प्रति- (for अभि-) —$^e$) Dn2 पंचमी- (for मे) K1 2 D1 प्राप्ते, K4 B Dc1 Dn1 तात (for चैव)

61 Ś2 missing (cf v 1 8) —$^a$) K2 D1 हि (for च) —$^b$) Ś1 D6 विचिंतये (D6 यन्), K (K5 missing) B Dc1 Dn D1 अनु (D1 °न्व) चिंतय (K1 3 °ये) (for विचि) —$^d$) Ś1 K (K5 missing) D1 दया (for क्षमा) Ś1 K (K5 missing) B1. 3 Dn1 D1 3 6 T G3 4 नित्यं (for सत्यं)

62 Ś2 missing (cf v 1 8) —$^a$) Dn2 D2 5 सेवस्व, D1 शोचस्व (sic), D6 भजेथा (for सेवेथा)

# १५९

C 7 8363
B 7 184 2
K 7 185 2

संजय उवाच ।
घटोत्कचे तु निहते सूतपुत्रेण तां निशाम् ।
दुःखामर्षवशं प्राप्तो धर्मपुत्रो युधिष्ठिरः ॥ १
दृष्ट्वा भीमेन महतीं वार्यमाणां चमूं तव ।
धृष्टद्युम्नमुवाचेदं कुम्भयोनिं निवारय ॥ २
त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
सशरः कवची खड्गी धन्वी च परतापनः ।
अभिद्रव रणे हृष्टो न च ते भीः कथंचन ॥ ३
जनमेजयः शिखण्डी च दौर्मुखिश्च यशोधनः ।
अभिद्रवन्तु संहृष्टाः कुम्भयोनिं समन्ततः ॥ ४
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
द्रुपदश्च विराटश्च पुत्रभ्रातृसमन्वितौ ॥ ५
सात्यकिः केकयाश्चैव पाण्डवश्च धनंजयः ।
अभिद्रवन्तु वेगेन भारद्वाजवधेप्सया ॥ ६
तथैव रथिनः सर्वे हस्त्यश्वं यच्च किंचन ।
पादाताश्च रणे द्रोणं प्रापयन्तु महारथम् ॥ ७

---

Colophon om in Ś1 K1-4 D1 Ś2 K5 G5 missing — *Sub-parvan* Editions घटोत्कचवध — *Adhy name* B Dc1 Dn D2-8 रात्रियुद्ध, B4 (also) समाप्तं घटोत्कचवधपर्व, T G2 8 व्यासदर्शन; Bom ed रात्रियुद्धे व्यासवाक्यं — *Adhy no* (figures, words or both) Dn1 184, D2 187, D8 77, T G3 179, G1 M1 2 177, G2 4 178, M3-5 176 — *Śloka no* Dc1 66, Dn1 67

## 159

☞ This adhy is missing in Ś2 K5 G5 (cf v l 7 158 8, 125 14, 137 9)

1 K4 om the ref After the ref, K3 (marg) B Dc1 Dn D3 5 6 ins

1260* व्यासेनैवमथोक्तस्तु धर्मराजो युधिष्ठिर ।
स्वय कर्णवधाद्वीरो निवृत्तो भरतर्षभ ।

[ (L 1) D6 एव D3 5 तथोक्तस्, D6 य° (for अ°) D5 6 धर्मपुत्रो (for °राजो) — D6 om line 2 ]

— D6 om 1 — a) D3 T G2-4 च (for तु) — b) D4 7 8 धर्म (for सूत) D5 शक्त्या कर्णेन रक्षसि — c) D4 5 7 8 शोकामर्ष; G2 दुःखशोक (for °मर्ष) Ś1 K (K5 missing) D1 यातो (for प्राप्तो) — d) B D (except D1, D6 om) धर्मराजो (for °पुत्रो)

2 b) K1 मति (for तव)

3 For the incident, cf 1 155 38 With 3, cf 7 86 49 — a) K4 विनाशार्थं (for °शाय) — c) K1 2 4 D1-3, 6 T G2-4 M3-5 सशरी; D4 5 8 सशक्ती (D5 °क्तिः); D7 सुसक्त (for सशर). — d) D4 खड्गी (for धन्वी) Ś1 K1 3 D1 4 5 7 8 तापन (for °न) — T G3 om (hapl) 3c-4b — c) G1 2 4 M द्रोण (for हृष्टो) — f) K1 तदा, K3 B Dc1 Dn1 D2 G1 4 M मा च (for न च) G2 मा च भीस्ते कदाचन

4 T G3 om 4ab (cf v l 3) — b) B5 D4 5 7 G1 4 M1 2 दौर्मुखी, Dn1 दुर्मुखश्, D3 दुर्मुखी (for दौर्मुखिश्) B6 om च K1 D3 सुयोधन, K3 4 Dn D2 4 7 8 G1 4 M यशोधर, G2 यथा धर (for यशोधन) — c) B5 -द्रवति, D4 -द्रुवत, D5 T G2-4 द्रवत (for द्रवन्तु) Dn2 D4 5 7 8 सक्रुद्धा, S (G5 missing) सरब्धा (for सहृष्टा)

5 D6 om 5 — b) S (G5 missing) च दसि(T °शि)ता (for प्रभद्रका) — d) G3 भ्रातृपुत्र (for पुत्रभ्रातृ) K4 D2 -समन्वित, D4 समतत (for समन्वितौ)

6 a) Ś1 K1 केकयश्, Dn2 D1 2 4-8 कैकयाश् — b) K1 4 पाडवाश् — c) K4 D2 G2 अभि(D2 °भ्य)-द्रवंत, D4 अभिदुद्राव (for °द्रवन्तु) — d) K1 2 B Dc1 Dn1 कुम्भयोनि (for भारद्वाज-) D2 -जिघासव· (for वधेप्सया) Dn2 D4 5 7 8 भारद्वाज जिघासव·, G1 कुम्भयोनिं युयुत्सया

7 K1 om (hapl) 7-8, B2 reads the same on marg K4 D1 om. (hapl) 7b-8a — b) D5 6 हस्त्यश्वा ये च केचन — c) K3 B Dn D2-5 7 8 G1. 2 M4 पदाताश् Dn2 द्रोणे (for द्रोणं) — d) K3 B Dc1 Dn1 M पातयतु, Dn2 D6-8 प्रापयतु, T G2-4 वारयंतु, G1 तापयतु (for प्राप°). D7 om रथम्

तथाज्ञप्तास्तु ते सर्वे पाण्डवेन महात्मना ।
अभ्यद्रवन्त वेगेन कुम्भयोनिं युयुत्सया ॥ ८
आगच्छतस्तान्सहसा सर्वोद्योगेन पाण्डवान् ।
प्रतिजग्राह समरे द्रोणः शस्त्रभृतां वरः ॥ ९
ततो दुर्योधनो राजा सर्वोद्योगेन पाण्डवान् ।
अभ्यद्रवत्सुसंक्रुद्ध इच्छन्द्रोणस्य जीवितम् ॥ १०
ततः प्रववृते युद्धं श्रान्तवाहनसैनिकम् ।
पाण्डवानां कुरूणां च गर्जतामितरेतरम् ॥ ११
निद्रान्धास्ते महाराज परिश्रान्ताश्च संयुगे ।
नाभ्यपद्यन्त समरे कांचिच्चेष्टां महारथाः ॥ १२
त्रियामा रजनी चैषा घोररूपा भयानका ।
सहस्रयामप्रतिमा बभूव प्राणहारिणी ।
वध्यतां च तथा तेषां क्षतानां च विशेषतः ॥ १३
अहो रात्रिः समाजज्ञे निद्रान्धानां विशेषतः ।
सर्वे ह्यासन्निरुत्साहाः क्षत्रिया दीनचेतसः ।
तव चैव परेषां च गतास्त्रा विगतेषवः ॥ १४
ते तथा पारयन्तश्च ह्रीमन्तश्च विशेषतः ।
स्वधर्ममनुपश्यन्तो न जहुः स्वामनीकिनीम् ॥ १५
शस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः ।
गजेष्वन्ये रथेष्वन्ये हयेष्वन्ये च भारत ॥ १६
निद्रान्धा नो बुबुधिरे कांचिच्चेष्टां नराधिपाः ।
तेऽन्योन्यं समरे योधाः प्रेषयन्त यमक्षयम् ॥ १७

C 7 6321 B 7 184 20 K 7 185 19

---

8 K1 om 8  K4 D1 om. $8^{a}$ (for both, cf v l. 7)  B2 reads 8 on marg — $^{a}$) K4 अभ्यद्रवंति, B2 अभिद्रवत, D4 G1 M4 अभ्यद्रवंतु (for °द्रवन्त) D5 ते सर्वे (for वेगेन) — $^{b}$) N (K1 om, Ś1 K5 missing) कुंभयोनि(D3 भारद्वाज)वधे(Dn2 D2 7 8 °जये-, D4 °यथे)प्सया

9 $^{b}$) D5 सर्वान्पांडवनंदनान् — Dn2 om $9^{cd}$  D2 4.6 om (hapl.) $9^{c}$–$10^{b}$ — $^{c}$) Ś1 K1-3 D1 संक्रुद्धो (for समरे)

10 D2 4 6 om $10^{ab}$ (cf v l 9) — $^{a}$) G3 अथ (for ततो) — $^{c}$) D7 आ*द्रवत् (for अभ्यद्र°)  D2 सुसंरब्ध (for °क्रुद्ध)  S (G5 missing) अभ्यद्रवत संक्रुद्ध

11 $^{c}$) S (G3 damaged, G5 missing) कुरूणां पाण्डवाना च

12 $^{a}$) Dn1 तु, D3-5 7 8 च (for ते) — $^{c}$) Ś1 K1-3 D1 3 6 नान्व(K1 °न्य)पद्यत; Dn2 D4 5 7 8 नाभ्यजानंत (for °पद्यन्त) — $^{d}$) Ś1 K2 D1 काश्चिच्, K1 कश्चिच्, D4 5 7 8 काश्चिच् (for कांचिच्)  Ś1 K1 2 D1 चेष्टा

13 $^{a}$) D1 त्रयामा (for त्रि°)  B (except B1) D1 4-6 T G2-4 चैषा, Dc1 D2 तेषां, Dn1 चैता, Dn2 चैव (for चैषा) — $^{b}$) D5 T G2-4 भयावहा (for °नका) — $^{e}$) D1 युध्यता (for व°)  D1 om (hapl) from तथा up to च (in $13^{f}$)  G1 M वध्यता रजनी चैषा — $^{f}$) S (G5 missing) विशा पते (for विशेषत)

14 Dc1 Dn1 om (hapl) $14^{ab}$ — $^{a}$) B1 3.5 D2 4 5 7 8 T G2-4 घोरा, B2 4 Dn2 अर्ध, D3 घोर, G1 M2 4 5 काळ (for अहो)  B4 D6 रात्र (for रात्रि)  D3 तदा राजन्, D4 5 7 8 तदा जज्ञे (for समाजज्ञे)  M3 काळरात्रिनिभा जज्ञे — $^{b}$) S (G5 missing) तदा (G1 2 M °था) विभो (for विशेषत) — Dc1 transp $14^{cd}$ and $14^{ef}$ followed by $16^{ab}$ — $^{c}$) B4 च (for हि)  D8 निरुच्छ्वासा — $^{d}$) D6 गत (for दीन) — $^{e}$) Dn2 सैन्ये (for चैव) — $^{f}$) T G2 हतास्त्रा (for ग°)  M4 विगतास्त्रा गतेषव

15 G1 M om $15^{ab}$ — $^{a}$) K4 B D (except D1 3 6) तदा (for तथा)  D8 वारयतश् (for पार°)  T G2-4 ते तदा वारयंतश्च — $^{b}$) T G2-4 भ्रमतश् (for ह्री°)  Dn2 D2 4 6 7 मनस्विन (for विशेषत) — $^{c}$) K1 सु (for स्व) — $^{d}$) Ś1 D4 न जग्मु, K1.2 D5 8 नाजहु (D5 ह्यु); Dc1 नाजहुः, D1 2 न जहु (for न जहु)  Ś1 K1 2 D1 ताम् (for स्वाम्)

16 Dc1 reads $16^{ab}$ after $14^{cdef}$ (by transp) — $^{a}$) D2 6 8 अस्त्राणि (for श°)  D8 [आ]शु, D6 [ए]के (for [अ]न्ये) — $^{b}$) D2 नरा (for जना) — $^{cd}$) K3 B Dc1 Dn1 S (G5 missing) transp गजेषु and रथेषु  K2 transp रथेषु and हयेषु  S (G5 missing) मारिष (for भारत)

17 $^{a}$) T G1-4 M1 2 निद्राधा न व्यजानत (G1 °त), M3-5 °धा न व्यचेष्टंत — $^{b}$) Ś1 K1 2 D1.6 का(K1 क)श्चिच्, K3 4 D3 काचिच् (for का°)  Ś1 K1 2 D1.8 G1 चेष्टा (for चेष्टां)  K4 Dn2 D2 5 7 8 नराधिप, D4

C 7 6931
D 7 184 20
K 7 165 20

स्वमायमानास्त्वपरे परानिति विचेतसः ।
आत्मानं समरे जघ्नुः स्वानेव च परानपि ॥ १८
नानावाचो विमुञ्चन्तो निद्रान्धास्ते महारणे ।
योद्धव्यमिति तिष्ठन्तो निद्रासंसक्तलोचनाः ॥ १९
संमर्द्यान्ये रणे केचिन्निद्रान्धाश्च परस्परम् ।
जघ्नुः शूरा रणे राजंस्तस्मिंस्तमसि दारुणे ॥ २०
हन्यमानं तथात्मानं परेभ्यो बहवो जनाः ।
नाभ्यजानन्त समरे निद्रया मोहिता भृशम् ॥ २१
तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभः ।
उवाच वाक्यं बीभत्सुरुच्चैः संनादयन्दिशः ॥ २२
श्रान्ता भवन्तो निद्रान्धाः सर्वे एव सवाहनाः ।
तमसा चावृते सैन्ये रजसा बहुलेन च ॥ २३
ते यूयं यदि मन्यध्वमुपारमत सैनिकाः ।
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् ॥ २४
ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुनः ।
संसाधयिष्यथान्योन्यं स्वर्गाय कुरुपाण्डवाः ॥ २५
तद्वचः सर्वधर्मज्ञा धार्मिकस्य निशम्य ते ।
अरोचयन्त सैन्यानि तथा चान्योन्यमब्रुवन् ॥ २६

---

°धिप, T G2 4 M3-5 जनाधिपा (G2 M3-5 °प), G1 M1 2 महारथा (for नराधिपा) —$^{c}$) B Do1 Dn2 D2 4 5 7 8 M3-5 तानन्ये; Dn1 ततोन्ये, G1 M1 2 स्वानन्ये (for तेऽन्योन्य) G1 M योधा —$^{d}$) K2 B1-3. 5 Do1 D3 प्रैपयंत (Do1 °तो), B4 D6 प्रेपयंतो, Dn1 °यतु, Dn2 D2 4 5 7 8 S (G5 missing) प्रेप(M4 °क्ष)यति (for °यन्त)

18 $^{a}$) B4 Do1 Dn1 समरे (for स्वपरे) K3 4 D2 T G2-4 स्वमायमानांस्त्वप(T G3 4 °नांश्च प, G2 °नान्स म)रे; D6 चेष्टायमानाश्चाप्यन्ये —$^{b}$) G1 M परा (for परान्) Ś1 K3 4 D1 आजौ, Dn1 D2 3 6-8 अति-, T G2-4 अपि (for इति) K1 2 परानाजौ विशेषत —$^{c}$) Dn1 सात्मान, D2 4 5 आत्मन (for आत्मानं) —$^{d}$) D4 घातेन, D3 स्वाश्चैव (for स्वानेव) B2 परा निति, D5 नराधिप B1 स्वानेव परमानिन, S (G5 missing) परान्स्वानेव चापरे

19 $^{a}$) T G3 4 नाराच ये, G2 नाराचेन (for नाना वाचो) Dn2 D4 [ऽ]पि (for वि) —$^{b}$) Dn2 D5 7 8 प्रयु(D5 °यु)द्धास्, D4 युयुधास् (for निद्रान्धास्) T G2-4 महारथा, G1 M विचेतस (for महारणे) — After $19^{ab}$, B Do1 Dn1 ins

1261* अस्माकं च महाराज परेभ्यो बहवो जना ।

—$^{c}$) Ś1 जानंतो, B (except B5) Do1 Dn1 S (G5 missing) तिष्ठंति (B4 °ष्ठामि), Dn2 °तां (for °तो) —$^{d}$) K4 B (except B4) Do1 Dn D2 4 5 7 8 T G1 3 4 M सरक्त (for संसक्त) G2 निद्रांधास्ते महारथा

20 D3 om $20^{ab}$ —$^{a}$) K1 सस्मस्स्यान्ये (sic), K2 ससस्स्यान्ये, K3 समर्थान्ये, K4 Dn2 D2 4-8 संसर्पंतो, B1 2 संसृष्टांश्च, B3 Do1 Dn1 संसृत्यान्यं, B4 संमर्दाच्च, B5 संमुखान्ये; D1 समर्प्यंते; T G2-4 प्रामुह्यते; G1 M1 2 प्रामृद्यत, M3-5 प्रामृज्यत (for संमर्द्यान्ये as in Ś1 only) —$^{b}$) Dn2 D4 5 7 8 ते, D2 तु (for च) Bom ed निद्रांधास्ते तथापरान् —$^{c}$) D2 क्रूरा (for शूरा) K4 Dn2 D2 4 5 7 8 शूरास्, M3-5 केचित् (for राजस्)

21 $^{a}$) K4 D1 वध्यमानं, D6 हन्यमाना (for °मान) Do1 Dn1 तदा, Dn2 D4 7 8 अथ, D3 6 इव (for तथा) —$^{b}$) S (G5 missing) परैश्च (for परेभ्यो) D3 त्रिविधा (for बहवो) — After $21^{ab}$, D3 reads $23^{cd}$ —$^{c}$) D4 om. समरे T G2-4 न हि जानंत (G3 4 °ति) समरे, G1 M न विजानति स° — K4 om $21^{d}$-$22^{b}$

22 K4 om $22^{ab}$ (cf v 1 21) —$^{a}$) M3-5 तेषां तु समभिप्राय —$^{b}$) T G2-4 M3-5 विदित्वा (for विज्ञाय) D4 6 पुरुषर्षभ —$^{d}$) D3 उच्चै (for उच्चैः) Dn2 D3-5 7 8 इव (for दिश)

23 $^{b}$) Ś1 K (K5 missing) B5 D1 3 महारथा (for सवाहना) — D3 reads $23^{cd}$ after $21^{ab}$ —$^{c}$) Ś1 K3 D7 8 सवृते; K4 B Dn D1-3 च वृते (for चावृते) —$^{d}$) G4 तमसा (for रजसा) M3-5 ते (for च)

24 $^{a}$) D4 तदायं, M2 के यूयं (for ते यूय) M3-5 यूयं यदि हि मन्यध्वम् —$^{b}$) T G2-4 भारता, G1 M सयुगात् (for सैनिका) —$^{c}$) M3-5 निमीलयतु D4 5 वात्रैव, G1 M चक्षूंपि (for चात्रैव)

25 $^{a}$) D5 G3 ततो निद्राविनिश्रांताश् —$^{b}$) S (except G3 4, G5 missing) चद्रे चाभ्युदिते —$^{c}$) D1-3 M3-5 ससाध(M5 °द)यिष्यत(D3 °तो), M1 2 संसादयिष्यथ —$^{d}$) K4 संग्रामं (for स्वर्गाय) D3 पांडवै, T G2 -पुगवा

26 $^{a}$) K4 यद् (for तद्) B1 धर्मज्ञ (for °ज्ञा)

चुकुशुः कर्ण कर्णेति राजन्दुर्योधनेति च ।
उपारमत पाण्डूनां विरता हि वरूथिनी ॥ २७
तथा विक्रोशमानस्य फल्गुनस्य ततस्ततः ।
उपारमत पाण्डूनां सेना तव च भारत ॥ २८
तामस्य वाचं देवाश्च ऋषयश्च महात्मनः ।
सर्वसैन्यानि चाक्षुद्राः प्रहृष्टाः प्रत्यपूजयन् ॥ २९
तत्संपूज्य वचोऽक्रूरं सर्वसैन्यानि भारत ।
मुहूर्तमस्वपन्राजञ्श्रान्तानि भरतर्षभ ॥ ३०
सा तु संप्राप्य विश्रामं ध्वजिनी तव भारत ।
सुखमाप्तवती वीरमर्जुनं प्रत्यपूजयत् ॥ ३१
त्वयि वेदास्तथास्त्राणि त्वयि बुद्धिपराक्रमौ ।
धर्मस्त्वयि महाबाहो दया भूतेषु चानघ ॥ ३२
यच्चाश्वस्तास्तवेच्छामः शर्म पार्थ तदस्तु ते ।
मनसश्च प्रियानर्थान्वीर क्षिप्रमवाप्नुहि ॥ ३३
इति ते तं नरव्याघ्रं प्रशंसन्तो महारथाः ।
निद्रया समवाक्षिप्तास्तूष्णीमासन्विशां पते ॥ ३४
अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे ।
गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ ॥ ३५

C 7 8399
B 7 184 38
K 7 185 37

—$^{b}$) K3 Dn D2 3 5 6 विशां पते, K4 M1 2 निशा (K4 °सा)म्य ते (for निशम्य ते) —$^{c}$) G1 अरोचयंत D4 सैन्यस्य, T G2–4 M3–5 सैन्यास्ते (for नि) —$^{d}$) D4 5 7 8 तदा (for तथा)

27 $^{a}$) S (G5 missing) कर्ण कर्णेति चाक्रंद (G1 M °क्रंदन्, G2 °क्रन्य) —$^{b}$) Dn1 D6 तथा, D2 राजा (for राजन्) K3 सुयोधनेति, S (G5 missing) दु:शासनेति — D3 om 27$^{cd}$ —$^{c}$) T G3 4 उपारमत्कौरवाणां — K1 D2 om. (hapl) 27$^{d}$–28$^{c}$, B3 reads the same on marg —$^{d}$) K4 G1 M1 2 विरया, G2 विरुद्धा (for विरता)

28 K1 D2 om 28$^{abc}$ (cf v l 27) B3 reads 28$^{abc}$ on marg D8 transp 28$^{ab}$ and 28$^{cd}$ —$^{a}$) D5 6 8 तथा वि(D5 °शाति)क्रोशतस्तस्य —$^{b}$) K4 B D (D2 om.) फाल्गुनस्य —$^{d}$) D4 6 7 तत्र (for तव) D8 मा मेना तत्र भारत

29 K4 D1 om (hapl) 29$^{a}$–30$^{b}$ D2 om. (hapl) 29$^{a}$–31$^{b}$ M3 om 29 D4 reads 29$^{a}$–30$^{b}$ twice —$^{a}$) D7 तम् (for ताम्) —$^{b}$) Ś1 K3 ऋषयश्चाप्य (K3 °भ्य)पूजयन् —$^{c}$) K1 B5 च क्षुद्र (B5 °द्रा), B1–3 Dn D8 चाक्षुद्रा (for °द्रा) B1 सर्वसैन्यानां च क्षुद्रा (sic). —$^{d}$) K1 प्रहृष्ट, Dc1 सहृष्टा Ś1 K3 प्रहृष्टाश्च महात्मन ; D6 °ष्टाश्चाभ्यपूजयन्.

30 For the repetition in D4, of v. l. 29 K4 D1 om 30$^{ab}$, D2 om 30 (for both, cf v l 29) M3 reads 30$^{ab}$, followed by repetition of 30$^{c}$–31$^{d}$, after 31 —$^{a}$) B D4 (both times) 5 7 8 सपूज्य च (for तत्संपूज्य) B3 क्लिष्ट, S (G5 missing) सौम्यं (for ऽक्रूर) — D5 om (hapl) 30$^{c}$–31$^{b}$ —$^{d}$) D6 तत्रैव (for श्रान्तानि).

31 For the repetition in M3, cf v l 30 D2 5 om 31$^{ab}$ (cf v l 29, 30) —$^{a}$) G1 M1 2 3 (both times) 4 5 त (for स) D6 T G3 4 विश्रांतिं (for विश्राम) —$^{b}$) K4 भारते —$^{c}$) B1 Dc1 Dn2 प्राप्तवती, D4 5 7 8 आप्नु° (for आप्त) Dn2 कामम् (for वीरम्) —$^{d}$) D7 om मर्जुन K1 Dc1 D3 5 M1 2 5 प्रत्यपूजयन्

32 $^{a}$) D4 G1. 2 M3–5 देवास् (for वेदास्) —$^{b}$) Dn2 D2 4 5 7 8 M3–5 त्वयि बुद्धि (D2 °द्धिः) पराक्रम° —$^{c}$) Dn2 D4 5 7 8 शर्म, D2 शमस् (for धर्मस्) —$^{d}$) G1 यदा (for दया)

33 $^{a}$) D2 4–8 यथा (for यच्च) D2 4 5 7 8 इच्छाया (D2 °या), T G2–4 °त (for °म) D8 यच्चाशास्सि महेष्वास —$^{b}$) D4 पार्थस् D4 5 7 8 तथास्तु (for तदस्तु) K1 D3 7 मे (for ते) —$^{c}$) T G2–4 M3–5 मानसांश्च (for मनसश्च) D3 6 तु (for च)

34 $^{a}$) D2 तं ते (by transp), D4 5 ते ते, D7 ते वै, D8 चैनं D4 व्याघ्र, D5 M3–5 व्याघ्रा (for व्याघ्रं) —$^{b}$) D4 प्राशशंत (sic), D5 प्राशशंस, M3–5 प्रशंसति. —$^{c}$) M1. 2 निद्राया D3 निद्रया वशमाक्षिप्तास्, G1 °या समवक्षिप्तास् — After 34, S (G5 missing) ins 1263*

35 $^{a}$) D4 5 7 8 -पृष्ठे तु (for पृष्ठेषु) D6 चान्येषु (for चाप्यन्ये) D2 अश्वपृष्ठगता केचिद् — Ś1 K (K5 missing) D1 om (hapl) 35$^{bc}$ —$^{b}$) B1 पृष्ठेषु च, S (G5 missing) नीळेष्वथ (G1 M °ळेषु च) (for नीडेषु च) —$^{d}$) Ś1 K3 स्मापरे, S (G5 missing) च तथा (for चापरे).

C 7 8400
B 7 164 39
K 7 165 40

सायुधाः सगदाश्चैव सखड्गाः सपरश्वधाः ।
सप्रासकवचाश्चान्ये नराः सुप्ताः पृथक्पृथक् ॥ ३६
गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुरूषितैः ।
निद्रान्धा वसुधां चक्रुर्घ्राणनिःश्वासशीतलाम् ॥ ३७
गजाः शुशुभिरे तत्र निःश्वसन्तो महीतले ।
विशीर्णा गिरयो यद्वन्निःश्वसद्भिर्महोरगैः ॥ ३८
समां च विषमां चक्रुः खुराग्रैर्विक्षतां महीम् ।
हयाः काञ्चनयोक्त्राश्च केसरालम्बिभिर्युगैः ।
सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्वशः ॥ ३९
तत्तथा निद्रया भग्नमवाचमस्वपद्बलम् ।
कुशलैरिव विन्यस्तं पटे चित्रमिवाद्भुतम् ॥ ४०
ते क्षत्रियाः कुण्डलिनो युवानः
परस्परं सायकविक्षताङ्गाः ।
कुम्भेषु लीनाः सुषुपुर्गजानां
कुचेषु लग्ना इव कामिनीनाम् ॥ ४१
ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।

---

36 $^{a}$) G1 M1.2 मशरा (for सायुधा) B1 Dc1 D5.7.8 M3-5 सागदाश् (for स) S (G5 missing) चान्ये (for चैव) — $^{b}$) Dc1 Dn2 D1-5.7.8 सपरस्वधा, T G2-4 °श्वधा (for °श्वधा) — $^{c}$) D3 सप्रासाश्च सकवचा — $^{d}$) D3 सहस्रश (for पृथक्पृथक्) Dn2 om the second पृथक्

37 $^{a}$) Ś1 K3 B2 गजास्ते, K1.2.4 D1 गजस्था, D3 गजाश्च (for गजास्ते) S (G5 missing) ते गजा भोगिभोगाभैर् — $^{b}$) K (K5 missing) Dn2 D2.5.6.8 भूषितै, B1-3 Dc1 -मदितै, B4.5 Dn1 G3.4 गुठितै, T G1.2 M कुठितै (for रूषितै) — $^{c}$) M3-5 पृथिवीं (for वसुधां) — D1 om (hapl) 37$^{d}$–39$^{a}$ — $^{d}$) Dn2 प्राण (for घ्राण) K1 D2.4-6 G3.4 -निश्वास T G1.2 M -शीतला

38 D1 G1 M om 38 (for D1, cf v l 37) G3 damaged — $^{a}$) B1.3-5 Dc1 Dn1 सुप्ता (for गजा). B1.3-5 Dc1 ते तु (for तत्र) B2 गजा सुप्ता शुशुभिरे — $^{b}$) B (except B4) D3-5.7 G4 निश्वसंतो D2 निश्वसन्ति करामके — $^{c}$) K4 B Dc1 Dn D3-8 विकीर्णा; D2 सर्पद्भिर् (for विशीर्णा) — $^{d}$) B (except B4) Dc1 D3-5 G4 निश्वसद्भिर् T G2.4 इवोरगै

39 D1 om 39$^{a}$ (cf v. l 37). Dc1 om 39$^{abcd}$ — $^{a}$) D4.5.7.8 समांश्च. D4.5 विषमांश्च — $^{b}$) D5 क्षुराग्रैर्. K3 B3 D1.2.5.6 विक्षितां; B3.5 Dn2 D4 विक्षतां; G3 विषमां (for विक्षतां). — $^{c}$) Ś1 K1-3 D1 -घोणाश्च (for -योक्त्राश्च). K4 B Dn D2.3 S (G5 missing) हि (for च) — $^{d}$) D3 केशरालंबिभिर्युगै. — 39$^{ef}$ is partly damaged in G3 — $^{e}$) Ś1 K1-3 D1 सुषु( D1 प्रसु )सास् (for सुषुपुस्) — $^{f}$) T G2-4 सर्वत (for °श) — After 39, K4 B Dc1 Dn1 D3 ins

1262* एवं हयाश्च नागाश्च योधाश्च भरतर्षभ ।
युद्धाद्विरम्य सुषुपु श्रमेण महतान्विता ।
[ K4 om line 1 D3 om line 2 ]

40 D3 transp 40$^{ab}$ and 40$^{cd}$ — $^{a}$) Dn2 D4.5 त (for तत्) K4 B Dc1 Dn1 D3.4-7 मग्नम्, Dn2 रुग्णम्, D3 रुग्नम् (for भग्नम्) — $^{b}$) Ś1 K1-3 D1 प्रदोषे तु, B1-4 Dc1 Dn2 अचोधम्; D1 अयाचम् (for अवा°) K4 B5 Dn1 D2.8 अवोर्च (D3 °यत्न) प्रास्वपद्भृश (B. Dn1 D3 °द्बल); D5 रयोपस्थं स्वपद्बल, S (G5 missing) तद्ब (G1 M विब)भौ निस्वनवल — $^{c}$) Ś1 K1-3 D1 सन्यस्तं, D4 न्य° (for वि°) K4 B Dc1 Dn1 D6 S (G5 missing) कुशलै शिल्पिभिर्न्यस्तं — $^{d}$) B1 आहित, B4 Dc1 D6 S (except G3.4, G5 missing) अर्पित (for अद्भुतम्)

41 B2.4.5 Dc1 Dn1 D2.4 om 41 — $^{b}$) K1 D5.7.8 -विक्षिताङ्गा — $^{c}$) D3 लग्ना (for लीना) K1.2 प्रसुषुपुर् (for सुषु°) — $^{d}$) B1.3 (orig) अंकेषु, B3 (marg) स्तनेषु (for कुचेषु) Ś1 K1.2 B1 D1.7.8 लीना (for लग्ना) — For 41, S (G5 missing) (which ins it after 34) subst

1263* वीरा वारणकुम्भेषु सुषुपुर्युद्धकर्शिता ।
रात्रौ रविपरिश्रान्ता कामिनीनां कुचेष्विव ।
[ (L 1) G1 M ते वीरा गजकुंभेषु (for the prior half). — (L. 2) G1 M स्तनेषु (for कुचेषु) ]

42 Quoted in the Kāvyaprakāśa under x. 88. G1 M1.2 read 42 after 45; M3-5 after 49. — $^{c}$) G3 जनानंदेन (for नेत्रा°) — After 42, B Dc1 Dn D2-5.7.8 ins

1264* दशशताक्षककुब्दरिनि सृत
किरणकेसरभासुरपिञ्जर ।

नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ ४२
ततो मुहूर्ताद्भगवान्पुरस्ताच्छशलक्षणः ।
अरुणं दर्शयामास ग्रसञ्ज्योतिःप्रभं प्रभुः ॥ ४३
अरुणस्य तु तस्यानु जातरूपसमप्रभम् ।
रश्मिजालं महच्चन्द्रो मन्दं मन्दमवासृजत् ॥ ४४
उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मयः ।
पर्यगच्छञ्शनैः सर्वा दिशः खं च क्षितिं तथा ॥ ४५
ततो मुहूर्ताद्भुवनं ज्योतिर्भूतमिवाभवत् ।
अप्रख्यमप्रकाशं च जगामाशु तमस्तथा ॥ ४६
प्रतिप्रकाशिते लोके दिवाभूते निशाकरे ।
विचेरुर्न विचेरुश्च राजन्नक्तंचरास्ततः ॥ ४७
बोध्यमानं तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः ।
बुबुधे शतपत्राणां वनं महदिवाम्भसि ॥ ४८
यथा चन्द्रोदयोद्धूतः क्षुभितः सागरो भवेत् ।

C 7 8417
B 7 184 53
K 7 185 36

तिमिरवारणयूथविदारण
समुदियादुदयाचलकेसरी ।
हरवृषोत्तमगात्रसमद्युति
स्मरशरासनपूर्णसमप्रभ । [5]
नववधूस्मितचारुमनोहर
प्रविसृत कुमुदाकरबान्धव ।

[ (L 1) Dc1 Dn -ककुम्दर( Dc1 [before corr ] Dn1 °वि )निःसृत°, D3 -कुकुभ्विनिःसृत (for -ककुम्दरिनिःसृत ) D2 4 5 ततो दशशताक्षस्य ककुम्दरिनि°( D4 ककुर्भाद्विनि° )सृत — (L 2) B Dn2 -केशर B भास्वर, D2 नाल्वि, D4 5 7 8 -भारवि (for -भासुर-) — (L 3) Dn1 D5 -यूथनिवारण, D4 मूर्धनिवारणी (for -यूथविदारण°) — (L 4) B (except B4) -केशरी — (L 5) Dn2 D4 4 5 -वृषोदर- (for °त्तम-) — (L 7) B (except B5) D8 स्मर- (for स्मित ) — D5 reads line 8 twice. — (L 8) B1 D2 प्रविसृत, Dn2 D4 5 (second time) प्रविकसत्, D7 प्रतिमर° (for प्रविसृत ) D2 5 (second time) -सुंदर (for -बान्धव ) ]

D2 5 cont

1265* प्रमदयन्वसुधा हि सुधाकर ।

43 D2 om. 43$^{ab}$, D4 reads it after 45 — $^{a}$) M4 मुहूर्तं (for °र्ताद्) — $^{b}$) D6 तुदयन् (for पुरस्तात्). D3 लांछन· (for लक्षण.). — Dc1 Dn1 om. (hapl.) 43$^{cd}$. — $^{c}$) D2 भासमानं; S (G5 missing) आरुण्यं (G2 °र्णं) (for अरुणं). — $^{d}$) S1 ग्रसां; K2 ग्रसं (for ग्रसन्) K4 B1 D (except D1, Dc1 Dn1 om ) S (G5 missing) ज्यो( D4 यो )तिःप्रभां; B1 3 4 ज्योतिःप्रभा (for ज्योतिःप्रभ ) D5 पुन (for प्रभु )

44 $^{a}$) G1 3. 4 M आरुण्यस्य (for अरुणस्य) Dn2 D4 5 7 8 च, D3 [अ]नु (for तु) M3-5 तत्र (for तस्य ) S (G5 missing) [आ]सीज् (for [अ]नु) — $^{b}$) B6 D4 5 -समप्रभ, — $^{c}$) K1. 2 D1 च तच् (for महच्) — $^{d}$) Dc1 Dn2 D1. 5 मद- (for मन्दं ) Dn2 D5-8 T G1-4 M1 4 इवासृजत् (for अवा° )

45 $^{b}$) S1 K1-3 Dn2 D1. 4-6 ततस्ते, D7 8 तमिस्र (for तमस्ते) — $^{c}$) K2 पर्यगच्छद्, Dn2 प्रत्यगच्छन् S1 K3 8 B1 D1 दिश, K1 दिशा, D5 lacuna (for शनैः ) S (G5 missing) पर्यगच्छ( M3-5 °भ्रज )त शनकैर् — $^{d}$) S1 K1 3 D1 द्विजा, B1 शनै (for दिश ) G1 M द्या (for च ) D1. 3 यथा (for तथा ) — After 45, G1 M1. 2 read 42, while D4 reads 43$^{ab}$ after it

46 D1 om (hapl) 46$^{ab}$ — $^{a}$) S2 D3 7 भगव- (D2 वा )न्, K1 2 D1 गगन (for भुवनं) — K2 om 46$^{bc}$ — $^{c}$) S1 K1 3 D1 3-8 अप्रख्यातिं (D4 5 °तं ) चाप्रकाशं, D2 प्रत्याख्यात प्रकाशं च — $^{d}$) B1 Dc1 D3 6 अस्त, D1 अश्रु (sic) (for आशु ) M3 तमस् (for तमस्) G2 तदा (for तथा)

47 $^{a}$) B1 अति (for प्रति ) B3 सुप्रतीकाशिते लोके — $^{b}$) S (G5 missing) उदिते च (for दिवाभूते) — $^{c}$) D3. 6 विरुव( D6 °दं )तो (for विचेरुर्न) G1 M1 2 दिवि (for न वि ) D6 से (for च) D2 निरुपतो न चेरुश्च — $^{d}$) T G2 रणे (for राजन्) K1. 2 4 D1 M3-5 तथा (for तत ) D8 राक्षसाश्च शिवास्तत

48 $^{ab}$) D6 (before corr as in text) वध्यमानं (for बोध्य°) D4 7 8 च (for तु) T G1-4 M1 2 transp. सैन्यं and राजन्. M3-5 transp तत्सैन्यं and राजन्. — $^{d}$) K4 वनं महदिवांभसि; B Dc1 D3. 6 वनं सूर्यांशुभिर्य( Dc1 °भिस्त )था.

49 $^{a}$) K1 2 D1 यदा, D3. 6 G3 तथा (for यथा). Dn2 D1 4 5 चंद्रोदयोद्भूत — S1 K1-3 D1. 3-5 G4 om (hapl) 49$^{bc}$ — $^{b}$) K4 B Dn D2 7 8 [s]भवत् (for भवेत्) — $^{c}$) Dn1 D6 यथा (for तथा) Dn1 D7 8 योधो( D7 °धा )दयोद्धूत, Dn2 चद्रोदयोद्भूत — $^{d}$) T G2 3 क्षुभित स (for स बभूव) G4 om. बभूव — After 49, M3-5 read 42

C 7 6417
B 7 184 55
K 7 185 56

तथा चन्द्रोदयोद्धूतः स बभूव बलार्णवः ॥ ४९
ततः प्रववृते युद्धं पुनरेव विशां पते ।
लोके लोकविनाशाय परं लोकमभीप्सताम् ॥ ५०

इति श्रीमहाभारते द्रोणपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## १६०

संजय उवाच ।
ततो दुर्योधनो द्रोणमभिगम्येदमब्रवीत् ।
अमर्षवशमापन्नो जनयन्हर्षतेजसी ॥ १
न मर्षणीयाः संग्रामे विश्रमन्तः श्रमान्विताः ।
सपत्ना ग्लानमनसो लब्धलक्ष्या विशेषतः ॥ २
तत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया ।
त एते परिविश्रान्ताः पाण्डवा बलवत्तराः ॥ ३
सर्वथा परिहीनाः स्म तेजसा च बलेन च ।
भवता पाल्यमानास्ते विवर्धन्ते पुनः पुनः ॥ ४
दिव्यान्यस्त्राणि सर्वाणि ब्रह्मास्त्रादीनि यान्यपि ।

---

50 M3 om 50 —$^{a}$) K1 2 D1 तदा (for तत) —$^{c}$) T G3 4 लोकालोक, G1 M1 2 4 5 कालेलोक (for लोके लोक-) G8 om विनाशाय —$^{d}$) K1 2 4 Dn2 D1-3 6-8 लोक प( D8 पा )र (by transp), B1 4 Dc1 T G1-4 M1 4 5 परलोकम् D2 अभीप्सया D4 लोकं च परमेप्सया, D5 राजन्दुर्मंत्रिते तव

Colophon Ś2 K5 G5 missing — *Sub parvan* Editions द्रोणवध — *Adhy name* Ś1 K (K5 missing) B Dc1 Dn D2-8 G1 M1 2 रात्रियुद्धं, D1 रात्रियुद्धे घटोत्कचवध, Bom ed रात्रियुद्धे सैन्यनिद्रा — *Adhy no* (figures, words or both) Dn1 185, D2 184, T G2 8 180, G1 M1 2 178, G4 179, M3-5 177. — *Śloka no* Dc1 54, Dn1 55.

### 160

☞ This adhy. is missing in K5 G5 (cf. v. l. 7. 125. 14; 137. 9).

1 Ś2 missing up to मन्यसे (in 13$^{a}$) (cf. v. l. 7. 158 8) D4 7 8 om the ref —$^{a}$) D5 राजा (for द्रोणम्) —$^{b}$) Ś1 K (K5 missing) D3 5 6 उपगम्य, D5 द्रोण गत्वा (for अभिगम्य) B Dc1 transp इदं and अब्रवीत् — B4 om 1$^{c}$-2$^{d}$ —$^{d}$) D3 5 7 8 तेजसा (for °सी)

2 Ś2 missing (of v l 1) B4 om 2 (of v l 1) Before 2, Ś1 K (K5 missing) B (B4 om) Dc1 Dn2 D1-8 T G3-4 M ins दुर्योधन उवाच, Dn1 संजय उवाच —$^{a}$) G1 M1 2 समरे (for संग्रामे) D2 निशा प्रवृत्ते संग्रामे —$^{b}$) B1 2 D3 6 G1-3 M1 2 विश्राम्य (D3 °श्रम्य ; D6 G3 °श्राम )त ; T1 विश्राम्यत (for विश्रमन्त) K1 D6 सम( D6 °मा )न्वित, D3 G2 समाधि (G2 °हि )ता, D4 श्रियान्विता, G1 श्रमाश्रिता (for °न्विता) — D2 4 repeat 2$^{cd}$ after 8$^{ab}$ —$^{c}$) D4 (second time) सपत्नान् (for °त्ना) K2 D7 8 म्लान, D7 8 तात (for ग्लान) D2 (second time) संपन्ना ग्लानमनस (sic) —$^{d}$) K1 2 4 B3 Dn D2 2 (first time) 4 (both times) 5 6 8 S (G5 missing) लब्ध लक्षा, B1-3 Dc1 °लक्षैर् (for °लक्ष्या) D2 (second time) पाढवानभिरक्षसि

3 Ś2 missing (of v l 1) —$^{a}$) B1. 3 Dn D2-5. 7 8 यत्; D6 तं (for तत्) M3-5 [अ]मर्पितम् (for मर्षि°) B4 अमर्पतमस्माभिर् (sic) —$^{c}$) B5 तत्र ते, G1 M त्व( M1. 2 त )त्कृते (for त एते). Ś1 K1-3 Dn D1. 4. 5. 7. 8 त( K1. 2 D1 य )त एते प( D8 °तप )रिश्रांताः; G3 त एते परितः श्रांताः.

4 Ś2 missing (of. v l 1). —$^{a}$) Dc1 D4. 7 8 S (except G2, G5 missing) परिहीणा (for °हीना) K1 स, B4 Dn1 च, S (G5 missing) तु (for स) D6 अमर्षपरहीना स्म —$^{c}$) S (G5 missing) तु (for ते) —$^{d}$) Dn2 D2 4 5 7 8 वर्धंते स्म, D6 विवर्धंत (for °र्धन्ते) S (G5 missing) मामका दीनचेतस

5 Ś2 missing (of v l 1) —$^{a}$) K1 B3 Dn2 D1. 3 4 6 8 दिव्याणि (for °नि) —$^{b}$) K1 B Dc1 ब्रह्मा

तानि सर्वाणि तिष्ठन्ति भवत्येव विशेषतः ॥ ५
न पाण्डवेया न वयं नान्ये लोके धनुर्धराः ।
युध्यमानस्य ते तुल्याः सत्यमेतद्ब्रवीमि ते ॥ ६
ससुरासुरगन्धर्वानिमाँल्लोकान्द्विजोत्तम ।
सर्वास्त्रविद्भवान्हन्याद्दिव्यैरस्त्रैर्न संशयः ॥ ७
स भवान्मर्षयत्येनांस्त्वत्तो भीतान्विशेषतः ।
शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यताम् ॥ ८
एवमुद्धर्षितो द्रोणः कोपितश्चात्मजेन ते ।
समन्युरब्रवीद्राजन्दुर्योधनमिदं वचः ॥ ९
स्थविरः सन्परं शक्त्या घटे दुर्योधनाहवे ।
अतः परं मया कार्यं क्षुद्रं विजयगृद्धिना ।
अनस्त्रविदयं सर्वो हन्तव्योऽस्त्रविदा जनः ॥ १०
यद्भवान्मन्यते चापि शुभं वा यदि वाशुभम् ।
तद्वै कर्तास्मि कौरव्य वचनात्तव नान्यथा ॥ ११
निहत्य सर्वपाञ्चालान्युद्धे कृत्वा पराक्रमम् ।
विमोक्ष्ये कवचं राजन्सत्येनायुधमालभे ॥ १२
मन्यसे यच्च कौन्तेयमर्जुनं श्रान्तमाहवे ।
तस्य वीर्यं महाबाहो शृणु सत्येन कौरव ॥ १३
तं न देवा न गन्धर्वा न यक्षा न च राक्षसाः ।
उत्सहन्ते रणे सोढुं कुपितं सव्यसाचिनम् ॥ १४
खाण्डवे येन भगवान्प्रत्युद्यातः सुरेश्वरः ।
सायकैर्वारितश्चापि वर्षमाणो महात्मना ॥ १५

C B K

---

दीनि च, K4 Dn2 D4 °स्त्राणि च (D4 ह) (for °स्त्रादीनि) K1 यानि (sic) (for यानि) K4 B1 2 ह, B2-. Dc1 S (G5 missing) च (for [अ]पि) Dn1 ब्रह्मास्त्रादीतराणि च, D2 ब्रह्मादीनि तत्र प्रभो — c) D7 om. from णि तिष्ठन्ति up to गन्धर्वा (in 7a) — d) D3 न मशय (for विशेषत)

6 Ś1 missing (cf v 1 1) D7 om 6 (cf. v 1 5) — a) G2 न पाडवेयान्हि विना — b) Dc1 नान्ये सर्वे, G2 लोके नान्ये (by transp), M3-. अन्ये लोके K2 धनुर्धर G1 M1 2 नान्यो लोके धनुर्धर — c) D4 तुल्य — d) D1 स ते तुल्यमन्याम * (sic)

7 Ś1 missing (cf v 1 1) D7 om up to गन्धर्वा (cf v 1 5) G1 M om 7 — a) D4 T G2 सासु (D4 यासु) रामर-, G3 4 सासुरासुर (for ससुरा°) — b) Dn2 om from लोका up to त्वत्तो (in 8b)

8 Ś1 missing (cf v 1 1) Dn2 om up to त्वत्तो (cf v 1 7) — a) M3-. हर्षयति (for म°) K4 B D (except D1, Dn2 om.) एतास् (for एनास्) — b) D4 5. 7 8 त्वतो (sic) (for त्वत्तो) B1 Dc1 हीनान् (for भीतान्) S (G5 missing) तव तु (G1 M1 2 °वानु) ल्यानवेत्य च — After 8ab, D2 4 repeat 2cd — c) Ś1 ते, K1 2 D1 तु, D4 lacuna (for वा) — d) Dn1 D2 भाग्यत (for -भाग्यताम्)

9 Ś1 missing (cf. v 1 1) Before 9, MSS ins संजय उवाच D6 reads 9 on marg — a) D3 दुद्र्पितो, S (G5 missing) दक्सतो (for उद्धर्षितो) D1 स एव घर्षितो द्रोण — b) K4 B Dc1 Dn1 D1 S (G5 missing) च सुतेन (for चात्मजेन)

10 Ś1 missing (cf. v 1 1) Dn2 om 10 Before 10, D5 (marg) M3-5 ins द्रोण उवाच — a) Ś1 गृद्धिणा, B1 (marg) गधिना, B2 8 Dc1 D4 7 -गा द्विना, S (G5 missing) काक्षिणा (for -गृद्धिना) — c) D8 लोके (for सर्वो) — f) Dn1 पुन (for जन-)

11 Ś1 missing (cf v 1 1) — a) Ś1 K1-3 तद् (for यद्) D3 4 7 8 वा (for च) — c) K1 2 तद्वत्, D2 तद्धि, D3 तत्तत् (for तद्वै) D6 तत्कर्तास्मि तु कौरव्य — d) D7 om (hapl) त्तव ना

12 Ś1 missing (cf. v 1 1) G1 M om 12 — a) Bom ed पचालान् — b) D5 G4 पराक्रम — 12cd is partly damaged in G8 — c) D4 वचन (for कवच)

13 Ś1 missing up to मन्यसे (cf. v 1 1) — b) Ś1 K3 प्राघुम् (for श्रान्तम्) Dn1 अर्जुनं श्रांतवाहन — K2 om 13cd — c) B1 वीर्यान् (for वीर्यं)

14 a) Ś1 न त (by transp), K2 4 तेन D6 त देवा न च गंधर्वा — b) T G1-4 M1 2 नासुरा न च पन्नगा (G1 M1. 2 राक्षसा), M3-5 राक्षसा असुरा न च — c) B4 उत्सहेरन् (for °हन्ते) B Dc1 जेतु (for सोढु) — d) B1 दर्पितं (for कुपितं)

15 a) K1 G1 M1 2 पाडवे (sic) (for खाण्डवे) — c) B2 4 6 शायकैर्

C 7 6434
B 7 165 16
K 7 165 16

यक्षा नागास्तथा दैत्या ये चान्ये बलगर्विताः ।
निहताः पुरुषेन्द्रेण तच्चापि विदितं तव ॥ १६
गन्धर्वा घोषयात्रायां चित्रसेनादयो जिताः ।
यूयं तैर्ह्रियमाणाश्च मोक्षिता दृढधन्वना ॥ १७
निवातकवचाश्चापि देवानां शत्रवस्तथा ।
सुरैरवध्याः संग्रामे तेन वीरेण निर्जिताः ॥ १८
दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
विजिग्ये पुरुषव्याघ्रः स शक्यो मानुषैः कथम् ॥ १९
प्रत्यक्षं चैव ते सर्वं यथा बलमिदं तव ।
क्षपितं पाण्डुपुत्रेण चेष्टतां नो विशां पते ॥ २०

तं तथाभिप्रशंसन्तमर्जुनं कुपितस्तदा ।
द्रोणं तव सुतो राजन्पुनरेवेदमब्रवीत् ॥ २१
अहं दुःशासनः कर्णः शकुनिर्मातुलश्च मे ।
हनिष्यामोऽर्जुनं संख्ये द्वैधीकृत्याद्य भारतीम् ॥ २२
तस्य तद्वचनं श्रुत्वा भारद्वाजो हसन्निव ।
अन्ववर्तत राजानं स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ २३
को हि गाण्डीवधन्वानं ज्वलन्तमिव तेजसा ।
अक्षयं क्षपयेत्कश्चित्क्षत्रियः क्षत्रियर्षभम् ॥ २४
तं न वित्तपतिर्नेन्द्रो न यमो न जलेश्वरः ।
नासुरोरगरक्षांसि क्षपयेयुः सहायुधम् ॥ २५

---

16 Dn2 om. 16$^{ab}$ — $^{a}$) B3 देवा (for यक्षा) D3 6 चान्ये (for दैत्या) — $^{b}$) K1 2 4 B4 D1 3 6 दर्पिता (for गर्विता) Ś1 K3 ये चान्ये बलवत्तरा — $^{c}$) K1 D3. 7 निहिता, K2 निहत — $^{d}$) D4 5 7 8 तव (for तच्च) D4 5 7 8 तथा (for तव)

17 Dn2 om. (hapl.) 17$^{a}$–20$^{b}$ — $^{b}$) G2 नृपा (for जिता) — $^{c}$) K2 D4 ते (for तैर्) — $^{d}$) D1 धृत (for दृढ-) K1 4 B1 2 Dn1 D3–8 T G1–4 M3 -धन्विना (for -धन्वना) — After 17, S (G5 missing) reads 20

18 Dn2 om. 18 (cf. v l 17) — $^{a}$) Ś K1–3 D1 नाम, S (G5 missing) चैव (for चापि) — $^{b}$) G1 M1 2 सदा, M3 4 तदा (for तथा) — $^{c}$) D4 5 शरैर् (for सुरैर्) D2 स्वधर्म (for अवध्या) — $^{d}$) S (G5 missing) पाण्डवेन विनिर्जिता

19 Dn2 om 19 (cf v l 17) — $^{a}$) D3 6 विजिज्ञे (for °ग्ये) D4 5 -व्याघ्र S (G5 missing) जि(G1 M1. 2 ह्र)तान्येकेन वीरेण — $^{d}$) Ś K (K5 missing) D1 मानवै (for मानुषै)

20 Dn2 om 20$^{ab}$ (cf v l. 17) S (G5 missing) reads 20 after 17 — $^{a}$) T G2–4 चापि; G1 M तच्च (for चैव) M1 2 मे (for ते) B1 D5 सर्वे (for सर्वं) — $^{b}$) D3 वच (for तव) D5 यथा तव बलमिम — $^{c}$) B Dc1 क्षयितं (for क्षपित) — $^{d}$) Dn2 D2 4 5. 7 8 M1 2 चेष्टमानं (M1 2 °नो) (for °ता नो) S (G5 missing) यथाबलं (for विशा पते)

21 Before 21, MSS ins संजय उवाच — $^{a}$) B (except B1) तदा (for तथा) Ś K (K5 missing) D1. 6 स, B1 [क्ष]ति-, Dn D2 4. 5 7 8 वै, T G2–4 वि (for [क्ष]भि-) Dc1 त तथा प्रतिशसवम्, D3 तथा तं च प्र° — $^{b}$) Ś2 B1 G4 तथा, B5 यथा (for तदा)

22 Before 22, M3–5 ins दुर्योधन — $^{b}$) Ś2 शकुनिश्चैव सौबल — $^{c}$) Ś K1 2 क्षपि(Ś2 K1 °यि)ष्यामो (for हनि°) G1 2 M1–3 संखे, G4 सघे (for संख्ये) — $^{d}$) K3 B Dc1 Dn2 द्विधा कृत्वा (for द्वैधीकृत्य) D7 8 अथ (for अद्य) K4 D1 3 6 द्वैधीकृत्वाथ वाहिनीं, T G2–4 M3–5 द्विधा कृत्वाच वाहिनीं, G1 M1. 2 द्विधा कृत्वा वरूथिनीं — After 22, S (G5 missing) ins

1266* तिष्ठ स त्व महाबाहो नित्य शिष्य प्रियस्तव ।

[G1 M तिष्ठस्व (for तिष्ठ स) ]

23 $^{c}$) D6 अभ्यवर्तत (for अन्व°) — D4 om. (hapl ) 23$^{d}$–24$^{a}$ — $^{d}$) D3 स्वस्तीति (for तेऽस्त्विति) Ś1 K3 स (for च) D6 7 स्वस्तीति चाब्रुवन्

24 D4 om 24$^{a}$ (cf. v l. 23) — $^{a}$) D7 गाजिव- (for गाण्डीव-) — $^{c}$) B1 2 क्षययेत्, D4 क्षपते (for °येत्) D6 अजय्यं न जयेत्कश्चित् — $^{d}$) B4 पुरुषर्षभं, Dn2 D3. 5 7 T G3 4 क्षत्रियर्षभ (Dn2 D3 °भः) D4. 8 G2 क्षत्रिय क्षत्रियर्षभ

25 $^{d}$) Ś1 K3 B1 महारथ, Ś2 K1 2 D1 महायुध; T G2–4 च (G2 स) सायुधा, G1 M स (M3–5 च) सायुध (for सहायुधम्)

26 $^{a}$) S (G5 missing) मूर्खास् (for मूढास्) Ś K1 2 Dn2 D1. 2 त्वेव प्र, D4 5 7 8 चैवं (D4 °व) प्र

मूढास्त्वेतानि भाषन्ते यानीमान्यात्थ भारत ।
युद्धे ह्यर्जुनमासाद्य स्वस्तिमान्को व्रजेद्गृहान् ॥ २६
त्वं तु सर्वातिशङ्कित्वान्निष्ठुरः पापनिश्चयः ।
श्रेयसस्त्वद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि ॥ २७
गच्छ त्वमपि कौन्तेयमात्मार्थेभ्यो हि माचिरम् ।
त्वमप्याशंससे योद्धुं कुलजः क्षत्रियो ह्यसि ॥ २८
इमान्किं पार्थिवान्सर्वान्घातयिष्यस्यनागसः ।
त्वमस्य मूलं वैरस्य तस्मादासादयार्जुनम् ॥ २९
एष ते मातुलः प्राज्ञः क्षत्रधर्ममनुव्रतः ।
दुर्द्यूतदेवी गान्धारिः प्रयात्वर्जुनमाहवे ॥ ३०

एषोऽक्षकुशलो जिह्मो द्यूतकृत्कितवः शठः ।
देविता निकृतिप्रज्ञो युधि जेष्यति पाण्डवान् ॥ ३१
त्वया कथितमत्यन्तं कर्णेन सह हृष्टवत् ।
असकृच्छून्यवन्मोहाद्धृतराष्ट्रस्य शृण्वतः ॥ ३२
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
पाण्डुपुत्रान्हनिष्यामः सहिताः समरे त्रयः ॥ ३३
इति ते कत्थमानस्य श्रुतं संसदि संसदि ।
अनुतिष्ठ प्रतिज्ञां तां सत्यवाग्भव तैः सह ॥ ३४
एष ते पाण्डवः शत्रुरविषह्योऽग्रतः स्थितः ।
क्षत्रधर्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ॥ ३५

C 7 8434
B 7 165 26
K 7 166 25

---

(for स्त्वेतानि) —$^{b}$) G3 om मान्य K2 क्षथ, Dn1 D4 5 क्षद्य (for क्षात्थ) —$^{c}$) B5 युद्धेषु, Dn D4–6 युद्धे (Dn1 °धि) तु (for युद्धे हि) —$^{d}$) Ś K (K5 missing) D1 गृह, D8 पुमान् (for गृहान्) D6 स्वस्तिमान्को गृहे व्रजेत्

27 $^{a}$) Dn2 D4 6 7 त्व हि, G2 त्वत्त (for त्व तु) Ś2 B Dc1 Dn D2 4–8 G1 M4 सर्वाभि (for सर्वाति) M2–5 -शकी तु (for -शङ्कित्वान) —$^{b}$) T G2 निष्ठुर D6 सचय (for निश्चय) —$^{c}$) B3 निष्ठुर, M1 2 श्रेयासस् (for श्रेय°) Ś1 D6 स्वहिते, Ś2 K1 2 स्वहित, D1 च हिते, D4 6 तद्धिते (for त्व°) Ś K1 2 D1 4 युक्तं, D6 युक्तो (for युक्तास्) D7 श्रेयसा साधितो युक्तांस्, D8 °सा साधितो श्रेयस् —$^{d}$) K1 D1 4 om one त K2 G2 M1 2 यद्वद् (for तत्तद्) D6 ब्रूहि यद्यदिहेच्छसि

28 K4 om. (hapl.) 28 —$^{b}$) Ś2 G1 आत्मार्थेभ्ये हि, K1 °र्थेत्येहि; B1–3 6 Dc1 D2 6 र्थे (D6 °र्थं) जहि, B4 °र्थे तं हि, T G2–4 र्थे युध्य, M1. 3–5 र्थे-र्थेहि (for °र्थेभ्यो हि) Dn1 D2 4 5 आत्मार्थेभ्येत्य (D4 °र्थेभ्योभ्य) चाधितुं; Dn2 र्थे स प्रयाधितु, D7 8 °र्थे श्रेय आचरन् —$^{c}$) D6 अस्य (for अपि) Ś1 D8 आशास मे (for °ससे) Ś1 B1 Dn D4 5 7 8 युद्ध (for योद्धु) D2 त्वमद्य शंकसे युद्ध, G1 M1 2 किं त्वमाशंससे योद्धु —$^{d}$) Dc1 कृतज्ञ (for कुलज) D6 क्षत्रिय कुलजो ह्यसि

29 K4 transp. $29^{ab}$ and $29^{cd}$ —$^{a}$) Dc1 D3 S (G5 missing) इ(M2 हि)मान्हि (D3 M4 °नि) (for इमान्किं) B5 त्व (for किं) Ś2 damaged, K4 B Dc1 क्षत्रियान् (for पार्थि) D6 om सर्वा —$^{b}$) B Dc1 S (except G3 4, G5 missing) घा(M3–5 पा)तयित्वा ह्यनागस

30 $^{c}$) K4 G2 गाधारी, B Dc1 Dn2 D2 4. 7 8 °रे, D6 G1 M °र (for रि) —$^{d}$) D6 प्रतियात्वर्जुन प्रति

31 $^{a}$) K4 एको (for एषो) D4 5 -कथको, S (G5 missing) कितवो (for कुशलो) D6 एषोक्षत्र कुलो जिह्मो, D7 8 एषोक्षवर्त्या कुशलो —$^{b}$) Dn1 द्यूत वित् (for °कृत्) Ś1 K3 Dn2 D2 4 5 7 8 कैतव (for कि°) S (G5 missing) द्यूतवि(G3 4 कृ)च्छकुनि शठ —$^{c}$) Ś1 K1 3 4 देवता (for देविता) B4 प्राज्ञो (for -प्रज्ञो) —$^{d}$) Dn2 युद्धे (for युधि)

32 $^{a}$) B1 2 M2 कत्थितम् (for कथि°) K4 B Dn2 अत्यर्थं, Dc1 इत्येवं (for अत्यन्त) T G2–4 त्वया तु कथित नित्यं —$^{b}$) B5 D2 6 M2 हृष्टवान् (for वत्) — G1 M1 2 4 om $32^{cd}$, M5 reads the same *inf lin sec m* —$^{c}$) Dc1 (before corr. as in text) D6 शूरवन्, D7 8 शासवान्, T G2–4 M3 चैव यन् (for शून्यवन्)

33 $^{b}$) T G2–4 तान् (for मे) —$^{c}$) D3 हनिष्याम —$^{d}$) S (G5 missing) समेतान् (for सहिता) Ś1 K3 समरे सहितास्त्रय

34 $^{a}$) Dn2 D2 4. 5 7. 8 जल्पमानस्य, T G2–4 कथ्य° (for कत्थ°) B4 इति कल्पयमानस्य —$^{b}$) D3 कौरव, D3 मे मम (for the first संसदि) —$^{c}$) Dn2 अन्वतिष्ठ

35 $^{b}$) K1 अविषा*, K2 अवधिष्यो; B1–3 Dn2

C 7 8453
B. 7 165 36
K 7 188 36

दत्तं भुक्तमधीतं च प्राप्तमैश्वर्यमीप्सितम् ।
कृतकृत्योऽनृणश्चासि मा भैर्युध्यस्व पाण्डवम् ॥ ३६

इत्युक्त्वा समरे द्रोणो न्यवर्तत यतः परे ।
द्वैधीकृत्य ततः सेनां युद्धं समभवत्तदा ॥ ३७

इति श्रीमहाभारते द्रोणपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

## १६१

संजय उवाच ।
त्रिभागमात्रशेषायां रात्र्यां युद्धमवर्तत ।
कुरूणां पाण्डवानां च संहृष्टानां विशां पते ॥ १
अथ चन्द्रप्रभां मुष्णन्नादित्यस्य पुरःसरः ।
अरुणोऽभ्युदयांचक्रे ताम्रीकुर्वन्निवाम्बरम् ॥ २
ततो द्वैधीकृते सैन्ये द्रोणः सोमकपाण्डवान् ।
अभ्यद्रवत्सपाञ्चालान्दुर्योधनपुरोगमः ॥ ३
द्वैधीभूतान्कुरून्दृष्ट्वा माधवोऽर्जुनमब्रवीत् ।

---

D8 अविसह्यो, B6 °शक्तो (for °पह्यो) — d) M2 वशो (for वधो)

36 a) Dn2 दत्त (for दत्तं) D4 M1 अतीत (for अधीत) S (G5 missing) ते (for च) — b) Ś1 S (G5 missing) उत्तम, D5 6 एव च (for ईप्सितम्) — c) Dn2 om कृत G3 4 [ऽ]नृणा D5 M3–5 चापि (for चासि) — d) Dn2 भीर् (for भैर्)

37 b) D8 निवर्त्य च; D7 8 न्यवर्तत (for न्यव°) Dc1 D3 6 तत पर, D4 तत परे (for यत परे) — c) B1 द्वैधीकृत्वा (for °कृत्य) D1 सेना, D3 6 G3 सैन्यं (for सेना)

Colophon K5 G5 missing — *Adhy name* N (K5 missing) रात्रि( Dn1 D7 °श्री )युद्ध — *Adhy no* (figures, words or both) Dn1 186, D2 189, T G2 3 181, G1 M1 2 179, G4 180, M3–5 178 —*Śloka no* Dc1 Dn1 37

### 161

☞ This adhy is missing in K5 G5 (cf v l 7 125 14, 137 9)

1 Dn2 om the ref — a) Dn1 त्रिमार्ग (for त्रिभाग) D1 -मात्रो (sic) (for -मात्र) Dn1 D4 5 7 त्रिभागशेषमात्रायां — b) Ś1 K4 रात्रौ (for रात्र्यां) — d) Dc1 प्रहृष्टाना, D6 हृष्टाना च, G1 M1 2 सरब्धानां (for संहृष्टानां)

2 a) T1 अर्ध (for अथ) B1 चंद्र (for चन्द्र) Ś1 K1 2 Dn1 D5 M5 प्रभा[ ] (for प्रभा) B1 मुचन् (for मुष्णन्) — b) G1 M1 2 भास्करस्य (for आदित्यस्य) — c) Ś B1 2 Dc1 Dn D2 4–8 G4 [ऽ]भ्युदय चक्रे — d) D6 (by corr) ताम्रं, D6 (before corr) ताम्रा (for ताम्री) Ś2 इवायरे, B Dc1 दिवाकर, D2 3 6 G4 इद जगत्, D4 5 निशाकर (for इवाम्बरम्) — For 2cd, T G1–3 M subst

1267* प्रकाशमकरोद्व्योम जगत्सरञ्जयन्निव ।

— After 2, Dn2 D3 5 6 ins

1268* प्राच्या दिशि सहस्रांशोररुणेनारुणीकृतम् ।
तापनीयं यथा चक्रं भ्राजते रविमण्डलम् ।
ततो रथाश्वांश्च मनुष्ययानान्
न्युत्सृज्य सर्वे कुरुपाण्डुयोधाः ।
दिवाकरस्याभिमुखं जपन्त [5]
संध्यागता प्राञ्जलयो बभूवु ।

[(L 2) D3 भ्राजेन (for भ्राजते) Dn2 मडले —(L 3) D3 [ऽ]श्वयानांश् (for रथाश्वांश्) Dn2 D3 -यानान्, D6 नागान् (for -यानानि) —(L 5) D6 मुखा पतत (for -मुख जपन्त) D6 नेमुर्विवस्वतमुदारवर्चसो —(L 6) D6 धनुर्धरा (for संध्यागता) ]

3 b) D5 6 S (G5 missing) पाचाल(D3 6 पाडव) सोम(D3 °सैनि)कान् — c) K1 अत्यद्रवत् (for अभ्य°) Some MSS सपचालान् Dc1 D3.4 6 अभ्यद्रवत पाचालान्, S (G5 missing) अभ्यद्रवत्तथा (G1 M1 2 °वत्तथा, M3–5 °वत्तदा) पाडून् — d) K1 B5 Dc1 D1.3 S (G5 missing) पुरोगमा, D2 °गमान् (for °गम)

C 7 8881
B 7 192.53
K 7 193 56

द्वौ सूर्याविति नो बुद्धिरासीत्तस्मिंस्तथा गते ।
एकाग्रमिव चासीद्धि ज्योतिर्भिः पूरितं नभः ।
समपद्यत चार्काभे भारद्वाजनिशाकरे ॥ ४०
निमेषमात्रेण च तज्ज्योतिरन्तरधीयत ।
आसीत्किलकिलाशब्दः प्रहृष्टानां दिवौकसाम् ।
ब्रह्मलोकं गते द्रोणे धृष्टद्युम्ने च मोहिते ॥ ४१
वयमेव तदाद्राक्ष्म पञ्च मानुषयोनयः ।
योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् ॥ ४२
अहं धनंजयः पार्थः कृपः शारद्वतो द्विजः ।
वासुदेवश्च वार्ष्णेयो धर्मराजश्च पाण्डवः ॥ ४३
अन्ये तु सर्वे नापश्यन्भारद्वाजस्य धीमतः ।
महिमानं महाराज योगमुक्तस्य गच्छतः ॥ ४४
गतिं परमिकां प्राप्तमजानन्तो नृयोनयः ।
नापश्यन्गच्छमानं हि तं सार्धमृषिपुंगवैः ।
आचार्यं योगमास्थाय ब्रह्मलोकमरिंदमम् ॥ ४५
वितुन्नाङ्गं शरशतैर्न्यस्तायुधमसृक्क्षरम् ।

जगाम परम स्थान देह न्यस्य रथोत्तमे ।

40 Ś2 missing (cf v 1 1) — a) B (except B2 4) Dn1 D1 S (G5 missing) इव (for इति) D3 मे (for नो) D6 तत्र स्म (for नो बुद्धिर्) — b) D6 युधिरासीत्तयागते (sic) — c) D6 एकस्थम् (for एकाग्रम्) M3-5 चाकाशं (for चासीद्धि) K4 B Dc1 Dn1 D2 च (for हि) T G2-4 एकरूपमिवाभा(G2 °व ह्या)-सीज् — d) Dn2 M1 2 पूजितं, G2 पूरयन् (for पूरित) D6 जगत्, D7 मन (for नभ) — D7 8 read 40ef twice — e) D8 समापद्यत Dn2 चार्काभ, D7 8 (both first time) चा(D8 वा)कार्श, S (G5 missing) चोल्कार्भ Ś1 K1 2 D5 सम(D6 °मा)पद्यत्तयार्काभ, K3 B Dc1 Dn1 D1 °पद्यदथार्कार्भ, D4 5 °पतत्तदा (D5 °द्य तथा) काले, D7 8 (both second time) उदिते तु महाराज — f) Dn2 D3 -दिवाकरे (Dn2 °रौ) (for निशाकरे) B Dc1 Dn1 S (G5 missing) द्रोणस्य निधने तदा (B3-5 Dc1 Dn1 °था); D1 भारद्वाज निशाकरे, D7 8 (both first time) तेज पुंजसमावृतं

41 Ś2 missing (of v 1 1) — a) T G3 4 तदा (for च तज्) — After 41ab, D7 reads 42c for the first time, repeating it in its proper place — c) D6 हृष्ट (for -शब्द) Dn2 S (G5 missing) आसीत्किलि(Dn2 °स्कल)किलाशब्द — d) D2 विशां पते (for दिवौकसाम्) — e) Ś1 K1 2 ब्रह्मलोक — f) Dn2 मोदिते (for मोहिते) D6 धृष्टद्युम्नेन संगते

42 Ś2 missing (cf v 1 1) — a) Ś1 K1 तद (K1 °म)द्राक्ष्म, D4-8 तदाद्राक्ष (D6 7 °क्ष्य), T G1-4 M1 2 तदा राजन्, M3-5 [अ]न्वपश्याम (for तदाद्राक्ष्म) — b) M3 5 मानुष्ययोनय — D7 reads 42c for the first time after 41ab

43 Ś2 missing (cf v 1 1) — b) D6 तथा (for द्विज), Ś1 K1-4 B Dc1 Dn D1-5, 7 8 भारद्वाजस्य चात्मज (D2 वराज) — c) D5 तु (for च) — d) B Dc1 Dn1 T G2-4 धर्मपुत्रश् (for °राजश्) Dn2 D2 [s]थ (for च) G1 M1 2 युधिष्ठिर (for च पाण्डव)

44 Ś2 missing (cf v 1 1) — a) Dn1 अन्यत्र (for अन्ये तु) D4 5 7 8 सर्वे च (for तु सर्वे) Dn2 अन्य सर्वे विनापश्यन — b) D4 धर्मत (for धीमत) D6 देवगुह्य पर महत्, S (G5 missing) देवगुह्य तमु (G1 2 M1 2 °ह्यमनु°, G4 °ह्य तद्) त्तमं — c) D5 S (G5 missing) द्विजेंद्रस्य (for महाराज) — After 44, N (Ś2 K5 missing) ins

1334* ब्रह्मलोक महद्दिव्य देवगुह्य हि तत्परम् ।

[Ś1 K3 D6 हि त, Dn2 D4 5 7 च तद्, D3 तु तद् (for महद्) B4 दीप्त (for दिव्य) K1 2 D1 ब्रह्मलोक हित दिव्य, D8 °गुह्य च तद्दिव्य (for the prior half) D4 देवलोक (for °गुह्य) B3 Dc1 Dn1 D2 4 5 7 8 न (for हि) D3 यत्पर ]

45 Ś2 missing (of v 1 1) — a) Dn2 D2 4 5 7 8 एकां परां (D7 8 °रं) (for परमिकां) D5 M1 2 प्राप्ते — b) D6 ह्यजानतो K1 3 D1 7 8 [s]न्ययोनय, Dn2 नृपोत्तम, D4 व्यजानय (for नृयोनय) — c) D6 तु (for हि) — d) D2 तैः (for त) D6 -सत्तमै (for -पुंगवै) — f) Dc1 Dn D3-5 अरिंदम, D5 निनीषव, G2 अनुत्तम T G3 4 ब्रह्मलोकगत विभुं

46 Ś2 missing (cf v 1 1) — a) Ś1 K1 विभु भ्रागं, K2 D1 4 6 विनु(D4 °घ्य)ग्राग, D2 किंतु°, D5 विध्यश्चागं, D7 8 विभिन्नाग (for वितु°) K2-4 B Dc1 Dn G2 शरत्रातैर्, D4 7 शतशरैर् (for शरशतैर्) D3 पितुर्नामृप्यत वर्धं — b) Ś1 (orig) अनक्षतं, Ś1 (sup lin) K4 D4 7 8 अनक्षरं, K1 अ**क्षयं, K2 lacuna, K3 **क्षत, B5 अस्कृक्क्षतं, Dn2 असृक्क्षुरं;

धिक्कृतः पार्षतस्तं तु सर्वभूतैः परामृशत् ॥ ४६
तस्य मूर्धानमालम्ब्य गतसत्त्वस्य देहिनः ।
किंचिदब्रुवतः कायाद्विचकर्तासिना शिरः ॥ ४७
हर्षेण महता युक्तो भारद्वाजे निपातिते ।
सिंहनादरवं चक्रे भ्रामयन्खड्गमाहवे ॥ ४८
आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ।
त्वत्कृते व्यचरत्संख्ये स तु षोडशवर्षवत् ॥ ४९
उक्तवांश्च महाबाहुः कुन्तीपुत्रो धनंजयः ।
जीवन्तमानयाचार्यं मा वधीर्द्रुपदात्मज ॥ ५०
न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह ।
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाद्रवत् ॥ ५१
क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः ।
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥ ५२
शोणितेन परिक्लिन्नो रथाद्भूमिमरिंदमः ।
लोहिताङ्ग इवादित्यो दुर्दर्शः समपद्यत ।
एवं तं निहतं संख्ये ददृशे सैनिको जनः ॥ ५३

C 7 8877
B 7 192 69
K 7 193 71

D5 अरिंदम (for नसृक्क्षरम्) D3 न्यस्तशस्त्रमुपागमत्, T G3-4 M5 (*inf lin* as in text) क्ष( G3 क्षु )रांत रुधिर यद्दु —T G2-4 M8-5 ins after 46[ab] G1 M1 2 cont. after 1336*

1335* विकृष्य पार्षत खड्ग क्रोधामर्षवश गत ।

— On the other hand, G1 M1 2 ins after 46[ab]

1336* अभ्यद्रवत्स वेगेन पार्षत खड्गचर्मभृत् ।
प्रद्रुतं स्वय वेगेन तमाचार्यजिघासया ।
प्राक्रोशन्पाण्डवा सर्वे फल्गुनश्चाह्वतो रथात् ।
न हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन् ।
क्रोशत्सु पाण्डवेयेषु अनुधावति फल्गुने । [5]
विकृत सर्वभूतस्य ब्रह्मभूतं परामृशत् ।

[ (L 1) G1 अभ्यद्रवन् — (L 4) M1 2 इह (for इति) ]

—[c]) D6 तत्र (for त तु) S (G5 missing) दृश्य-(M8-5 निंद्य)मान सर्वभूतै —[d]) D6 सर्वलोकै, S (G5 missing) केशपक्षे (for सर्वभूतै) Ś1 K1 B2 परामृषत्

47 Ś2 missing (cf v 1 1) —[a]) Ś1 K1-3 B1 D2 8 आलक्ष्य, K4 Dn2 D4 5 7 8 आलोक्य (for आलम्ब्य) —[b]) K4 Dn2 देहत G1 M1 2 खड्गमुद्यम्य पार्षत —[d]) D6 शिरो व्यपचकर्त ह, S (G5 missing) शिरोम्यव(T G3 4 °रोस्य वि)चकर्त ह

48 Ś2 missing (cf. v 1 1) T G3-4 M8-5 om 48 —[a]) D4 दूषणं (for हर्षेण) Dn1 युक्ते —[b]) Dn1 न पातिते (for निपा°) —[d]) Ś1 K1 2 भ्रमयन् G1 M1 2 उत्तम (for आहवे)

49 = (var) 103 Ś2 missing (cf v 1 1) —[a]) Ś1 K1-3 G1 M1 2 आसन्न ; D6 आपन्न (for आकर्ण) —[b]) B1 3 4 Dc1 Dn1 यो वर्षाशीतिको द्विज, B2 5 T G2-4 वयसाशीतिको द्विज, G1 M °तिकात्पर —[c]) K1 Dn1 D4 6 8 व्यचरन्, D6 [s]व्यचरत् (for व्यच°) S (G5 missing) त्वत्कृते निधनं प्राप्त —[d]) D8 वृद्ध (for स तु) Dn1 वार्षिक (for वर्षवत्)

50 Ś2 missing (cf v 1 1) — After 50[ab], D6 ins

1337* वाहयित्वा रथं तत्र मा द्रोण घातयिष्यसि ।

—[c]) D3-8 पुनमाचार्यं, G1 3 4 मानया° (for आनया°) M8-5 जीवमान ममाचार्यं —[d]) Dn1 D4 6 नावधीर् (for मा वधीर्)

51 Ś2 missing (cf. v 1 1) —[b]) D3 [अ]ब्रुवन् (for च ह) —[c]) Ś1 K8 प्राक्रोशन्, Dc1 Dn1 चुक्रो° (for उत्क्रो°) D2 स (for [ए]व) D6 उदक्रोशदर्जुनश्च — D2 om. (hapl) 51[d]-52[a] —[d]) K1 सानुक्लेशस्, M8-5 °क्रोश (for °क्रोशस्) B Dc1 Dn1 D1 T G2-4 तमा(T G2-4 °भ्या)व्रजत्, Dn2 D4 5 7 8 तमब्रवीत्, D6 समाह्वयत् (for °द्रवत्) D3 सानुजस्तमुपाद्रवत्

52 Ś2 missing (cf. v 1 1) D2 om 52[a] (cf v 1. 51) —[a]) D5 क्रोधमाने —[d]) Dn2 G1 M1 2 नरर्षभ

53 Ś2 missing (cf v 1 1) S (G5 missing) repeats 53[abcd] after 1340* —[a]) D8 लोहितेन (for शोणि) S (G5 missing) (all second time) परिक्लिन्ना S (G5 missing) (all first time) स हि तेन परिक्षिप्तो —[b]) Dn2 D1 5-8 अयापतत्, D2 अपातयत् (for अरिंदम°) D4 रथाद्भूमिर्यथापतत् (sic), S (G5 missing) (all second time) रणभूमिश्च भारत —[c]) T G1 3 4 M1 2 (all second time) लोहितार्द्र, G2 (second time)

C 7 8878
B 7 192 70
K. 7 193 71

धृष्टद्युम्नस्तु तद्राजन्भारद्वाजशिरो महत् ।
तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ॥ ५४
ते तु दृष्ट्वा शिरो राजन्भारद्वाजस्य तावकाः ।
पलायनकृतोत्साहा दुद्रुवुः सर्वतो दिशम् ॥ ५५
द्रोणस्तु दिवमास्थाय नक्षत्रपथमाविशत् ।
अहमेव तदाद्राक्षं द्रोणस्य निधनं नृप ॥ ५६
ऋषेः प्रसादात्कृष्णस्य सत्यवत्याः सुतस्य च ।
विधूमामिव संयान्तीमुल्कां प्रज्वलितामिव ।
अपश्याम दिवं स्तब्ध्वा गच्छन्तं तं महाद्युतिम् ॥ ५७
हते द्रोणे निरुत्साहान्कुरून्पाण्डवसृञ्जयाः ।
अभ्यद्रवन्महावेगास्ततः सैन्यं व्यदीर्यत ॥ ५८
निहता हयभूयिष्ठाः संग्रामे निशितैः शरैः ।
तावका निहते द्रोणे गतासव इवाभवन् ॥ ५९
पराजयमथावाप्य परत्र च महद्भयम् ।
उभयेनैव ते हीना नाविन्दन्धृतिमात्मनः ॥ ६०
अन्विच्छन्तः शरीरं तु भारद्वाजस्य पार्थिवाः ।

---

°ताभ्र, M8 5 (both second time) °ताभ, M1 (second time) °ताश (for °ताह्न) — d) N (except Ś1, Ś2 K5 missing) दुर्धर्ष, S (G5 missing) (all first time) दु पह (G3 दुष्प्रभ) (for दुर्दर्श) S (G5 missing) (all second time) चाभवत्तदा (for समपद्यत) — e) B1 Dc1 Dn1 वि, D6 तु (for त) M8 4 सखे G1 M1 2 एव विनिहते सखे — f) G1 M1 2 ददृशुः M1 (by corr) सैनिका जना, M4 °कोर्जुन

54 Ś2 missing (cf v l 1) T G2-4 M8-5 om 54-55 G1 M1 2 read 54-55 after 57 — a) Dn2 D3-5 7 8 ततो (for तु तद्) — b) G1 M1 2 निचकर्त (for भारद्वाज) K4 B Dc1 Dn1 D1, 8 5 G1 [s]हरत् (for महत्) — d) D5 प्रमुखेन (for °खे तत्) G1 M1 2 द्यमतस्तदपातुदत्

55 For the sequence in G1 M1 2, cf. v l 54 Ś2 missing (cf v l 1) T G2-4 M8-5 om. 55 (cf v l. 54) — a) D4 तेन (for ते तु) — b) B4 D2 सैनिका (for तावका) — After 55ab, G1 M1 2 ins

1338* रथाक्षिपतितं द्रोणमाचार्यं ब्राह्मणं गुरुम् ।

— d) G1 M1. 2 दुद्रुवुस्ते दिशो दश

56 Ś2 missing (cf v l 1) — a) D8 S (except M8 4, G5 missing) योगम् (for दिवम्) — b) D5 पदम् (for पथम्) D1 आविशन् — D4 om 56c-58b — cd) Ś1 K1-3 D3 7 एतत् (for एव) Dn1 अहमेवा द्राक्षं द्रोणस्य निधनं नृपसत्तम (hypermetric)

57 Ś2 missing (cf v l 1) D4 om. 57 (cf v l 56) — a) D5 7 8 कत्रे (for ऋषेः) — After 57a, G1 M1 2 ins

1339* चत्वारस्ते च मानुषाः ।
अग्नेरिव शिखां दीप्तामुल्कां प्रज्वालितामिव ।
अपश्याम दिवं स्तब्ध्वा महिमानं महात्मनः ।

[(L 2) Post half = 57d —(L 3) Prior half = 57c G1 तमात्मन (for महात्मनः) ]

— G1 M1 2 om 57b — b) K1 2 4 B2 4, 5 Dn2 D2 6 तु, T G2-4 M8-5 ह (for च) — c) D8 अधूमाम् (for वि°) D1 2 8 इह (for इव) D8 सजाताम्; D6 सयातीम्, D0 खे यातीम् (for संयान्तीम्) — d) D6 T G2-4 M1 प्रभो, M8 5 विभो (for इव) — e) D7 अपश्यामि D5 वर्त्मा (for स्तब्ध्वा) — f) D2 त गच्छन्त (by transp), D5 द्रोण तच्च K1 lacuna, G1 M1 2 च (for तं) K1 2 महाबलं, T G1 2 M1 2, 5 °मतिं (for °द्युतिम्) — After 57, G1 M1 2 read 54-55

58 Ś2 missing (cf. v l 1) B2 reads 58ab on marg — a) Ś1 K (K5 missing) B1 Dn2 D1, 8 6 M1 2 निरु( D6 हतो )त्साहा — b) Ś1 K2-4 B1 Dn2 D1 3 6 7 M1. 2 कुरु (for कुरून्) K1 कुरुसंजयपाडवा — c) Ś1 K1-3 D1 महावीर्यास्, Dn2 °वेगु (sic), D4 °वेगान्, M8-5 °भागास् (for °वेगास्) — d) K1 तत, Dn2 D4 सु( D4 सू )त (for तत)

59 Ś2 missing (cf. v l 1) — a) T G2-4 नि राशा, G1 M1 2 ते हता (for निहता) — b) G1 M1. 2 समामे च पराजिता — d) D8 S (G5 missing) गत सत्त्वा (for गतासव)

60 Ś2 missing (cf v l 1) — a) Dn1 अथा व्याप्य, S (G5 missing) अवाप्याय (by transp) — b) D5 परेभ्योस्तु (for परत्र च) B5 महाभयं — c) T ते भीता, G2 तेनाहं, G3 4 ते भूता (for ते हीना) D4 उभावपि महाराज — d) Ś1 K1, 2 D6 गतिम्, K3 मतिम् (for धृतिम्) S (G5 missing) व्यविंदन्मति मात्मन

नाध्यगच्छंस्तदा राजन्कबन्धायुतसंकुले ॥ ६१
पाण्डवास्तु जयं लब्ध्वा परत्र च महद्यशः ।
बाणशब्दरवांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ ६२
भीमसेनस्ततो राजन्धृष्टद्युम्नश्च पार्षतः ।
वरूथिन्यामनृत्येतां परिष्वज्य परस्परम् ॥ ६३
अब्रवीच्च तदा भीमः पार्षतं शत्रुतापनम् ।
भूयोऽहं त्वां विजयिनं परिष्वक्ष्यामि पार्षत ।
सूतपुत्रे हते पापे धार्तराष्ट्रे च संयुगे ॥ ६४
एतावदुक्त्वा भीमस्तु हर्षेण महता युतः ।
बाहुशब्देन पृथिवीं कम्पयामास पाण्डवः ॥ ६५
तस्य शब्देन वित्रस्ताः प्राद्रवंस्तावका युधि ।
क्षत्रधर्मं समुत्सृज्य पलायनपरायणाः ॥ ६६
पाण्डवास्तु जयं लब्ध्वा हृष्टा ह्यासन्विशां पते ।
अरिक्षयं च संग्रामे तेन ते सुखमाप्नुवन् ॥ ६७

C 7 8692
B 7 192. 64
K 7 193 67

61 Ś2 missing (cf v l 1) — $^a$) D5 G1 M1 2 अनिच्छं( D5 °च्छं )त D6 अन्विच्छत शिरस्तस्य — $^b$) S (G5 missing) मयुगे (for पार्थिवा) — $^c$) K2 D3 M3-5 नान्वगच्छस्, T G2-4 नाव° (for नाध्य°) D5 महाराज (for तदा राजन्) B Dc1 Dn1 D1 2 4 6-8 नान्वगच्छन्महाराज — $^d$) B3 संगरे, Dn2 D2 4. 5 7 8 T G2 M3-5 -संवृते, D6 नकुल, G3 4 -सयुते (for -संकुले) Ś1 K1-3 मारुडायुतसवृते, K2 ***युतसवृते, D3 तुमुले युद्धसंकुले — After 61, S (G5 missing) ins

1340* पतिते स्वेव संरब्धे सेनायां तत्र भारत ।
उदतिष्ठन्नुरुण्डाना सहस्राण्येकविंशति ।

[ (L 1) M4 [अ]ध (for [प]त) G1 M1. 2 दुर्धर्षे (for सरब्धे) — (L 2) G2 कबधानां (for उरुण्डाना) ]

— After 1340*, S repeats 53$^{abcd}$ After the second occurrence of 53$^{abcd}$, G1 M1. 2 ins

1341* आच्छिसा पट्टसै खड्गै प्रासैश्च भरतर्षभ ।
हाहाकारेण महता शस्त्रमवापवापितान् ।
हतान्पर्यवहद्यौधान्सजीवानपि चापरे ।
प्रधानहतभूयिष्ठा कृतचिन्ता पलायने ।
ते च योधा महाराज निरुत्साहास्तदाभवन् । [5]
रथिनोऽश्वगजस्थाश्च पादाताश्च विशां पते ।
निहता हतभूयिष्ठा मृता इव हतप्रभा ।
तावकाना रथश्रेष्ठा उध्वस्ता इव भस्मना ।
अधर्मपूर्वकं युद्धमुपस्कृत्य पराजिता ।

— After 1341*, G1 M1 2 read 67$^{cd}$ for the first time, repeating it in its proper place

62 Ś2 missing up to 62$^{ab}$ (cf v l 1) — $^a$) Dc1 Dn1 D2 8 च (for तु) — $^b$) G1 M तथैव (for परत्र) — M3-5 om 62$^c$-67$^b$ — $^c$) Ś2 K2 4 B2-4 Dc1 D1 8 T G1. 2. 4 M1 2 बाणशंख

63 M3-5 om. 63 (cf v l. 62) — $^a$) G1 M1 2 तत्र भीमो महाराज — $^b$) K4 D4 5 पार्थिव (K4 व) (for पार्षत) — $^c$) T G3 4 वरूथिनाद् B Dn D3 अदृश्येता, D1 अमन्येता (for अनृत्येतां) G1 M1 2 बला धिकौ प्रननृतु, G2 वरूथिनीं विनृत्येतां

64 M3-5 om. 64 (cf v l 62) — $^a$) Dn2 तु (for च) — $^b$) Dc1 Dn T G2-4 शत्रुतापन, D6 °सूदन — $^c$) Ś· ह, D6 हि (for ऽह) T G2-4 परिष्वज्य (for विजयिन) G1 M1 2 भूयस्त्वामिति स युद्धे — $^d$) K3 4 B1 4 Dn2 D1-6 8 परिष्वज्यामि, Dn1 T G2-4 °वक्ष्यामि (for ष्वक्ष्यामि) K4 D4 पार्थिव, B3 D3 6 8 T पार्षतं, D5 भारत G1 M1. 2 परिष्वज्येह पार्षत — K4 om. 64$^c$-65$^d$

65 K4 M3-5 om 65 (cf v l 64, 62) — $^a$) D3 एवमुक्त्वा तु भीमस्तु — $^b$) Ś2 [आ]वृत ; B1 Dc1 Dn1 D4 5 7 8 [अ]न्वित ; D3 6 पुन, G1 M1 2 [आ]प्लुत (for युत) — $^c$) D5 G1 M1 2 महता (for पृथिवीं) — $^d$) D4 पाडव, D5 मेदिनीं (for पाण्डव) G1 M1 2 कपयन्निव मेदिनीं

66 M3-5 om 66 (cf v l 62) — $^a$) D5 तेन (for तस्य) — $^b$) G1 M1 2 पुन (for युधि) G2 तावका प्राद्रवन्युधि — After 66$^{ab}$, G1 M1 2 ins

1342* पाण्डवास्तु मुदा युक्ता सिंहनाद प्रचक्रिरे ।
प्राद्रवस्ते सुतान्दृष्ट्वा सुसुख चैव पार्षतम् ।

— G1 M1 2 om 66$^c$-67$^b$ — $^c$) Ś1 क्षत्रं, K2 D1. 6 क्षात्रं (for क्षत्र) D3 परित्यज्य (for समुत्सृज्य)

67 G1 M om 67$^{ab}$ (cf v l 62, 66) — $^a$) D1 च (for तु) — $^b$) D1 च (for हि) T G2-4 तथैव च महद्यश — G1 M1 2 read 67$^{cd}$ for the first time after 1341* — $^c$) G1 M1 2 (all second time) रिपु- (for अरि-) Ś1 D6 अरिक्षयेन (D6 °ये तु) समामे — $^d$) D1 तद् (for ते) B4 आवसन् (for

C 7 8093
B 7 192 1
K 7 194 1

ततो द्रोणे हते राजन्कुरवः शस्त्रपीडिताः ।
हतप्रवीरा विध्वस्ता भृशं शोकपरायणाः ॥ ६८
विचेतसो हतोत्साहाः कश्मलाभिहतौजसः ।
आर्तस्वरेण महता पुत्रं ते पर्यवारयन् ॥ ६९
रजस्वला वेपमाना वीक्षमाणा दिशो दश ।
अश्रुकण्ठा यथा दैत्या हिरण्याक्षे पुरा हते ॥ ७०
स तैः परिवृतो राजा त्रस्तैः क्षुद्रमृगैरिव ।
अशक्नुवन्नवस्थातुमपायात्तनयस्तव ॥ ७१
क्षुत्पिपासापरिश्रान्तास्ते योधास्तव भारत ।
आदित्येन च संतप्ता भृशं विमनसोऽभवन् ॥ ७२
भास्करस्येव पतनं समुद्रस्येव शोषणम् ।
विपर्यासं यथा मेरोर्वासवस्येव निर्जयम् ॥ ७३
अमर्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनम् ।
त्रस्तरूपतरा राजन्कौरवाः प्राद्रवन्भयात् ॥ ७४
गान्धारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह ।
हतं रुक्मरथं दृष्ट्वा प्राद्रवत्सहितो रथैः ॥ ७५
वरूथिनीं वेगवतीं विद्रुतां सपताकिनीम् ।
परिगृह्य महासेनां सूतपुत्रोऽपयाद्भयात् ॥ ७६

---

आप्नुवन् ) $G_1$ $M_{1\ 2}$ ( all second time ) प्राप्स्यते सुख मामुयु — After 67, $K_4$ B D ( except $D_{n2}$ ) S ( $G_5$ missing ) ins an addl colophon [ *Sub parvan* $K_4$ B $D_{c1}$ $D_{n1}$ $D_{1\ 2\ 4\ 6-8}$ $G_{1\ 2\ 4}$ $M_{1\ 2}$ द्रोणवध, $D_{3\ 5}$ द्रोणाचार्यवध — *Day of Drona's Generalship* $K_4$ पचमदिवसयुद्धे — *Adhy name* T $G_{1\ 3}$ ब्रह्मलोक प्रवेश — *Adhy no* ( figures, words or both ) $D_{n1}$ 193, $D_2$ 196, $D_3$ 86, T $G_{2\ 3}$ 187, $G_1$ $M_{1\ 2}$ 186, $G_4$ 188, $M_{3-5}$ 185 ]

68 [b] ) $K_1$ शत्रु ( for शस्त्र ) S ( $G_5$ missing ) विक्षता ( for पीडिता ) — [c] ) $D_6$ हतप्रवीर $K_{1\ 2}$ विश्वस्ता, $D_{3-5\ 7\ 8}$ वित्र° ( for विध्व° ) — After 68, N ( $K_5$ missing ) ins

1343* उदीर्णांश्च परान्दृष्ट्वा हृष्यमाणान्पुन पुन ।
अश्रुपूर्णेक्षणास्त्रस्ता दीना ह्यासन्विशा पते ।

[ ( L 1 ) $D_{4\ 6\ 7}$ उदीर्णास्तु ( $D_1$ °श्च ) $D_8$ तु ( for च ) $Ś_1$ $K_3$ $D_4$ हृष्यमाणा , $K_{1\ 2}$ $B_4$ $D_{n1}$ °मानान् ( $K_2$ $B_4$ ना ), $K_4$ $B_5$ $D_{n2}$ $D_{2\ 4\ 5}$ कपमाना ( $B_5$ °नान् ), $D_{7\ 8}$ छावहष्टा ( $D_8$ °ष्ट ) ( for हृष्यमाणान् ) — ( L 2 ) $K_3$ तु, B $D_{c1}$ Dn $D_3$ च ( for हि ) ]

69 [a] ) $K_8$ गतोत्साहा — [c] ) $Ś_2$ $K_{1\ 2\ 4}$ $D_1$ आर्त स्वनेन वित्रस्ता — [d] ) $Ś_1$ $K_3$ पुत्रस्ते पर्यवारयत्

70 [a] ) $D_{7\ 8}$ रजस्तुता ( for °स्वला ) S ( $G_5$ missing ) विपण्णवदना दीना ( $G_1$ $M_1$ भीता ; $M_2$ भीमा ) — [b] ) $Ś_2$ $K_{1\ 2\ 4}$ B ( except $B_4$ ) D वीक्ष्यमाणा — [c] ) $D_{7\ 8}$ अश्रुपूर्णा — [d] ) $D_5$ हते पुरा ( by transp ) $D_6$ हिरण्यकशिपौ हते, $G_1$ $M_{1\ 2}$ ण्याक्षवधे पुरा

71 [a] ) $D_3$ सत ( for स,तै ) $D_{n2}$ $D_{4\ 5\ 7}$ राजस् ( for राजा ) — [c] ) $D_{n1}$ तत्र ( for अव ). — [d] ) $D_1$ अनाथास्तनयास्तव

72 [a] ) $K_4$ B $D_{c1}$ $D_{n1}$ $D_{3\ 5\ 6-8}$ म्लानास्, $D_{n2}$ $D_4$ ग्लानास् ( for श्रान्तास् ) — [b] ) $D_2$ T $G_{2\ 4}$ $M_{1\ 2}$ योधास्ते ( by transp ), $G_1$ $M_{3-5}$ यौधास्ते $D_{4\ 6\ 7\ 8}$ तत्र ( for तव ) $G_2$ योधास्तत्र च भारत — [c] ) $K_4$ $B_{2-5}$ $D_{n2}$ [ह]व, $D_{c1}$ $D_{n1}$ [ए]व ( for च ) $Ś_2$ $K_2$ भृश ( for च स ) — [d] ) $D_{n2}$ om. from भृशं up to अमर्ष णीय त ( in 74[a] ) $D_{3\ 6}$ $G_{1\ 2\ 4}$ M दृढं ( for भृश )

73 $D_{n2}$ om 73 ( cf v l 72 ) — [b] ) $D_7$ द्रोणित ( for शोषणम् ) — [c] ) $D_6$ विपर्यायं $M_{3-5}$ अथो ( for यथा )

74 $D_{n2}$ om up to अमर्षणीय त ( cf v l 72 ) — [a] ) $D_6$ S ( $G_5$ missing ) अप्रेक्षणीय ( for अमर्ष° ) $D_{4\ 7\ 8}$ T $G_{1\ 2}$ $M_{1\ 2}$ त ( for तद् ) $Ś_1$ $K_{1-3}$ $D_1$ तत्र, $Ś_2$ तस्य ( for दृष्ट्वा ) — [b] ) $B_5$ घातनं ( for पा° ) — [c] ) $D_6$ रूपास्तदा, T $G_{1-4}$ $M_{1\ 2}$ रूपधरा ( for °तरा ) $G_2$ केचित् ( for राजन् ) — [d] ) $D_{c1}$ $D_{n1}$ $D_4$ रणे ( for भयात् ) — After 74, the sequence in $G_1$ $M_{1\ 2}$ is 77–79, 81, 76, 82, 75, 80

75 For the sequence in $G_1$ $M_{1\ 2}$, cf. v l 74 $D_4$ om ( hapl ) 75–77 T $G_{3\ 4}$ om ( hapl ) 75–76 — [a] ) Some MSS गधारराज — [b] ) $D_5$ श्वसूदै सह भारत, $D_6$ तत्र तत्र नरै सह , $G_1$ $M_{1\ 2}$ त्रासाद्धस्ततरो भवत्, $G_2$ त्रस्त स्तब्ध स्वसैनिक., $M_{3-5}$ ततस्त्रस्ततरो भृश — [c] ) $B_{1-3\ 5}$ $D_{c1}$ $D_{n1}$ श्रुत्वा ( for दृष्ट्वा ) — [d] ) $Ś_2$ $K_{1\ 2}$ $D_{1\ 5}$ प्राद्रवन् Ś $K_{1-3}$ $D_1$ सर्वतो, $D_5$ सहिता $D_6$ स्वकै ( for रथै ) $G_1$ M रथानीकेन प्राद्रवत्

76 For the sequence in $G_1$ $M_{1\ 2}$, cf. v l 74 $D_4$ T $G_{3\ 4}$ om. 76 ( cf v l 75 ) — [b] ) $G_1$ M ध्व

रथनागाश्वकलिलां पुरस्कृत्य तु वाहिनीम् ।
मद्राणामीश्वरः शल्यो वीक्षमाणोऽपयाद्भयात् ॥ ७७
हतप्रवीरैर्भूयिष्ठं द्विपैर्बहुपदातिभिः ।
वृतः शारद्वतोऽगच्छत्कष्टं कष्टमिति ब्रुवन् ॥ ७८
भोजानीकेन शिष्टेन कलिङ्गारट्टबाह्लिकैः ।
कृतवर्मा वृतो राजन्प्रायात्सुजवनैर्हयैः ॥ ७९
पदातिगणसंयुक्तस्त्रस्तो राजन्भयार्दितः ।
उलूकः प्राद्रवत्तत्र दृष्ट्वा द्रोणं निपातितम् ॥ ८०
दर्शनीयो युवा चैव शौर्ये च कृतलक्षणः ।
दुःशासनो भृशोद्विग्नः प्राद्रवद्गजसंवृतः ॥ ८१
गजाश्वरथसंयुक्तो वृतश्चैव पदातिभिः ।
दुर्योधनो महाराज प्रायात्तत्र महारथः ॥ ८२
गजाद्रथान्समारुह्य परस्यापि हयाङ्गनाः ।
प्रकीर्णकेशा विध्वस्ता न द्वावेकत्र धावतः ॥ ८३

C 7 8914
B 7 193. 22
K 7 194 22

---

जिर्नीं (for विद्रुता) M₂–₅ सु- (for म) — c) D. प्रतिगृह्य G₂ वेगात् (for मेना) — d) D₇ [ऽ]न्य यात् (for ऽपयाद्) B₃ रणे, D₇ पुन (for भयात्)

77 For the sequence in G₁ M₁ ₂, cf v l 74 D₁ om. 77 (cf v l 75) Ś₂ K₁ ₂ B₂ om (hapl) 77 — a) D₇ ₈ रथाश्वनागकलिला — b) Dn₂ उप हृत्य, D. उपगृह्य (for पुरस्कृत्य) D. स्व-, M₂–₅ च (for तु) D₃ पुरस्कृत्वा वरूथिनीं — K₄ om. 77cd — c) B₁ D₅ अधिप (for ईश्वर) — d) Some MSS वीक्ष्यमाणो D₅ ₇ ₈ [ऽ]प्ययाद् (for ऽप) D₂ तत, M₂ हृत (for भयात्)

78 For the sequence in G₁ M₁ ₂, cf v l 74 D₅ om 78ab — a) K₂ हतप्रवीरैर्, Dn₁ °प्रवीर-, D₁ ₆ तत (D₅ हते) प्रवीरे, D₇ हत प्रवीर B₅ Dn D₂ ₅ ₆ ₈ T G₂–₄ भूयिष्ठैर् — b) Bom ed ध्वजैर् (for द्विपैर्) B Dc₁ -पताकिभि Dn₁ द्वीपवाह-पताकिभि — c) D₁ ₅ गच्छन् — d) D₁ om. the first कष्टं

79 For the sequence in G₁ M₁ ₂, cf v l 74 — a) G₁ M₁ ₂ भोजानीकावशिष्टेन — b) Dn₁ D₂ ₄ ₅ कालिंगाद्र(Dn₁ D₂ °द्द)बाह्लिकैं, D₁ °गा सह बा°, D₃ °गैरय बा°, D₇ °गै**बा°, D₈ °गैर्बाह्लिकैं सह — c) Ś₁ K₃ कृपो, Ś₂ K₁ ₂ D₁ भयाद्, D₅ ततो (for वृतो) — d) B₁–₃ Dc₁ Dn₁ T G₂–₄ M₃–₅ स (B₂ स्व-) जवनैर्, G₁ M₁ ₂ सुजवितैर् (for °वनैर्)

80 For the sequence in G₁ M₁ ₂, cf. v l 74 G₂–₄ M₃–₅ om 80 T₂ reads 80 on marg — b) B₁ G₁ M₁ ₂ ततो (for त्रस्तो) — d) D₁ om द्रोणं G₁ M₁ ₂ दृष्ट्वा द्रोणनिपातन

81 For the sequence in G₁ M₁ ₂, cf v l 74 — a) Ś₂ K₁ ₂ तत्र (for चैव) — b) Ś₂ K₄ B Dc₁ Dn₁ D₂ G₁ M₁ ₂ शौर्येण (for र्ये च) G₁ निश्चय (for लक्षण) — c) Dc₁ Dn₁ भृश विद्द, G₂ भया

द्विग्न (for भृशो°) — d) Dn₂ -सयुत (for -सवृत) G₂ प्रायात्स जवनैर्हयै (= [var] 79d) — Ś K (K₅ missing) B Dc₁ Dn D₁ ₂ ₅ ₇ ₈ ins after 81 D₄ after 82

1344* रथानामयुत गृह्य त्रिसाहस्राश्च दन्तिन ।
वृषसेनोऽप्ययात्तूर्णं दृष्ट्वा द्रोणं निपातितम् ।

[(L 1) Ś₁ K₃ ₄ D₁ त्रिसाहस्र K₄ B₁ D₁ दन्तिना Ś₂ K₂ अयुत नैव दन्तिना, K₁ corrupt (for the post half) —(L 2) Ś₂ damaged, K₁ ₂ D₅ [ऽ]प्ययात्, K₂ ₄ B Dc₁ Dn ययौ, D₄ यथा (for ऽप्यात्)]

— D ₇ cont 1345* after the above

82 For the sequence in G₁ M₁ ₂, cf v l 74 D₅ ₇ om 82 B₅ repeats 82ab after 1345* — a) Ś₂ रथाश्वगजसयुक्तो — c) D₄ महासैन्यै (for °राज) — d) Dn₂ प्रयात्तत्र (for प्रायात्तत्र) D₂ प्राद्रवद्गुत-चेतन, D₃ प्राद्रवत्स महारथ, D₄ ₆ प्राद्रवद्ग(D₆ °न्ग)-जसवृत, S (G₅ missing) प्राद्रवद्राजभि सह — Ś K (K₅ missing) B Dc₁ Dn D₁ ₂ ₅ ins after 82 D₅ ₇ cont after 1344*

1345* संशप्तकबलं गृह्य हतशेषं किरीटिना ।
सुशर्मा प्राद्रवद्राजन्दृष्ट्वा द्रोणं निपातितम् ।

[(L 1) Some MSS सशप्तक B Dc₁ Dn D₃ ₆ गणान् (B₁ ₅ D₂ °णाद्) (for -बल) Ś₂ B Dc₁ Dn D₃ हतशेषान्]

— D₄ ins 1344* after 82

83 a) G₁ M₁ ₂ रथान्गजान् (by transp) D₂ समामाद्य (for °रुह्य) — b) Ś K (K₅ missing) B₅ Dc₁ Dn₂ D₁ ₂ ₄ ₇ ₈ व्युदस्य, D₈ आरुह्य, D₅ व्युदस्यांश्च (for परस्य) K₄ B₅ Dn₂ D₂ ₄ ₅ ₇ ₈ च (for [अ]पि) G₁ M₁ ₂ भयातुरा, G₂ भयावहा (for हयाङ्गना) D₃ तुरगानतिवीरगान, M₄ ₅ (*sup lin* as in text) परस्यातिभयाङ्गना — After 83ab, N (except D₅, K₅ missing) ins.

C 7 8914 B 7 193 22 K 7 194 22

नेदमस्तीति पुरुषा हतोत्साहा हतौजसः ।
उत्सृज्य कवचानन्ये प्राद्रवंस्तावका विभो ॥ ८४
अन्योन्यं ते समाक्रोशन्सैनिका भरतर्षभ ।
तिष्ठ तिष्ठेति न च ते स्वयं तत्रावतस्थिरे ॥ ८५
धुर्यान्प्रमुच्य तु रथाद्धतसूतान्स्वलंकृतान् ।
अधिरुह्य हयान्योधाः क्षिप्रं पद्भिरचोदयन् ॥ ८६
द्रवमाणे तथा सैन्ये त्रस्तरूपे हतौजसि ।
प्रतिस्रोत इव ग्राहो द्रोणपुत्रः परानियात् ॥ ८७
हत्वा बहुविधां सेनां पाण्डूनां युद्धदुर्मदः ।
कथंचित्संकटान्मुक्तो मत्तद्विरदविक्रमः ॥ ८८
द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणम् ।
दुर्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदम् ॥ ८९
किमियं द्रवते सेना त्रस्तरूपेव भारत ।
द्रवमाणां च राजेन्द्र नावस्थापयसे रणे ॥ ९०

---

1346* प्राद्रवन्सर्वत सख्ये दृष्ट्वा रुक्मरथ हतम् ।
त्वरयन्त पितॄनन्ये भ्रातॄनन्ये च मातुलान् ।
पुत्रानन्ये वयस्यांश्च प्राद्रवन्कुरवस्तथा ।
चोदयन्तश्च सैन्यानि स्वस्रीयांश्च तथापरे ।
सम्बन्धिनस्तथान्ये च प्राद्रवन्त दिशो दश । [5]

[ (L 1) K1 -हन रथ (for रथ हतम्) — (L 2) K1 om (hapl) भ्रातॄनन्ये Dn2 D4 7 8 अपि (for अन्ये) K4 B Dc1 D1 [ऽ]थ, Dn1 तु (for च) — (L 3) Ś K (K5 missing) D1 8 तदा (for तथा) D6 प्राद्रवत कुरूस्तथा (for the post. half) — (L 4) D8 नोदयतश्च, D4 द्वार°, D7 8 वार° (for चोद°) Ś K1 2 स्वस्रेयांश् — (L 5) Dc1 Dn चान्ये (by transp), D5 [अ]न्येपि Dn2 reads twice (without var) the post half and 83c–84a Dc1 Dn1 D4 5 7 8 वि(Dn1 प्रा) द्रवति (for प्राद्रवन्त) ]
— D1 cont

1347* ततो दुर्योधनो राजा अश्वत्थामानमब्रवीत् ।
— D4 om 83c–108d — c) D8 विकीर्ण (for प्र°) D6 -भिन्न (for -केशा) D5 वित्रस्ता B1 2 4 Dc1 Dn1 प्रकीर्णकेशान्वि(B2 °शा वि)ध्वस्तान् — d) M8 4 धावत (for धावत) B1 2 4 Dn1 नाना चैकत्र धावत, Dn2 corrupt, D6 नेशुस्ते कौरवा भृशं, D7 8 नष्टचित्ता विचेतस

84 For the repetition in Dn2, of v 1 1346* D4 om 84 (cf. v 1 83) K2 reads 84ab twice — a) B1 3 4 Dc1 Dn1 मन्वाना, D7 8 वित्रस्ता (for पुरुषा) — d) Ś1 K3 जना°, D5 तथा, D6 भयात्, G2 रणे (for विभो)

85 D4 om 85 (cf v 1 83) D8 om 85–86 — b) Ś1 K3 तावका (K3 °कान्) (for सैनिका) G4 सैनिकास्तत्र भारत — c) D2 च तत (for न च ते)

86 D4 6 om. 86 (cf v 1 83, 85) — a) K4 B1–4 Dc1 Dn1 उन्मुच्य च, B5 उत्सृज्य च D8 च (for तु) T G3 4 रथान् Ś K1–3 D1 धुर्यांश्चोत्सृज्य सर(Ś1 K3 सह)सा, Dn2 D2 5 °नुत्सृज्य तुरगाद् (Dn2 तु रथान्), D7 8 °नुत्सृज्य विरथा — b) K3 4 B4 Dc1 D1 हतसूताद्, D2 °सत्यान् Ś2 स्वलकृतान्, B5 D2 G1 M1 2 अल°, Dn1 स्वय° (for स्वल°) Dn2 D5 भूषणै श्चाप्य(D5 °श्च स्व)लकृतान्, G2 हतसूतास्स्वलकृताद् — c) B (except B5) Dc1 Dn1 अभि (for अधि-) G1 M1 2 भयाद् (for हयान्) D5 7 8 अन्ये, G1 4 M1 2 यौधा°, M3–5 क्षिप्र (for योधा) — d) M3–5 यौधा (for क्षिप्र) D8 अवापतन् (for अचोदयन्) K1 क्षिप्रमग्नि रशोदयन् (sic), D5 क्षिप्र पायाहीत्यदयन् (sic), D7 8 क्षिप्रं ते समनोदयन् (D7 °त्)

87 D4 om 87 (cf v 1 83) — a) A few MSS द्रवमाने, D2 श्रासमाणे (for द्रवमाणे) — b) D8 महौजसि (for हतौ°) — For 87ab, D6 subst.

1348* तस्मिन्हाहाकृते सैन्ये वर्तमाने भयावहे ।
— c) D3 6–8 प्रतिश्रोत — d) Ś K3 परानयात्, B5 °न्प्रति
— After 87, N (except D4, K5 missing) ins

1349* तस्यासीत्सुमहद्युद्धं शिखण्डिप्रमुखैर्गणैः ।
प्रभद्रकैश्च पाञ्चालैश्चेदिभिश्च सकेकयैः ।

[ (L 2) D6 स (for च) Some MSS पचालैश्. D5 सह (for च स-) Some MSS सकैकयै°. ]

88 D4 om 88 (cf v 1 83) — a) K4 B Dc1 Dn D2 3 5 6 T G2–4 हत्वा बहुविधा सेना (D2 3 5 °धं सैन्य) — b) D7 8 M3–5 पाढवीं, T2 (inf lin as in text) G3 पांडवीर्, G1 पाढवैर् Ś2 G4 युद्धदुर्मदा — c) S (G5 missing) समरान् (for संकटान्)

89 D4 om 89 (cf v 1 83) — a) A few MSS द्रवमान — b) B. D3 6–8 G2 पलायनपरायण — c) Ś2 K2 अथासाद्य (for समा°)

90 D4 om 90 (cf v 1 83) — a) D5 अर्थे (for

त्वं चापि न यथापूर्वं प्रकृतिस्थो नराधिप ।
कर्णप्रभृतयश्चेमे नावतिष्ठन्ति पार्थिवाः ॥ ९१
अन्येष्वपि च युद्धेषु नैव सेनाद्रवत्तदा ।
कच्चित्क्षेमं महाबाहो तव सैन्यस्य भारत ॥ ९२
कस्मिन्निदं हते राजन्रथसिंहे बलं तव ।
एतामवस्थां संप्राप्तं तन्ममाचक्ष्व कौरव ॥ ९३
तत्तु दुर्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम् ।
घोरमप्रियमाख्यातुं नाशकत्पार्थिवर्षभः ॥ ९४
भिन्ना नौरिव ते पुत्रो निमग्नः शोकसागरे ।
बाष्पेण पिहितो दृष्ट्वा द्रोणपुत्रं रथे स्थितम् ॥ ९५
ततः शारद्वतं राजा सव्रीडमिदमब्रवीत् ।
शंसेह सर्वं भद्रं ते यथा सैन्यमिदं द्रुतम् ॥ ९६
अथ शारद्वतो राजन्नार्तिं गच्छन्पुनः पुनः ।
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ॥ ९७

कृप उवाच ।

वयं द्रोणं पुरस्कृत्य पृथिव्यां प्रवरं रथम् ।
प्रावर्तयाम संग्रामं पाञ्चालैरेव केवलैः ॥ ९८
ततः प्रवृत्ते संग्रामे विमिश्राः कुरुसोमकाः ।

C 7 8931
B. 7 193 38
K 7 194 38

इयं) — $^{b}$) K1 2 ·सेनेव (for रूपेव) — After 90$^{ab}$, Dn2 D2 M3–5 read 93 — Dn2 D2 om 90$^{c}$–91$^{b}$ — $^{c}$) D5 6 8 G3 4 द्रवमाण — $^{d}$) D6 कथ (for रणे)

91 D4 om. 91 (cf. v l 83) Dn2 D2 om 91$^{ab}$ (cf. v l. 90) — $^{b}$) Ś K1–3 D1. 7 8 T G3 4 जनाधिप (for नरा°) — After 91$^{ab}$, D5 reads 93 for the first time, repeating it in its proper place — $^{c}$) Ś K1–3 सेनाम्, D1 सर्वे, G1 M1 2 चान्ये (for चेमे) — $^{d}$) Ś K1–3 D1 अवतिष्ठंति (for नाव ) K4 B Dc1 Dn1 D2 पार्थिव

92 D4 om 92 (cf v l 83) — $^{a}$) D6 योधेषु (for युद्धे°) S (G5 missing) सर्वेष्वपि हि युद्धेषु — $^{b}$) B1 2 D1 8 नैव D3 [अ]भवत् (for [अ]द्र°) Ś1 K1. 2 4 D1 पुरा, B1 Dn तथा, D6 यथा, D7 8 कदा, S (G5 missing) तव (for तदा) — $^{c}$) G2 महाराज (for °बाहो)

93 D4 om 93 (cf v l. 83) Dn2 D2 M3–5 read 93 after 90$^{ab}$, D5 reads it for the first time after 91$^{ab}$ — $^{a}$) D6 कस्मिन्सेदं (for कस्मिन्निदं) D7 8 G1 M य( D7 8 क )स्मिन्विनिहते राजन् — $^{b}$) D5 (first time) यथा सिंह, D5 (second time) नरसिंहे (for रथसिंहे) — $^{d}$) D5 (both times) T G3 M भारत (for कौरव)

94 D4 om 94 (cf v l 83) — $^{a}$) Dn D2 5 तत्र, D6 न तद् (for तत्तु) — $^{d}$) K3 4 B (except B1) Dc1 Dn1 D5 6 S (G5 missing) नाशक्नोत् (for °कत्) B2 Dc1 D6–8 G2 M1 2 पार्थिवर्षभ

95 D4 om 95 (cf. v. l 83) — $^{a}$) Ś1 K1 B1 D1 T G3 भिन्न- — $^{b}$) B Dc1 Dn1 D3 6 S (G5 missing) मग्न शोकमहार्णवे — After 95$^{ab}$, S (G5 missing) ins

1350* अप्लुवे प्लवमन्विच्छन्यथागाधे नरोऽम्भसि ।

— $^{c}$) K3. 4 B Dc1 Dn D2 3 6–8 [अ]पिहितो (B Dc1 Dn1 °त), T G3 4 पिहित — $^{d}$) Ś2 रथ (for रथे) G2 स्थित

96 D4 om 96 (cf v l 83) — $^{a}$) B2 सारद्वत (for शार°) Dn2 D2 5 6 राजन् (for राजा) Ś K1–3 D3 7 8 T G3 4 तत (D7 8 अथ) शारद्वतो राजन् — D3 om (hapl) 96$^{b}$–97$^{a}$ — $^{b}$) G1 M सव्रीळम्, G3 4 सव्रीळ — $^{c}$) Ś2 K1–3 D1 3 5 T G3 4 शसेहं, K4 B1 3 4 Dc1 शंसाद्य, B2 शस त्व, G2 शंसैतद् (for शंसेह) Ś1 K3 सर्वं भवतो; Ś2 K1 2 B1 D1 T G3 4 भवते सर्वं, K4 भद्रं ते सर्वं (by transp), B3 5 G2 भगवन्सर्वं, B3 Dc1 भवते सैन्य, B4 Dn1 D6 द्रवते सर्वं, Dn2 D2 पूर्वं (D2 °र्वं) भद्र ते, D5 भद्र पूर्वं ते, G1 M1 2 सर्वं द्रवते M3–5 शंस त्व( M3 त )स्य भवान्सर्वं — $^{d}$) B3 Dc1 सर्वम् (for सैन्यम्) S (except G2, G5 missing) अभि (for इदं) K3 ध्रुवं (for द्रुतम्).

97 D4 om 97 (cf v l 83) D3 om 97$^{a}$ (cf v l. 96) — $^{a}$) K3 तत (for अथ) — $^{b}$) K4 B Dc1 Dn2 आर्छन् (B1 °त्) (for गच्छन्)

98 D4 om 98 (cf v l 83) — $^{b}$) D3 परमं (for प्रवर) — $^{c}$) B2 Dn1 D3 5 7 8 T G2–4 प्र( B2 Dn1 D3 5 प्रा )वर्तयाम Ś2 D6 सग्रामे — $^{d}$) D6 सह (for एव) K3 B1 S (G5 missing) केवलं, D2 कैकयै D5 पचालैश्चैव केवलै

99 D4 om. 99 (cf. v l. 83) — $^{c}$) B5 M3–5

C 7.8031
B 7.193.38
K 7.194.38

अन्योन्यमभिगर्जन्तः शस्त्रैर्देहानपातयन् ॥ ९९
ततो द्रोणो ब्राह्ममस्त्रं विकुर्वाणो नरर्षभः ।
अहनच्छात्रवान्भल्लैः शतशोऽथ सहस्रशः ॥ १००
पाण्डवाः केकया मत्स्याः पाञ्चालाश्च विशेषतः ।
संख्ये द्रोणरथं प्राप्य व्यनशन्कालचोदिताः ॥ १०१
सहस्रं रथसिंहानां द्विसाहस्रं च दन्तिनाम् ।
द्रोणो ब्रह्मास्त्रनिर्दग्धं प्रेषयामास मृत्यवे ॥ १०२
आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ १०३
क्लिश्यमानेषु सैन्येषु वध्यमानेषु राजसु ।
अमर्षवशमापन्नाः पाञ्चाला विमुखाभवन् ॥ १०४
तेषु किंचित्प्रभग्नेषु विमुखेषु सपत्नजित् ।
दिव्यमस्त्रं विकुर्वाणो बभूवार्क इवोदितः ॥ १०५
स मध्यं प्राप्य पाण्डूनां शररश्मिः प्रतापवान् ।
मध्यंगत इवादित्यो दुष्प्रेक्ष्यस्ते पिताभवत् ॥ १०६
ते दह्यमाना द्रोणेन सूर्येणेव विराजता ।
दग्धवीर्या निरुत्साहा बभूवुर्गतचेतसः ॥ १०७
तान्दृष्ट्वा पीडितान्बाणैर्द्रोणेन मधुसूदनः ।
जयैषी पाण्डुपुत्राणामिदं वचनमब्रवीत् ॥ १०८
नैष जातु परैः शक्यो जेतुं शस्त्रभृतां वरः ।

---

-गच्छंत (for -गर्जन्त) — [d]) D3 शरैर् (for शस्त्रैर्) B3 देहान्यपातयन्, B5 शस्त्राण्य° — After 99, N (except D4, K6 missing) ins

1351* वर्तमाने तथा युद्धे क्षीयमाणेषु संयुगे ।
धार्तराष्ट्रेषु संक्रुद्धः पिता तेऽस्त्रमुदैरयत् ।

[(L 1) D7 8 तदा (for तथा) B5 तथा युद्धे क्षीयमाणे (for the prior half) D8 क्षीयमाणे च (for °णेषु) D7 8 सर्वत (for संयुगे) — (L 2) D3 धार्तराष्ट्रे च (for °ष्ट्रेषु) K1 उदैरयेत्, K4 Dc1 Dn D2 5 6 8 उदीरयत् ]

100 D4 om 100 (cf. v 1 83) — [b]) Ś1 महायशा, Dc1 G1 4 M नरर्षभः; D5 महारथ — [c]) K2 4 B2-4 Dc1 Dn1 D2 व्यहनत्, B1 Dn2 D6 S (G5 missing) न्य°, B5 व्याहरत्, D5 व्यद्रवत् (for अहनत्) D3 अवधीत्सहवान्मल्लै (sic) — After 100, G1 M ins

1352* पिता तव सुसंक्रुद्धो रिपूनभिमुखे स्थित ।
निहन्ति प्रबलस्तत्र वायुर्वृक्षानिवौजसा ।

[(L. 1) G1 वीरा (sic) (for पिता) — (L 2) G1 M1 2 न्यहनत् (for निहन्ति) ]

101 D4 om 101 (cf v 1. 83) — [a]) G3 damaged Dn2 D1-3 5-8 कैकया G2 4 मात्स्या — [b]) Some MSS पंचालाश्च Ś K1 2 4 D1 3 7 8 विशां पते, Dn2 D2 5 द्विजोत्तम (Dn2 °म), G3 सहस्रश (for विशेषत) — [c]) G1 M सखे, G3 सखे — [d]) D6 नाशाक्ता (for व्यनशन्) D2 3 5 7 8 नोदित (for -चोदिता).

102 D4 om 102 (cf v 1 83) — [a]) B Dc1 Dn T G1-4 नर (for रथ-) — [b]) D7 8 द्विसहस्र — [c]) Ś2 K1 2 4 D1-3 6-8 G1 2 M2-5 निर्दग्धान्, B Dc1 Dn1 -योगेन (for -निर्दग्ध)

103 = (var) 49 D4 om. 103 (cf v 1. 83) K2 om 103[ab] — [a]) Ś K1.3 D1 आसन्न-, D2 6 आपन्न- (for आकर्ण) Ś2 Dc1 D2 6 7 G1 3 4 M1-4 -पलित- — [b]) B2 (marg) पचम- (for -पञ्चक) B1 2 Dc1 Dn1 S (G5 missing) वयसाशीतिकात्पर — [c]) B1 पर्यटति (for °चरद्)

104 D4 om. 104 (cf v 1 83) — [a]) D6-8 T G2-4 M3-5 कृष्यमाणेषु K2 सर्वेषु (for सैन्येषु) — [b]) B3 Dn1 युध्यमानेषु — [d]) Some MSS पचाला D5 भवेत् (sic) (for [अ]भवन्)

105 D4 om. 105 (cf v 1 83) K4 om. 105[c]-106[b] — [a]) B2 4 Dc1 Dn1 D6 S (G5 missing) प्रणुन्नेषु (for प्रभग्नेषु) — [c]) D5 प्रकुर्वाणो — [d]) Dn2 इवोदिता (sic), G1 M1 2 -समद्युति.

106 D4 om. 106 (cf v. 1 83). K4 om 106[ab] (cf v. l. 105) — [b]) Ś2 B1 2 5 D5-8 शररश्मि — [c]) B5 मध्यदिन (for °गत) — [d]) Ś1 K3 Dc1 Dn2 G3.4 दुष्प्रेक्षस्

107 D4 om. 107 (cf v 1 83) — [a]) G1 M1.2 वध्यमाना (for दह्य°) — [c]) S (G5 missing) हतोत्साहा (for निरु°) — [d]) G1 M1 2 गतचेतना

108 D4 om 108 (cf v 1 83)

109 [a]) D2 नैव (for नैष) K4 B Dc1 Dn1 D1 6

अपि वृत्रहणा संख्ये रथयूथपयूथपः ॥ १०९
ते यूयं धर्ममुत्सृज्य जयं रक्षत पाण्डवाः ।
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः ॥ ११०
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
हतं तं संयुगे कश्चिदाख्यात्वस्मै मृषा नरः ॥ १११
एतन्नारोचयद्वाक्यं कुन्तीपुत्रो धनंजयः ।
अरोचयंस्तु सर्वेऽन्ये कृच्छ्रेण तु युधिष्ठिरः ॥ ११२
भीमसेनस्तु सव्रीडमब्रवीत्पितर तव ।
अश्वत्थामा हत इति तच्चाबुध्यत ते पिता ॥ ११३
स शङ्कमानस्तन्मिथ्या धर्मराजमपृच्छत ।
हतं वाप्यहतं वाजौ त्वां पिता पुत्रवत्सलः ॥ ११४
तदतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अश्वत्थामानमाहेदं हतः कुञ्जर इत्युत ।
भीमेन गिरिवर्ष्माणं मालवस्येन्द्रवर्मणः ॥ ११५
उपसृत्य तदा द्रोणमुच्चैरिदमभाषत ।
यस्यार्थे शस्त्रमाधत्से यमवेक्ष्य च जीवसि ।

C 7 8950
B 7 193 57
K 7 194 57

S ( $G_5$ missing ) नरै ( for परै ) — $^b$) Ś$_1$ $K_3$ मस्त्र ( for शस्त्र ) — $^c$) $G_1$ वृत्रहण $D_3$ युद्धे, $G_1$ $M_{1-4}$ मखे $D_{2\,6}$ अपि वृत्रहणो युद्धे, T $G_{2-4}$ वृ( $G_3$ पु )त्रहंवापि वा ( $G_2$ °ता इवा- ) संख्ये

110 $^a$) Ś$_2$ वय ( for यूयं ) S ( $G_5$ missing ) यूयं धर्मं समुत्सृज्य — $^b$) $Dn_2$ यत्न ( for जय ) $D_6$ कार्क्षत ( for रक्षत ) — After 110$^{ab}$, S ( $G_5$ missing ) ins

1353* जये हि यतमानाना श्रीर्धर्मश्च प्रवर्तते ।

— $^c$) $K_1$ यथावत्, $D_{4\,5}$ यथा च, $D_6$ मयात ( for यथा व ) Ś$_1$ $K_3$ समरे ( for संयुगे ) — $^d$) $Dn_2$ निहन्याद् ( for न ह° ) $M_{1\,2}$ रुम- ( for रुक्म )

111 $^a$) $K_2$ नैव ( for नैष ) — $^b$) $D_3$ $G_1$ M युध्य ( $M_{3-5}$ °ध्ये )तेति, $G_{3\,4}$ युध्यतीति ( for युध्येदिति ) — $^c$) S ( $G_5$ missing ) त हत ( by transp ) — $^d$) Ś $K_{1\,3\,4}$ $D_{1,\,3\,5\,7\,8}$ [स]स्य ( for [स]स्मै ) Ś$_2$ lacuna, $K_2$ ( *sup lin* as in text ) मृषा वर, $D_5$ महारय ( for मृषा नर )

112 $^a$) $D_6$ एवं ( for एतन् ) — $^c$) $D_3$ मरोचयत ते सैन्या

113 $^a$) Some S MSS सव्रीळम् — $^d$) $K_4$ B $Dc_1$ $D_2$ तं न, $Dn_1$ तत्र ( for तच्च ) $Dn_2$ तमात्र युध्यता मिति, $D_{1,\,6-8}$ नावबुध्ये( $D_6$ °ध्य )त ते पिता, $D_5$ तं नाबुध्येत ते पिता

114 $^b$) T $G_{1-4}$ $M_{1,\,2}$ स्म ( T $G_{3\,4}$ स ) पृच्छति ( for अपृच्छत ) — $^c$) $Dn_2$ $D_5$ तु, $D_{4\,7\,8}$ च ( for the first and the second वा ) T $G_{2-4}$ वापि ( for वाजौ )

115 $^a$) Ś$_2$ $K_4$ B $Dc_1$ $D_{2\,3\,5\,6}$ T $G_{1-4}$ $M_{1\,2}$ तमतथ्य-; $K_1$ उपतथ्य-, $M_{3-5}$ स चातथ्य- ( for तदतथ्य ) $D_4$ तमपथ्यमयेनासौ, $D_{7\,8}$ तमतथ्यभयोद्विग्नो — $^b$) Ś$_1$ $K_1$ $B_{1\,2,\,6}$ $D_{1,\,8}$ जये शक्तो, $D_{7\,8}$ जयासक्तो $D_6$ T $G_{2-4}$ $M_{3-5}$ च पाण्डव ( for युधिष्ठिर ) — $G_1$ $M_{1,\,2}$ ins line 3 of 1354* after 115$^{ab}$, $G_1$ $M_2$ repeating it after 116 — $^c$) B $Dc_1$ S ( $G_5$ missing ) मायोधे ( for माहेदं ) $Dn_1$ $D_6$ हत दृष्ट्वाश्वत्थामान, $Dn_2$ अश्वत्थामेभिनामानं ( sic ), $D_{3\,5\,7\,8}$ °मनुवाचेद, $D_4$ °मानुवाचेदं — $^d$) Ś$_1$ कुंजरो हत इत्युत, $K_{2-4}$ $D_3$ हतं कुंजरमित्युत ( $K_4$ °र इत्यत ), B $Dc_1$ Dn $D_6$ S ( $G_5$ missing ) हतं दृष्ट्वा ( $Dn_1$ तदा राजा, $D_6$ तदा राजा ) महाराज — $^e$) $D_{2-5\,7\,8}$ भीमस्तु ( for भीमेन ) $Dn_1$ -वर्षाणां, $Dn_2$ $D_{3-5\,7\,8}$ -वर्माण, $D_6$ संकाश ( for -वर्ष्माणं ) — $^f$) $D_6$ मालव्यस्य, $G_1$ M माळवस्य

116 $^a$) $K_{1\,3}$ $Dc_1$ $D_1$ T $G_2$ उपसृज्य; $Dn_2$ $D_{3\,4\,5\,7\,8}$ अभिद्द( $Dn_2$ °सृ )त्य ( for उपसृत्य ) $K_{1\,2}$ तथा, $K_4$ $B_{1,\,6}$ $Dn_2$ $D_{2-8}$ ततो ( for तदा ) — $^b$) B $Dc_1$ $Dn_1$ $D_{1,\,2}$ S ( $G_5$ missing ) उवाच ह ( for अभाषत ) — $^c$) Ś$_2$ $K_4$ $D_1$ T $G_{1-3}$ $M_{1,\,2\,5}$ ( *inf lin* ) आदत्से, $D_3$ गृह्णीयात् ( for आधत्से ) — $^d$) $D_6$ तम् ( for यम् ) Ś$_2$ $K_{1\,2}$ अवीक्ष्य, $D_{5\,6}$ अपेक्ष्य Ś$_2$ जीवसे — $^e$) $K_{1,\,2}$ $D_1$ स ( for ते ) $D_4$ निहतो ( for दयितो ) — $^f$) Ś $K_{1\,2}$ $D_6$ अश्वत्थामा ( for सोऽश्व ) Ś$_1$ $K_3$ स ( for नि ) — N ( $K_5$ missing ) $G_1$ $M_2$ ( last two second time ) ins after 116 $G_1$ ( first time ) $M_{1,\,2}$ ( first time ) after 115$^{ab}$

1354* शेते विनिहतो भूमौ वने सिंहशिशुर्यथा ।
जानन्नप्यनृतस्याथ दोषान्स द्विजसत्तमम् ।
अव्यक्तमब्रवीद्राजा हतः कुञ्जर इत्युत ।

[ $G_1$ ( both times ) $M_{1,\,2}$ ( both times ) om. lines 1–2 — ( L. 1 ) $D_6$ वातहतो ( for विनि° ) $Dc_1$ $Dn_1$ नर- ( for वने ) — ( L 2 ) $D_7$ [अ]र्थं ( for [अ]थ ) Ś $K_{1-3}$ $B_{1,\,4}$ Dn $D_{4\,5}$ द्विजसत्तम ( $K_{1\,2}$ $B_1$ °म- ) $D_6$ गुणदोषान्नराधिप ( for the post. half ) — ( L 3 ) $G_1$

C 7 8930
B 7 193.57
K 7 194 57

पुत्रस्ते दयितो नित्यं सोऽश्वत्थामा निपातितः ॥ ११६
तच्छ्रुत्वा विमनास्तत्र आचार्यो महदप्रियम् ।
नियम्य दिव्यान्यस्त्राणि नायुध्यत यथा पुरा ॥ ११७
तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम् ।
पाञ्चालराजस्य सुतः क्रूरकर्मा समाद्रवत् ॥ ११८
तं दृष्ट्वा विहितं मृत्युं लोकतत्त्वविचक्षणः ।
दिव्यान्यस्त्राण्यथोत्सृज्य रणे प्राय उपाविशत् ॥ ११९
ततोऽस्य केशान्सव्येन गृहीत्वा पाणिना तदा ।
पार्षतः क्रोशमानानां वीराणामच्छिनच्छिरः ॥ १२०
न हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन् ।
तथैव चार्जुनो वाहादवरुह्यैनमाद्रवत् ॥ १२१
उद्यम्य बाहू त्वरितो ब्रुवाणश्च पुनः पुनः ।
जीवन्तमानयाचार्यं मा वधीरिति धर्मवित् ॥ १२२
तथापि वार्यमाणेन कौरवैरर्जुनेन च ।
हत एव नृशंसेन पिता तव नरर्षभ ॥ १२३
सैनिकाश्च ततः सर्वे प्राद्रवन्त भयार्दिताः ।
वयं चापि निरुत्साहा हते पितरि तेऽनघ ॥ १२४

संजय उवाच ।

तच्छ्रुत्वा द्रोणपुत्रस्तु निधनं पितुराहवे ।
क्रोधमाहारयत्तीव्रं पदाहत इवोरगः ॥ १२५

इति श्रीमहाभारते द्रोणपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ समाप्तं द्रोणवधपर्व ॥

---

(both times) M1.2 (first time) द्रोण (for राजा) ]

117 a) G8 आकार· (for तच्छ्रुत्वा) M3-5 तस्थौ (for तत्र) — For 117ab, N (K5 missing) subst

1355* स त्वां निहतमाक्रन्दन्क्रुत्वा त्वन्नामपीडित· ।

[Ś1 K1.2 D7 स त्वा, D1 मत्वा, D4 श्रुत्वा (for स त्वां) K4 B D (except D1 7 8) आक्रदे Ś1 सन्नोपि, K1 तन्नाम (for त्व°) K4 B D (except D1) Bom ed श्रुत्वा सतापपीडित· (Bom ed °तापित·) (for the post half) ]

— c) D6 निक्षिप्य (for नियम्य) S (G5 missing) सर्वाणि (for दिव्यानि) — d) G1 तथा (for यथा)

118 b) B Dc1 Dn D3 शोकातुरमचेतसं (B3 D8 °न), T G1-4 M1.2 शोकोत्तरमचेतस (G1 M1.2 °नं) — c) Some MSS पचाल — d) D2 धृष्टद्युम्न ; D4 क्रूर कर्म (for क्रूरकर्मा)

119 D4 om 119a-121b — a) Dn1 ता K4 D1 निहत, D5 विहत — d) K3 B Dn1 D6 S (except M3, G5 missing) प्रायम्

120 D4 om 120 (cf v l 119) — a) D6 स (for ऽस्य) K1 मध्येन (for सव्येन) — b) D5 सत (for तदा) Ś1 पाणिना गृह्य वे ** — c) K1 पार्षत· क्रेशमात्राणा — d) Dc1 D7 8 T G2-4 आच्छिनत् (for आच्छि°)

121 D4 om 121ab (cf v l 119) — b) Ś1 तं (for ते) — c) D6 तत्रैनम् (for तथैव) D1.6 अर्जुनो (for चा°) — d) Ś K1-3 D1 अवप्लुत्य (for °रुह्य) B5 अब्रवीत्, D7 8 आगमत् (for आद्रवत्)

122 D2 4 om 122-124 — a) Ś1 बाहूस्त्वरितो, K4 B Dc1 Dn D5 त्वरितो बाहू (K4 Dn2 °हु) (by transp), D6 बाहुं त्वरितो — D5 om 122c-124d — c) D7 8 जीवंतमेनमाचार्यं, G8 4 M1-3 5 जीवतं मा- नया° — d) Dn2 अपि (for इति)

123 D3 4.5 om 123 (of v l 122) — a) K4 तथा निवार्यमाणेन — b) Ś K2-4 D1 8 कौरवेणा(K3 °व्येना)र्जुनेन च — c) D8 एव — d) G1 M1.2 नरर्षभ·

124 D3 4 5 om 124 (of v l 122) — a) Ś K (K5 missing) D1 3 7 8 तु (for च) D6 तत सर्वा दिश सैन्या , S (G5 missing) तत· सेना दिश· सर्वा — b) D8 नावर्तंत (for प्राद्रवन्त) S (G5 missing) भयातुरा (for °र्दिता) — d) D8 च (for ते)

125 b) Ś K1-3 D1 6 पितुर्निधनमाहवे — d) K1 D1 पादाहत, G1.3 4 M दण्डाहत — After 125, N (K5 missing) ins

1356* तत क्रुद्धो रणे द्रौणिर्भृशं जज्वाल मारिष ।
यथेन्धनं महत्प्राप्य प्राज्वलद्धव्यवाहन ।
तलं तलेन निष्पिष्य दन्तैर्दन्तानुपस्पृशन् ।
नि श्वसन्नुरगो यद्वल्लोहिताक्षोऽभवत्तदा ।

# १६६

धृतराष्ट्र उवाच ।
अधर्मेण हतं श्रुत्वा धृष्टद्युम्नेन संजय ।
ब्राह्मणं पितरं वृद्धमश्वत्थामा किमब्रवीत् ॥ १
मानुषं वारुणाग्नेयं ब्राह्ममस्त्रं च वीर्यवान् ।
ऐन्द्रं नारायणं चैव यस्मिन्नित्यं प्रतिष्ठितम् ॥ २
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संजय ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ ३
येन रामादवाप्येह धनुर्वेदं महात्मना ।
प्रोक्तान्यस्त्राणि दिव्यानि पुत्राय गुरुकाङ्क्षिणे ॥ ४
एकमेव हि लोकेऽस्मिन्नात्मनो गुणवत्तरम् ।
इच्छन्ति पुत्रं पुरुषा लोके नान्यं कथंचन ॥ ५
आचार्याणां भवन्त्येव रहस्यानि महात्मनाम् ।
तानि पुत्राय वा दद्युः शिष्यायानुगताय वा ॥ ६
स शिल्पं प्राप्य तत्सर्वं सविशेषं च संजय ।

C 7 6970
B 7 194 7
K 7 193 7

[ (L 2) Dn2 पार्थिवन (for वधेप्तन) D8 मन्नामाघ (for महत्प्राप्य) Ś K1 2 Dn2 D2, 4 6-8 प्रज्ञलेद्, D5 प्रज्वलद् — (L 3) D5 मम्पृष्य (for निपित्य) Ś1 दन्तान्दन्तैर् (by transp) Ś2 K1 3 4 Dc1 D1 2 7 उप( K4 D2 °पा)सृश्य, B3, 4 उपास्पृशन्, Dn2 D4 अम° (for उप°) D5 दशैर्न्तान्यपीडयत् (for the post half) — (L 4) Some MSS निश्वसन् B4 तथा (for तदा) ]

Colophon K5 G5 missing *Sub parvan* Ś1 K2 D1 द्रोणवध — *Day of Droṇa's Generalship* K1 3 4 D1 पञ्चमयुद्धदिवसे — K1 3 read समास after the *sub-parvan* — *Adhy name* D3 पितृवधाख्यान; Bom ed अश्वत्थामक्रोध — *Adhy no* (figures, words or both) Dn1 194, D2 197, D8 87, T G2 3 188, G1 M1 2 187, G4 189, M3-5 186

## 166

☞ This adhy is missing in K5 G5 (cf v l 7 125 14, 137 9)

1 a ) B1 छद्मना नि (for अधर्मेण) D2 दृष्ट्वा (for श्रुत्वा) — b ) D2 3 मयुगे (for संजय) B1 पितर पापकर्मणा — B1 om 1cd — c ) D1 ब्रह्मार्णं (for ब्राह्मण) — After 1, G1 M1 2 4 5 ins

1357* शूरश्च कृतविद्यश्च तेजसा ज्वलनोपमः ।
यदब्रवीत्तदा सूत तन्ममाचक्ष्व संजय ।
यो वेद दिव्यान्यस्त्राणि सर्वशस्त्रभृतां वर ।

[ G1 M1, 2 ins lines 1-2 after 3 — (L 2) M1 2 संजय° ]

2 T G3 M3 om (hapl) 2-3, Ś1 reads the same on marg — a ) B5 Dn2 D2 4-8 मानवं (for मानुष) Ś1 K1-3 D8 (before corr) G2 वारुणाग्नेये (G2 °यौ) (for °यं) G1 M (M3 om) वायव्यं वारुणं याम्यं — b ) K1 ब्रह्मम्, D1 ब्रह्मयम् Ś K1 B (except B1) वीर्यवत् (for °वान्) G1 M (M3 om) माहामाग्नेयमेव च — d ) G1 M (M3 om.) यत्र सम्यक् (for यस्मिन्नित्य)

3 = (var) 13 T G3 M3 om 3 (cf. v l. 2) Ś1 reads 3 on marg — b ) Ś1 damaged, K2 4 B D संयुगे (for संजय) — Dn2 om 3c-4d — c ) D1 निकृत्तम् (for निहतम्) — d ) Ś1 K1 4 B2 3 5 D1 2 G4 सोऽश्वत्थामा (for अश्व°) — After 3, G1 M1 2 ins lines 1-2 of 1357*

4 Dn2 om 4 (cf v l. 3) D6 om (hapl) 4-15 — a ) Ś1 इव, D8 पूर्वं, T G1-4 M1 2 एव (for इह) — b ) Dn1 D2 M1 2 महात्मना (sic) (M1 °न) (for °त्मना) — c ) Ś K1-3 D1 सर्वाणि, D2 4 5 7 8 पुत्राय (for दिव्यानि) — d ) Ś K (K5 missing) D1 शुभ, B Dc1 Dn1 गुण (for गुरु) K3 काङ्क्षिणा (for काङ्क्षिणे) D2, 4 5 7 8 सर्वा( D2 शुभा )णि शुभकाङ्क्षिणा ( D5 °क्षये )

5 D6 om 5 (cf v l 4) — a ) M1 2 एवम् (for एकम्) — b ) Dn2 आत्मना, D4 5 धार्मिक (for आत्मनो) G3 गुणवत्तर — cd ) Ś1 Dn2 transp पुत्रं and पुरुषा लोके B Dc1 Dn1 D2 5 7 8 पुरुषाः पुत्रं (by transp)

6 D6 om 6 (cf. v l. 4) — a ) D8 पूर्वं (for एव) — c ) D4 5 7 8 ते (for वा) — B1 om 6d-8a — d ) D3-5 7 8 अनुमताय (for अनुग°) Dc1 D3 5 च, Dn1 lacuna (for वा)

7 B1 D6 om 7 (cf v l 6, 4). — a ) B ( B1

C 7 8470
B 7 194 7
K 7 193 7

शूरः शारद्वतीपुत्रः संख्ये द्रोणादनन्तरः ॥ ७
रामस्यानुमतः शास्त्रे पुरंदरसमो युधि ।
कार्तवीर्यसमो वीर्ये बृहस्पतिसमो मतौ ॥ ८
महीधरसमो धृत्या तेजसाग्निसमो युवा ।
समुद्र इव गाम्भीर्ये क्रोधे सर्पविषोपमः ॥ ९
स रथी प्रथमो लोके दृढधन्वा जितक्लमः ।
शीघ्रोऽनिल इवाक्रन्दे चरन्क्रुद्ध इवान्तकः ॥ १०
अस्यता येन संग्रामे धरण्यभिनिपीडिता ।
यो न व्यथति संग्रामे वीरः सत्यपराक्रमः ॥ ११
वेदस्नातो व्रतस्नातो धनुर्वेदे च पारगः ।
महोदधिरिवाक्षोभ्यो रामो दाशरथिर्यथा ॥ १२
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संयुगे ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ १३
धृष्टद्युम्नस्य यो मृत्युः सृष्टस्तेन महात्मना ।
यथा द्रोणस्य पाञ्चाल्यो यज्ञसेनसुतोऽभवत् ॥ १४
तं नृशंसेन पापेन क्रूरेणात्यल्पदर्शिना ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ १५

संजय उवाच ।

छद्मना निहतं श्रुत्वा पितरं पापकर्मणा ।
बाष्पेणापूर्यत द्रौणी रोषेण च नरर्षभ ॥ १६

---

om ) Dc1 Dn D2 5 G1 M3-5 शिष्य , D3 शिष्य, D4 7 8 शल्य ( for शिल्प ) G1 M1 2 सर्वं तत् ( by transp ) — $^{b}$ ) D8 तु ( for च ) — $^{d}$ ) G1 M1-4 संखे, G4 सचे ( for सख्ये ) Ś2 K4 D2-5 7 8 M3-5 अनतर

8 B1 om $8^{abc}$ ( cf v l 6 ) D6 om 8 ( cf v l 4 ) D4 om. $8^{a}$–$11^{b}$ — $^{a}$ ) D2 अनुगत ( for अनुमत ) Ś2 D8 शस्त्रे, K1 चास्त्रे, K2 Dn2 D2 5 सख्ये, T1 शस्त्रै ( for शास्त्रे ) B2-5 Dc1 Dn1 रामस्य तु सम शस्त्रे, T2 ( inf lin as in text ) G1 3 4 M रामस्यानु सम शस्त्रे ( T2 G4 °स्त्रै ), G2 रामस्यापि सम शस्त्रे — $^{b}$ ) M1 2 युवा ( for युधि ) — Dc1 Dn1 om $8^{cd}$ — $^{c}$ ) Ś2 धैर्ये ( for वीर्ये ) — $^{d}$ ) G4 युधि ( for मतौ )

9 D4 6 om. 9 ( cf v l 8, 4 ) D8 om $9^{ab}$ — $^{a}$ ) B1 3-5 Dc1 Dn1 स्थैर्ये, B2 सत्रे, G2 सत्त्वे ( for धृत्या ) — $^{b}$ ) Ś2 युधि ( for युवा ) — $^{d}$ ) Ś K1 3 [ स ]मर्प- ( Ś2 °र्पे ), B1-4 Dc1 Dn1 चाशी ( for सर्प )

10 D4 6 om 10 ( cf v l 8, 4 ) — $^{a}$ ) Ś2 damaged D2 5 7 8 परमो ( for प्रथमो ) T G2-4 स रथप्रवरो लोके — $^{b}$ ) K1 2 4 Dn2 D1. 3 5 7 8 T G2-4 M3-5 जितधन्वा ( for दृढ° ) — $^{c}$ ) Dc1 G2 M3 5 ( sup lin ) शीघ्रानिल; D5 G4 M4 5 शीघ्रानल, T शीघ्रेनिल, M1 2 शीघ्रोनल ( for शीघ्रोऽनिल ) D7 8 इवोत्क्रुत्या ( D5 °त्या ); M1 2 इवाक्रन्दो ( for °क्रन्दे ) — $^{d}$ ) D5 7 8 कालरूप; S ( G5 missing ) वीर क्रुद्ध ( for चरन्क्रुद्ध )

11 D4 om $11^{ab}$ ( cf. v l. 8 ) D6 om. 11 ( cf v l. 4 ) — $^{a}$ ) B3 ( marg ) युध्यता, D7 8 स्वरता ( for अस्यता ) — $^{b}$ ) T G2-4 अति , M3-5 अपि ( for अभि ) D5 धरण्याजिनिपीडिता — After $11^{ab}$, S ( G5 missing ) ins

1358* मेघस्तनितनिर्घोषा कम्पते भयविक्लवा ।

— $^{c}$ ) Ś K1-3 D3 5 नाव्यथत, D1 न व्याप्यत , D7 8 न व्यथेत ( for न व्यथति ) — $^{d}$ ) M1. 5 धीर ( for वीर )

12 D6 om 12 ( cf v l 4 ) — $^{a}$ ) Dc1 ( marg as in text, sec m ) Dn1 व्रतधरो, D7 8 वले शक्तो, G3 lacuna ( for व्रतस्नातो ) — $^{b}$ ) T G2-4 पर गत ( for च पारग ) D8 चतुर्वेदस्य पारग

13 = ( var ) 3 D6 om. 13 ( cf v l 4 ) — $^{b}$ ) G1 M1 2 सजय ( for संयुगे ) — $^{d}$ ) Ś1 K1-3 Dn2 D2 8 G3 4 M3-5 सोऽश्वत्थामा ( for अश्व° ) — After 13, D2 reads 15 for the first time repeating it in its proper place.

14 D6 om 14 ( cf. v l 4 ) K1. 2 B2 4 om. ( hapl ) 14–15 — $^{b}$ ) Dn2 D4 7 8 दृष्टस्, D5 दृढस् ( for सृष्टस् ) — $^{c}$ ) T G2 4 तथा, G3 ततो ( for यथा ) G2 पांचालो ( for पाञ्चाल्यो )

15 K1 2 B2 4 D6 om 15 ( cf v l 14, 4 ) D2 reads 15 for the first time after 13 — $^{a}$ ) D2 ( first time ) न ( for तं ) D4 धृष्टद्युम्नेन निहत — $^{b}$ ) Dn2 D4 5 7 8 क्षुद्रेण ( for क्रूरेण ) B1. 3 5 Dc1 Dn1 अदीर्घ , Dn2 अत्यन्य-, D1 अल्पस्य ( for अत्यल्प ) Ś2 मेधसा, T G3 4 -शिल्पिना, G2 बुद्धिना ( for दर्शिना ) D2 ( both times ) क्षुद्रेणात्ययदर्शिना — $^{cd}$ ) = $3^{cd}$, $13^{cd}$ D2 ( first time ) 8 सोऽश्वत्थामा ( for अश्व° ) — After 15, K4 B Dc1 Dn D1-5, 7 8 S ( G5 missing ) ins an addl colophon [ *Adhy name*

तस्य क्रुद्धस्य राजेन्द्र वपुर्दिव्यमदृश्यत ।
अन्तकस्येव भूतानि जिहीर्षोः कालपर्यये ॥ १७
अश्रुपूर्णे ततो नेत्रे अपमृज्य पुनः पुनः ।
उवाच कोपान्निःश्वस्य दुर्योधनमिदं वचः ॥ १८
पिता मम यथा क्षुद्रैर्न्यस्तशस्त्रो निपातितः ।
धर्मध्वजवता पापं कृतं तद्विदितं मम ।
अनार्यं सुनृशंसस्य धर्मपुत्रस्य मे श्रुतम् ॥ १९
युद्धेष्वपि प्रवृत्तानां ध्रुवौ जयपराजयौ ।
द्वयमेतद्भवेद्राजन्वधस्तत्र प्रशस्यते ॥ २०
न्यायवृत्तो वधो यस्तु संग्रामे युध्यतो भवेत् ।
न स दुःखाय भवति तथा दृष्टो हि स द्विजः ॥ २१
गतः स वीरलोकाय पिता मम न संशयः ।
न शोच्यः पुरुषव्याघ्रस्तथा स निधनं गतः ॥ २२
यत्तु धर्मप्रवृत्तः सन्केशग्रहणमाप्तवान् ।
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति ॥ २३
कामात्क्रोधादवज्ञानाद्दर्पाद्बाल्येन वा पुनः ।

C 7 8988
B. 7 195 10
K 7 195 10

---

Bom. ed धृतराष्ट्रस्य — *Adhy no* (figures, words or both) Dn1 195, D2 198, D3 88, T G2 3 189, G1 M1. 2 188, G4 190, M3-5 187 — *Śloka no* Dn1 15]

16 ^a) G3 शात्मना (sic) (for छद्मना) D2 4 5 7 8 दृष्ट्वा (for श्रुत्वा) — ^d) Ś1 च परंतप, Dn1 D3 भरतर्षभ, G1 M1. 2 च नराधिप, M3-5 च नरर्षभ

17 D5 om 17 — ^a) B4 क्रोधेन (for क्रुद्धस्य) — ^b) K3 4 B Dc1 Dn दीप्तम् (for दिव्यम्) S (G5 missing) वपुरन्यत्प्रकाशते — ^c) K2 च (for [इ]व) — ^d) D3 जिघांसो, T G1. 2 4 M दिधक्षो (for जिहीर्षो) G3 दिधक्षोरिव मंक्षये

18 ^a) B Dc1 Dn1 D3 T G2-4 तोय-, D1 अस्तु, D3 अप्सु; G1 M वाष्प (for अश्रु) Dn2 G1 M1. 2 -पूर्णम् (for -पूर्णे) D6 तथा (for ततो) — ^b) Ś K3 4 B Dc1 Dn1 D1. 3 T G2-4 व्यपमृज्य, K1 उप°, K2 व्यसृज्य च, D5 M3-5 प्रमृज्य च, D6 अवमृज्य, G1 M1. 2 विमृज्य (M2 °ज्य) च (for अपमृज्य) — ^c) G1 M1. 2 रोषात् (for कोपात्) Dc1 Dn1 D2-6 M1. 2 5 निश्वस्य (for नि°) — ^d) Dn2 अथाब्रवीद् (for इदं वचः)

19 D4 om 19^abcde — ^a) K1 वृथा (for यथा) D5 7 8 क्रुद्धैर् (for क्षुद्रैर्) G1 M1. 2 क्षुद्रं यथा पिता क्षुद्रैर् — ^d) K4 मया, D1 6 S (G5 missing) तव (for मम) — ^e) K1 D2 3. 6-8 T सुनृशंस (D6 °स्य) च, G1-4 M1 2 च नृशंस च (for सुनृशंसस्य) B2-4 Dc1 Dn1 अनार्यस्य नृशंसस्य, Dn2 अनार्यं सनृशंस च, M3-5 अनार्यत्वं नृशंसं च — ^f) D6 धर्मराजस्य, T G2-4 °पुत्रेण (for °पुत्रस्य) Ś K (K1 missing) D1 शाश्वतं, D3 तच्छ्रुत, M1 मे श्रुत (for मे श्रुतम्) — After 19, G1 M ins,

1359* असत्यवाक्यं यत्तेन लोभादुक्तं दुरात्मना ।
राज्यहेतोर्नृशंसेन तथापि विदितं मया ।

[(L 1) M3-5 यत्नेन (for यत्तेन) —(L 2) M3-5 त्वया ]

20 ^a) B1 2 Dc1 Dn1 D4 T G1-4 M1 2 [अ]भि (for [अ]पि) — ^b) K3 B Dc1 Dn1 D2 ध्रुवं, D6 यथा (for ध्रुवौ) — ^c) D2 दैवम्, D4-6 दिष्टम्, G4 स्वयम् (for द्वयम्) — ^d) D2 धर्मस् (for वधस्) Ś1 D2-5 7 8 G1 M1 2 तस्य (for तत्र) D5 प्रपत्स्यते

21 ^a) Dn2 नापव्रजो, T G2-4 M3-5 न्याययुक्तो, G1 M1. 2 °युद्धे (for °वृत्तो) G4 वधे (for वधो) D6 S (G5 missing) यस्य (for यस्तु) — ^b) S (G5 missing) मतो मे (for संग्रामे) D7 संग्रामे युध्यतेभवत् — ^d) B4 Dn2 D3 8 यथा (for तथा) D2 भूतो, G1 M सृष्टो (M1 2 °ष्टौ) (for दृष्टो) D1 [ऽ]पि (for हि) K4 B Dc1 Dn2 D8 S (G5 missing) स द्विजै, D4 यद्वित (for स द्विज)

22 ^a) D4 प्रचार (sic), D5 प्रवीर (for स वीर-) — ^c) B1 3 Dc1 Dn1 D2 7 व्याघ्र (for -व्याघ्रस्) — ^d) B1 3 Dc1 Dn1 यस्तदा (B1 °था); D5 6 यथा स; D7 तथा सं (for तथा स) D8 पिता मम महामते. — After 22, D6 ins 1360*

23 D6 om 23^ab — ^a) D2 5 T G2 स (for सन्) — ^b) B1 2 Dc1 Dn1 D5 केशग्रहमवाप्तवान् — ^c) Ś1 -भूताना (for सैन्याना) — ^d) D7 8 मर्म नि (for मर्माणि) — B Dc1 Dn D3 5 ins (var) *Veṇī saṃhāra*, (Act 3, st. 37) after 23 D6 after 22

1360* मयि जीवति यत्तात केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ।

C 7 8100
B 7 197 19
K 7 198 21

आविध्य च गदां गुर्वीं भीमां काञ्चनमालिनीम् ।
गिरिप्रकाशान्क्षितिजान्भङ्क्ष्येयमनिलो यथा ॥ १८
स त्वमेवंविधं जानन्भ्रातरं मां नरर्षभ ।
द्रोणपुत्राद्भयं कर्तुं नार्हस्यमितविक्रम ॥ १९
अथ वा तिष्ठ बीभत्सो सह सर्वैर्नरर्षभैः ।
अहमेनं गदापाणिर्जेष्याम्येको महाहवे ॥ २०
ततः पाञ्चालराजस्य पुत्रः पार्थमथाब्रवीत् ।
संक्रुद्धमिव नर्दन्तं हिरण्यकशिपुं हरिः ॥ २१
बीभत्सो विप्रकर्माणि विदितानि मनीषिणाम् ।
याजनाध्यापने दानं तथा यज्ञप्रतिग्रहौ ॥ २२
षष्ठमध्ययनं नाम तेषां कस्मिन्प्रतिष्ठितः ।
हतो द्रोणो मया यत्तत्किं मां पार्थ विगर्हसे ॥ २३
अपक्रान्तः स्वधर्माच्च क्षत्रधर्ममुपाश्रितः ।
अमानुषेण हन्त्यस्मानस्त्रेण क्षुद्रकर्मकृत् ॥ २४
तथा मायां प्रयुञ्जानमसह्यं ब्राह्मणब्रुवम् ।
माययैव निहन्याद्यो न युक्तं पार्थ तत्र किम् ॥ २५
तस्मिंस्तथा मया शस्ते यदि द्रौणायनी रुषा ।
कुरुते भैरवं नादं तत्र किं मम हीयते ॥ २६

— $^{c}$ ) Ś1 K3 Dn2 D2 5–8 दितिजान्, D4 गिरि° (for क्षिति° ) — $^{d}$ ) K1 भग्नेयम् (for भङ्क्ष्ये° ) D3 ह्यनिलो (for म° ) — After 18, B Do1 Dn D3 ins. 1382*

19 Ś2 missing (cf v 1 1) — $^{a}$ ) D2 5 तत्, D4 न (for स) D2 धीर, D4 5 7 G2 राजन् (for जानन्) — $^{b}$ ) G1 M1 2 मा (for मां) D6 धनंजय (for नरर्षभ) D2 भ्रातरं भरतर्षभ — D6 om 19$^{cd}$ — $^{c}$ ) T G2–4 गंतु (for कर्तुं) — $^{d}$ ) D7 -विक्रम

20 Ś2 missing (cf. v 1 1) — $^{b}$ ) D3 सर्वैर् (for सह) D2 सैन्यैर्, D3 एभिर् (for सर्वैर्) B Do1 Dn1 सहोदरैः, D4 5 G2 नरर्षभ, M3–5 नराधिपैः (for नरर्षभैः) — $^{c}$ ) Ś1 K3 G3 4 एव; K1 2 B5 एको (for एनं) — $^{d}$ ) K1 2 D1 एतान्; B5 एन (for एको) Dn2 महारणे, D2 4 5 7 8 रणाजिरे (for महाहवे)

21 Ś2 missing (cf v 1 1) Dn2 S (G5 missing) transp 21$^{ab}$ and 21$^{cd}$ — $^{a}$ ) Ś1 तथा (for ततः) B4 Do1 D4 6 8 पचाल- (for पाञ्चाल) G1 M1 2 पाचालराजस्य सुतस् — $^{b}$ ) T G2–4 M3–5 सुतस्तं पार्थम ब्रवीत्, G1 M1 2 त पार्थमिदम° — $^{c}$ ) D6 आक्रंदम् (for संक्रुद्धम्) K1–3 नर्द( K1 °द )त, Dn2 गर्जंत (for नर्दन्तं) — $^{d}$ ) K4 D6 हरिं (for हरिः) B3–5 Do1 Dn2 D5 हिरण्यकशिपुर्हरिं (D5 °रि )

22 Ś2 missing (cf v 1 1) Before 22, MSS ins धृष्टद्युम्न उवाच, Dn1 धृतराष्ट्र उवाच — $^{a}$ ) Ś1 K1–3 D4 कीर्णानि, D5 6 -चीर्णानि (for कर्माणि) — $^{b}$ ) Ś1 K1–3 D1–3. 5–8 विधीयते, D4 वा वीर्यते (for विदितानि) S (G5 missing) विहि( G2 M5 °दि )तानि मनीषिभि — $^{c}$ ) Dn2 D3 य( D3 या )जनाध्ययने दान — $^{d}$ ) D3 यज्ञे, D6 यज्ञ (for यज्ञ-) D5 -परि (for प्रति ) G2–4 तथा यज्ञ प्रतिग्रह

23 Ś2 missing (cf v 1 1) — $^{a}$ ) B4 अध्यापन (for अध्ययन) S (G5 missing) कर्म (for नाम) — $^{b}$ ) G1 तस्मिन् (for क°) Ś1 K3 M4 प्रतिष्ठित — $^{c}$ ) K1 2 यत्त, K4 D3 यत्तु, B Do1 Dn1 D1 ह्येवं, D6 य तत्, S (G5 missing) यन्माम् (for यत्तत्) — $^{d}$ ) S (G5 missing) एव (for किं मां) M4 पार्थिव (for पार्थ वि ) D4 5 7 8 विगर्हसि, D6 [अ]वगर्हसि (for विगर्हसे)

24 Ś2 missing (cf. v 1 1) — $^{a}$ ) M3–5 अपा क्रांत (for अप°) — $^{b}$ ) Dn2 D3 क्षात्रधर्मम्, S (G5 missing) बाहुवीर्यम् (for क्षत्रधर्मम्) K4 D2 4 5 G2 M1 2 अ( K4 व्य )पाश्रित, D6 उपस्थितं (for उपाश्रित ) B Do1 Dn1 क्षात्र ( B5 क्षत्रे ) धर्मं व्यपाश्रित — $^{c}$ ) S (G5 missing) अधर्मेण हतस्तस्माद् — $^{d}$ ) D3 क्रूर (for क्षुद्र-)

25 Ś2 missing (cf v 1. 1) D4 om 25–28 — $^{a}$ ) D7 8 माया G1 M1 2 य( G1 त )था माया प्रकुर्वाणम् — $^{b}$ ) Ś1 K1 3 अशक्यं, D5 7 असह्या (for असह्य ) K2 D1 3 अशक्य (D3 °सह्या ) ब्राह्मण ध्रुव — $^{c}$ ) T G2–4 प्रतिमायी, G1 M3–5 प्रतिमायो, M1 2 प्रतिमाया (for माययैव ) B1 Do1 Dn1 हि हन्याद्यो, D2 5 निहंतव्यो, D6 निहत्याजौ (for °न्याद्यो ) — $^{d}$ ) K1 2 Dn2 D1. 5 तत्र पार्थ (by transp )

26 Ś2 missing up to द्रा (cf v 1. 1) D4 om 26 (cf v 1 25) — $^{a}$ ) M1 2 कस्मिंस् (for त° ) D7 8 तदा (for तथा) Ś1 K1–3 Do1 Dn1 D1 3 शास्ते, D5 शांते (for शस्ते) — $^{b}$ ) Some MSS द्रोणायनी (for द्रौणा° ) D6 यदि द्रौणिर्विपौरुषे — $^{cd}$ ) D7 8 कुरुते भैरवान्नादांस्तत्र किं नाम पौरुषं

न चाद्भुतमिदं मन्ये यद्द्रौणिः शुद्रगर्जया ।
घातयिष्यति कौरव्यान्परित्रातुमशक्नुवन् ॥ २७
यच्च मां धार्मिको भूत्वा ब्रवीषि गुरुघातिनम् ।
तदर्थमहमुत्पन्नः पाञ्चाल्यस्य सुतोऽनलात् ॥ २८
यस्य कार्यमकार्यं वा युध्यतः स्यात्समं रणे ।
तं कथं ब्राह्मणं ब्रूयाः क्षत्रियं वा धनंजय ॥ २९
यो ह्यनस्त्रविदो हन्याद्ब्रह्मास्त्रैः क्रोधमूर्छितः ।
सर्वोपायैर्न स कथं वध्यः पुरुषसत्तम ॥ ३०
विधर्मिणं धर्मविद्भिः प्रोक्तं तेषां विषोपमम् ।
जानन्धर्मार्थतत्त्वज्ञः किमर्जुन विगर्हसे ॥ ३१
नृशंसः स मयाक्रम्य रथ एव निपातितः ।
तन्माभिनन्द्यं बीभत्सो किमर्थं नाभिनन्दसे ॥ ३२
कृते रणे कथं पार्थ ज्वलनार्कविषोपमम् ।
भीमं द्रोणशिरश्छेदे प्रशस्यं न प्रशंससि ॥ ३३
योऽसौ ममैव नान्यस्य बान्धवान्युधि जघ्निवान् ।
छित्त्वापि तस्य मूर्धानं नैवास्मि विगतज्वरः ॥ ३४ C 7 9117 B 7 197 36 K 7 198. 28

---

27 D4 om. 27 (cf v l 25) — [a]) Dc1 D8. 6-8 क्षुद्र (for क्षुद्र) Dn1 न चाद्भुततमं मन्ये — [b]) K1 B4 5 Dc1 युद्ध- (for शुद्र ) B2 5 गर्जनात् (for °या) K4 Dn3 D2 8 5 यद्द्रौणिर्युद्धसज्ञया, Dn1 यदि द्रौणिश्च गर्जति, D7 8 यद्द्रौणि प्रतिगर्जति, T G3 4 °णिश्चात्र गर्जति, G2 °णिस्तु गर्जति — [c]) B2-4 कौरव्य (B4 °व्य) (for °व्यान्)

28 D4 om. 28 (cf. v 1 25) — [a]) D1 G1 M मा (for मा) — [b]) T पार्थिवं (for -वा°) — [d]) K1 2 D1 S (except G1, G5 missing) पाचालस्य (for पाञ्चाल्यस्य)

29 Dn2 om 29[ab] — [b]) Dc1 Dn1 [s]स्यान् (for स्यात्) G2 धनजय (for सम रणे) — [c]) B1 M1. 2 तथा (for कथं) Dn1 D1 ब्रह्मण (for ब्रा°) K1 ब्रूय, K3 D6 G1 M ब्रू (M1 ब्रू) यात्, T G3 ब्रूया (for ब्रूया) Dn2 G2 ब्राह्मणं त कथं *या — [d]) Ś K1 2 D1 8 क्षत्रियं च, D4 6 7 8 क्षत्र वा त्व (for क्षत्रियं वा) G2 सम रणे (for धनजय)

30 [a]) D6 विदं (for -विदो) — [c]) M3 om स D6 कथं सोढ्य (for न स कथ) — [d]) D2 5 G1 M1 पुरुषसत्तम D6 न वध्य पाडुनदन — After 30, T G2-4 M2. 5 ins

1383* विशेषात्पितृहन्ता मे न स वध्य कथं मया ।
योऽयं पाप सुदुर्मेधा बान्धवान्युधि जघ्निवान् ।
तस्य विप्रमुववधे कथ पाप भवेन्मम ।

[(L 2) M2 5 अधि (for युधि) G3 जघ्नवान् (sic) (for जघ्नि°) — M2. 5 om line 3 ]

31 [a]) D7 8 विधर्मिणो (for °णं) B1-4 Dc1 Dn1 D6 धर्मविदा, B5 °विद, G1. 3 4 M °विदा (G3 4 °द) (for धर्मविद्भि) — [b]) D3 प्रोक्तस् (for प्रोक्त) Ś K1 2 D1 3 तेन, Dn2 D4-6 एतद्, T G1 3 4 M ते किं (for तेषां) D2 प्रोक्तमेवद्वियोधन, D7 8 प्रोक्तास्तेन विषोपमा — [c]) K4 B Dc1 Dn1 D3 5 7 8 G1 M -तत्त्वज्ञ, Dn2 -तत्त्वत (for -तत्त्वज्ञ) Ś K1. 2 (inf lin as in text) 8 D1 ज्ञानतत्त्वार्थधर्मज्ञ, D6 ज्ञानधर्मार्थतत्त्व तु — [d]) T G1 M किं मा (G1 M3-5 मा) पार्थ, G2-4 किं (G3 कं) वा पार्थ (for किमर्जुन) K4 B Dc1 Dn1 D6 किं मामर्जुन गर्हसे

32 [a]) G2 तथा (for मया) — [b]) D6 रथादेव, G1 M1 2 रथमेवं (for रथ एव) — [c]) K4 स माम निंद्यो, Dc1 Dn2 D2 3. 6 तन्मा(Dn2 तं मा)मनिंद्य, Dn1 तत्राभिनद्यं, D4 5 7 8 तस्मादनिंद्यं (D4 °दं), M1 2 5 त माभिनद्यं (for तन्माभि°) — [d]) B Dc1 Dn1 D2 4-8 नाभिनदसि

33 [a]) D2 कृत (for कृते) K2 रथ (for कथ) B Dc1 Dn D1 6 S (G5 missing) कालानलसम (T G1-4 M1 2 °समे, M2. 5 °समै, M4 °सम) पार्थ, D4 7 8 कृत रणे कर्म पार्थ, D5 कृत कर्म रणे पार्थ — [b]) D8 T G1-4 M1 2 -विषोपमे; M3. 4 °पमै, M5 °पम (for °पमम्) B4 ज्वलंत स्वेन तेजसा — [c]) B4 वीक्ष्य, D1 7 भीष्म, D8 5 T G1 3. 4 M भीमे, D4 भीम- (for भीम) K4 शिरश्छेदे, B Dc1 Dn1 °श्छिद्य, D2 6 श्छेदं (for °श्छेदे) — [d]) K2 M1 2 प्रशस्य, K4 प्रससे (sic), D1 प्रशमे, D2 प्रशस्य, D6 प्रशस्यन् (for प्रशस्यं) D6 त्वं (for न) B5 प्रशस्यसि B1-4 Dc1 Dn1 न प्रशससि मे कथ, Dn2 प्रशस्यप्रशम संससि (sic)

34 [a]) G2 योसौ द्रोणो महेष्वासो — [b]) Ś K1 2 D1 अभि-, D6 मम (for युधि) D4 5 7 8 बांधवा न्ययधमद्रणे — [c]) G3 भित्त्वा (for छित्त्वा) D6 तु (for [अ]पि) K1 श्रुत्वा पितुश्च मूर्धानं (sic)

C 7 9118
B 7 197 27
K 7 196 40

तच्च मे कृन्तते मर्म यन्न तस्य शिरो मया ।
निपादविषये क्षिप्तं जयद्रथशिरो यथा ॥ ३५
अवधश्चापि शत्रूणामधर्मः शिष्यतेऽर्जुन ।
क्षत्रियस्य ह्ययं धर्मो हन्याद्धन्येत वा पुनः ॥ ३६
स शत्रुर्निहतः संख्ये मया धर्मेण पाण्डव ।
यथा त्वया हतः शूरो भगदत्तः पितुः सखा ॥ ३७
पितामहं रणे हत्वा मन्यसे धर्ममात्मनः ।
मया शत्रौ हते कस्मात्पापे धर्मं न मन्यसे ॥ ३८
नानृतः पाण्डवो ज्येष्ठो नाहं वाधार्मिकोऽर्जुन ।
शिष्यध्रुग्निहतः पापो युध्यस्व विजयस्तव ॥ ३९

इति श्रीमहाभारते द्रोणपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

35 a) D4 क्षतते (for कृन्तते) D6 तच्च मे कृतमेतेन — b) Ś K1-3 न च, D6 यत्तु (for यन्न) — G2 om 35cd — c) Dn1 निषंद (for निपाद) B5 D4 7 8 विपय (for °ये) D6 8 क्षिप्र (for क्षिप्त) — d) D6 मया (for यथा)

36 Dn1 om 36 — a) K4 अवधे कस्मिन्, B1 2 T G2-4 °ध्ये ह्यपि, B3-5 G1 M °धे ह्यपि, Dn2 अथा वधेश्च, D1 अवध च हि, D2 अयो वधे च, D8 अवधाच्च हि, D4.5 अयो वधश्च, D6 उपपन्नश्च (for अवधश्चापि) Ś K1-3 हि (for [श्च]पि) — b) Ś K1-3 D1 अधर्मात्, D4 अवध्य, G3 4 यो धर्म (for अधर्म) K4 B Dc1 Dn2 T G2 श्रूयते (for शिष्यते) — c) Dn2 D2 4-8 T G2-4 तु, D3 च (for हि) Ś1 K1 2 4 D1 6 [श्च]सौ धर्मो, B Dc1 S (G5 missing) धर्मोय (by transp), D2-5 7 8 यो धर्मो — d) D6 धर्मेण, T G1-4 M1 2 वध्येत (for हन्येत) S (G5 missing) परै (for पुन)

37 a) G1 M सखे (for सख्ये)

38 a) D6 तया (for रणे) — b) Dn1 मन्यसे धर्मं पाडव (sic) — c) D3 ममापि निहते शत्रौ — D4 om 38d — d) B1 D2 5 7 8 पार्थ, D6 मम (for पापे) D6 अन्यं, D7 8 मा (D8 मा) त्व (for धर्मं) — K4 B Dc1 Dn D4 ins after 38 D2 3 5 6 8 after 39 D7 after the second occurrence of 39

1384* संबन्धावनत पार्थ न मा त्वं बहु मन्यसे ।
स्वगात्रकृतसोपान निपण्णमिव दन्तिनम् ।
क्षमामि ते सर्वमेव वाग्व्यतिक्रममर्जुन ।
द्रौपद्या द्रौपदेयाना कृते नान्येन हेतुना ।
कुलक्रमागत वैर ममाचार्येण विश्रुतम् । [5]
तथा जानात्ययं लोको न यूयं पाण्डुनन्दना ।

[ D7 reads line 1 for the first time after the first occurrence of 39 — (L 1) D4 om. from सबन्धा up to मेव (in line 3) K4 मबधिन च ते पार्थ, B1 स युद्धावमत पार्थ, D3 सर्वधावनत पार्थ (for the prior half) Dn2 मा (for मा) K4 Dn2 वक्तुमर्हसि (for बहु मन्यसे) — (L 2) D5 7 8 -सोपान- (for °न) Dn1 विपण्णम्, D2 5 7 विषाणम्, D3 8 निषाणम् (for निपण्णम्) K4 D8 दतिन°, B5 D2 5.6 दन्तिनां (for °नम्) — (L 3) D2 6 7 एतद्, D8 इद (for एव) D4 क्षमामि सर्वमेवैतद् (for the prior half) — (L 5) B1 वै श्रुत (for विश्रुतम्) — (L 6) D3 4 6-8 यथा (for तथा) D4 7 8 लोके (for लोको) K4 Dn1 D3-5 नदन ]

39 D4 om 39 D7 reads 39 twice (inserting line 1 of 1384* for the first time, after the first occurrence of 39) — a) B Dc1 Dn D5 S (G5 missing) नानृती, D2 °त (for °त) K2 G3 4 M1-3 पाडव-, G1 पाडव (for पाण्डवो) — b) Ś1 B1 Dc1 च, T G3 न, G4 मा (for वा) D5 6 G1.2 M3 4 आधार्मिको, M1 2 5 आध° (for वाधा°) D1 न चाहं धार्मिकोर्जुन; D7 8 न चैवाहमधार्मिक — After 39cd, TG2-4 ins

1385* न क्षत्रिय इति प्राहुर्यो न हन्ति रणाजिरे ।
पितर वा गुरु वापि जिघासु पुत्रशिष्ययो ।
जिह्मेन वाप्यजिह्मेन हन्यादेवाविचारयन् ।
इत्युक्तं ब्रह्मणा पूर्वं क्षत्रियाणा द्विपद्वधे ।
तस्माच्छिष्येण निहत शत्रुर्मे ब्राह्मणब्रुव । [5]
य क्षत्रियसुतो हन्यात्पितर वा गुरु च वा ।
अनिष्ट क्षत्रियो हन्यात्स वै क्षत्रिय उच्यते ।

# १६९

धृतराष्ट्र उवाच ।
साङ्गा वेदा यथान्यायं येनाधीता महात्मना ।
यस्मिन्साक्षाद्धनुर्वेदो ह्रीनिषेधे प्रतिष्ठितः ॥ १
तस्मिन्नाक्रुश्यति द्रोणे महर्षितनये तदा ।
नीचात्मना नृशंसेन क्षुद्रेण गुरुघातिना ॥ २
यस्य प्रसादात्कर्माणि कुर्वन्ति पुरुषर्षभाः ।
अमानुषाणि संग्रामे देवैरसुकराणि च ॥ ३
तस्मिन्नाक्रुश्यति द्रोणे समक्षं पापकर्मिणः ।
नामर्षं तत्र कुर्वन्ति धिक्क्षत्रं धिगमर्षितम् ॥ ४
पार्थाः सर्वे च राजानः पृथिव्यां ये धनुर्धराः ।
श्रुत्वा किमाहुः पाञ्चाल्यं तन्ममाचक्ष्व संजय ॥ ५
संजय उवाच ।
श्रुत्वा द्रुपदपुत्रस्य ता वाचः क्रूरकर्मणः ।
तूष्णींबभूवू राजानः सर्वे एव विशां पते ॥ ६
अर्जुनस्तु कटाक्षेण जिह्मं प्रेक्ष्य च पार्षतम् ।
सबाष्पमभिनिःश्वस्य धिग्धिग्धिगिति चाब्रवीत् ॥ ७

C 7 8132 B 7 198 7 K 7 199 7

---

—$^{e}$) D1 शिष्यध्रुक्, D6 द्रुह्, T G2 8 शिष्येण (for शिष्यध्रुक्) Ś K2 8 D1 5 7 8 सख्ये, K1 lacuna (for पापो) K4 B Dc1 Dn D2 3 G4 शिष्यद्रोही हत (B5 तया) पापो (D2 8 मंत्र्ये) — D2 8 5 6 8 ins 1384* after 39, D7 ins it after the second occurrence of 39

Colophon K5 G5 missing — *Sub-parvan* K8 नारायणास्त्रमोक्ष — *Day of Drona's Generalship* K2 4 पचमदिवसे, T G8 पंचमेहनि — *Adhy name* K8 D5 धृष्टद्युम्नवाक्यं — *Adhy no* (figures, words or both) K8 197, Dn1 198, D2 200, D8 91, T G2 8 192, G1 M1 2 191, G4 193, M8-5 190 — *Śloka no* Dc1 Dn1 44

## 169

☞ This adhy is missing in K5 G5 (cf. v 1. 7 125 14, 137 9)

1 $^{a}$) D3 S (G5 missing) सांगो वेदो Ś1 D1 यथान्याय्य —$^{b}$) D3 S (G5 missing) येना(G8 यो ना) धीतो —$^{c}$) D6 यस्य (for यस्मिन्) —$^{d}$) K8 B Dc1 Dn ह्रीनिषेवे, D7 8 °ध (for °धे) — After 1, K2 D2 read 4$^{ab}$

2 K2 D2 om 2 Dn2 om. 2$^{ab}$ K1 transp 2 and 3 —$^{a}$) Ś1 K1 3 D8 चाकुश्यति; D1 चाक्रुभ्यति, D8 ब्रह्मास्त्रविद्, D4 च क्रुशिते, D7 च क्रुश्यति (for आक्रु°) D5 तस्मिंश्च ऋषिते द्रौणिर् (sic) —$^{b}$) D6 ऋषेश्च (for महर्षि-) D8 M2-5 यथा, D6 8 T G1-4 M1 तथा (for तदा) — K4 repeats 2$^{cd}$ after 3 —$^{c}$) T G2 4 नीच कर्म कृत तेन

3 K1 transp 2 and 3 —$^{ab}$) B Dc1 Dn1 कुर्वन्ति कर्माणि (by transp) D4 न कुर्वंति नरर्षभा, D6 कुर्वंति भरतर्षभा, D7 8 प्रकुर्वंति नरर्षभा (for $^{b}$) —$^{c}$) Ś K2-4 D1 कुर्वाणा, K1 कर्माणि, Dn2 सर्वाणि (for संग्रामे) —$^{d}$) Dn1 देवैरपि सुराणि च, G2 दैवान्यप्यासुराणि च — After 3, K4 repeats 2$^{cd}$

4 K1 4 B3 D7 om 4$^{ab}$ K2 D2 read 4$^{ab}$ after 1 —$^{a}$) Dn2 ते स; D1 तस्मान् (for तस्मिन्) K2 D1 [आ]क्रुष्यति, D2 [आ]कर्षिते, D5 [आ]शाकुवति (hypermetric) (for [आ]क्रुश्यति) —$^{b}$) G4 सपक्ष (for समक्षं) Ś K2 8 -कर्मणा, B (B8 om) Dc1 Dn D1 2 4-6 8 M1. 2 5 -कर्मणा, D8 G8 4 -कर्मण —$^{c}$) D5 नामर्षयन्न कुर्वंति —$^{d}$) Ś K1-8 D1 क्ष(D1 क्षा)त्रं धिग् (by transp), K4 B Dc1 Dn D2 G1 M1 2 धिक्क्षात्र Ś1 K2 अमर्षणं; K1 र्षित, K4 B (except B5) Dn2 D2 8 T G8 र्षिता, D6 मनुष्यता; G1 2 4 M अमर्षता (for र्षितम्)

5 $^{b}$) D4 च (for ये) —$^{c}$) M1 पांचालं D6 किमाहुस्तत्र पाचाल्य

6 D7 om the ref —$^{b}$) Dn2 om from वाच up to धिग्गिति (in 7$^{d}$) Dn1 ता वाच, D2 ते वच (for ता वाच) —$^{c}$) D2 4 5 7 8 तूष्णीं(D4 कृष्णा) भूतास्तदा राजन्, D6 व्यलीकमभ्यमन्यत —$^{d}$) D6 राजानो ये समागता

7 Dn2 om up to धिग्गिति (cf v 1 6) —$^{b}$) K4 B Dn1 S (G5 missing) विप्रेक्ष्य, Dc1 D2 8 5 7 8 प्रेक्ष(D7 क्ष्य)त, D4 प्रेक्षत, D6 प्रेक्ष्यति (for प्रेक्ष्य च) Ś1 K8 प डवं (for पार्षतम्) — K2 om

C. 7 8133
B. 7 198 7
K. 7 199 6

युधिष्ठिरश्च भीमश्च यमौ कृष्णस्तथापरे ।
आसन्सुव्रीडिता राजन्सात्यकिरिदमब्रवीत् ॥ ८
नेहास्ति पुरुषः कश्चिद्य इमं पापपूरुषम् ।
भाषमाणमकल्याणं शीघ्रं हन्यान्नराधमम् ॥ ९
कथं च शतधा जिह्वा न ते मूर्धा च दीर्यते ।
गुरुमाक्रोशतः क्षुद्र न चाधर्मेण पात्यसे ॥ १०
याप्यस्त्वमसि पार्थैश्च सर्वैश्चान्धकवृष्णिभिः ।
यत्कर्म कलुषं कृत्वा श्लाघसे जनसंसदि ॥ ११
अकार्यं तादृशं कृत्वा पुनरेव गुरुं क्षिपन् ।
वध्यस्त्वं न त्वयार्थोऽस्ति मुहूर्तमपि जीवता ॥ १२
कस्त्वेतद्व्यवसेदार्यस्त्वदन्यः पुरुषाधमः ।
निगृह्य केशेषु वधं गुरोर्धर्मात्मनः सतः ॥ १३
सप्तावरे तथा पूर्वे बान्धवास्ते निपातिताः ।
यशसा च परित्यक्तास्त्वां प्राप्य कुलपांसनम् ॥ १४

7c–8b — a) K4 B3–5 Dc1 Dn1 अति-, B1 D3 G1 अपि (for अभि) K1 B (except B4) D6 M1 2 5 -निश्वस्य, Dn1 विश्वस्य (for निःश्वस्य) — d) K1 D3 T G2 M3 om the first धिक् B6 त्वां (for the second धिग्) K4 Dc1 D3 G1 M1 2 इत्येव, B3 Dn1 D1 इति स (D1 च), G4 इति व (for धिगिति) D7 स्ये च धिग्धिगीत्यब्रवीत् (s10)

8 K2 om 8ab (of v l 7) — c) B1 Dn2 सव्री-डिता; D4 5 सं°, S (G5 missing) सु (G4 स) व्रीळिता (for सुव्रीडिता) Ś2 सर्वे (for राजन्) D6 आसन्सुव्री डिता सर्वे — d) N (except Ś K3 D6, K5 missing) transp इदं and अब्रवीत्

9 Before 9, M3–5 ins सात्यकिरुवाच — a) Dn2 न स्वस्ति; D4 5 7 8 न ह्यस्ति (for नेहास्ति) — b) D1 यदमु (for य इम) K1 D4 5 7 8 पौरुष (for पूरुषम्) D6 यो ह्येन पापनिश्चय — c) D6–8 भाषमाणं गुरोर्निं (D8 °रुर्निं) दा — After 9, N (K5 missing) ins

1386* एते त्वा पाण्डवा सर्वे कुत्सयन्ति विवित्सया ।
कर्मणा तेन पापेन श्वपाकमिव ब्राह्मणा ।

[(L 1) Ś2 K1 2 त्वा, Dn1 तु (for त्वां) Dn1 कुत्सयतो K1 B3–5 Dc1 Dn1 विकुत्सया, K2 विव, Dn2 चिकि°, D4 5 7 8 विधि°, D6 विवित्सव (for °या) — (L 2) Ś2 K1 2 B1 2 4 Dn2 D1 [अ]नेन, B3 Dn1 येन (for तेन) Ś1 Dc1 D5 6 इव माह्मण, Ś2 K1 2 4 Dn2 D1 2 माह्मणा इव (by transp).]

— N (K5 missing) cont G1 M1 2 ins after 12ab

1387* एतत्कृत्वा महत्पाप निन्दितं सर्वसाधुभि· ।
न लज्जसे कथ वक्तु समितिं प्राप्य शोभनाम् ।

[(L 1) G1 M1 2 एव (for एतत्) D8 महा (for महत्) B2 3 5 Dn2 G1 निंदित· Dc1 -राजभि (for -साधुभि) K4 D1 निंदित साधु साध्विति (for the post half) — D2 4 om. line 2, B3 reads it on marg — (L 2) D5 शोमन (for °नाम्)]

10 D2 4 om 10a–11b D5 om 10 — ab) Ś K1–3 D1 7 8 न, D8 तु (for च) Ś2 D3 transp जिह्वा and मूर्धा D7 8 च (for ते) K2 जिह्वा (for मूर्धा) Ś1 विदीर्यते, Ś2 K (K5 missing) D1, 7 8 विदी°, B6 च जीर्यते, D3 T G2 M च दी°, D6 [अ]तुदी°, G1 [अ]पि दी°, G3 [अ]वदी° (for च दी°) — c) Dn2 आक्रो शता M3 क्षिप्र (for क्षुद्र) K1 2 4 D1 आक्रोशत (K4 D1 °शस्तं) गुरु हत्वा — d) K4 M4 धर्मेण (for [अ]ध°) D7 8 दीर्यसे (D8 °ते), M3–5 पात्यते (for °से) D6 न च धर्मेण वध्यसे

11 D2 4 om 11ab (of v l 10) — a) Ś K1 2 याप्यस्, K3 D1 त्याज्यस्, K4 प्राप्यस्; B1–4 Dc1 Dn D5 7 8 वाच्यस्, D3 T G3 4 वध्यस् (for याप्यस्) D7 8 अपि (for असि) B5 शोच्यस्त्वमपि पापिष्ठ, D6 त्याज्यस्त्वमसि पार्थैयै — b) D6 कैकयैश्चैव सोमकैः — c) Ś1 K3 य कर्म, D6 यत्र त्व (for यत्कर्म) — d) D3 S (G5 missing) राज-, D4 येन (for जन) D6 श्लाघसे रणमूर्धनि

12 a) Dn2 D4 5 7 8 अनार्यं (Dn2 °र्यें) (for अ कार्यं) — b) Ś K (K5 missing) Dn2 D1, 2 4, 7 8 गुरुं द्विषन्, D5 द्विषन्गुरून्, D6 गुरुक्षय (for गुरु क्षिपन्) — After 12ab, G1 M1 2 ins 1387*

13 D7 om 13a–14b — a) D8 पार्थस्, G2 ना न्यस् (for आर्यस्) — b) K4 B1 2 5 Dc1 D5 6 T G1 4 M1 2 पुरुषाधम — cd) B4 D8 विगृह्य (for नि°) D8 सत· (for सत) D6 सर्वधर्मोपपन्नस्य केशान्गृह्य गुरोर्वधं

14 D7 om 14ab (of v l 13) — a) K2 सतां वरे, G1 4 M1 2 5 ससापरे (for °वरे) — b) K3 B Dc1 Dn1 D6 S (G5 missing) निमज्जिता (for निपा तिता) — d) B1 4 कुलपाशनं, Dn1 D4 M3 °सन

15 a) Ś1 K3 T G2–4 चासि, M3–5 चैव (for

उक्तवांश्चापि यत्पार्थ भीष्मं प्रति नरर्षभम् ।
तथान्तो विहितस्तेन स्वयमेव महात्मना ॥ १५
तस्यापि तव सोदर्यो निहन्ता पापकृत्तमः ।
नान्यः पाञ्चालपुत्रेभ्यो विद्यते भुवि पापकृत् ॥ १६
स चापि सृष्टः पित्रा ते भीष्मस्यान्तकरः किल ।
शिखण्डी रक्षितस्तेन स च मृत्युर्महात्मनः ॥ १७
पाञ्चालाश्चलिता धर्मात्क्षुद्रा मित्रगुरुद्रुहः ।
त्वां प्राप्य सहसोदर्यं धिक्कृतं सर्वसाधुभिः ॥ १८
पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि ।
शिरस्ते पातयिष्यामि गदया वज्रकल्पया ॥ १९
सात्वतेनैवमाक्षिप्तः पार्षतः परुषाक्षरम् ।
संरब्धः सात्यकिं प्राह संक्रुद्धः प्रहसन्निव ॥ २०
श्रूयते श्रूयते चेति क्षम्यते चेति माधव ।
न चानार्यं शुभं साधुं पुरुषं क्षेप्तुमर्हसि ॥ २१
क्षमा प्रशस्यते लोके न तु पापोऽर्हति क्षमाम् ।
क्षमावन्तं हि पापात्मा जितोऽयमिति मन्यते ॥ २२

C 7 8152
B 7 193. 27
K 7 199 27

---

चापि ) K₄ Dn₂ D₂ G₃ यत्पार्थं ( D₂ °र्थे ), D₁ ₆ यत्स्यार्थे, G₂ च पार्थं ( for यत्पार्थं ) — ᵇ ) Ś₁ B₁ Dn₂ M₄ ₅ नरर्षभ, D₅ महारथ ( for नरर्षभम् ) — ᶜ ) K₁ ₂ तथार्तो ( for न्तो ) D₅ तथा वद्विहित तेन

16 ᵃ ) D₅ हि म ( for तव ) K₂ Dn₂ D₃ ₅ ₆ सौ द्यों, D₁ मैन्या॰ ( for सोदर्यो ) — ᵇ ) B₅ D₁ कृत्तम; D₅ सत्तम, G₂ -पूरुष ( for -कृत्तम: ) D₆ निहंता ते नराधम — ᶜ ) Dn₂ पाचाल्य — ᵈ ) D₆ S ( G₅ missing ) लोके विद्येत पापकृत्

17 ᵇ ) D₂ चिकीर्षया ( for -कर: किल ) — ᶜ ) B₁ ₂ येन, B₃₋₅ Dc₁ Dn₁ D₆ [ऽ]नेन ( for तेन ) — ᵈ ) K₄ D₁ ₅ ₇ ₈ महात्मना

18 ᵃ ) D₁ पाचालाश्चापि वान्धर्मान् — ᵇ ) D₁ क्षुद्र-मित्र , T G₂₋₄ क्षत्रधर्म , G₁ M क्षत्रमित्र ( for क्षुद्रा मित्र ) — ᶜ ) D₇ त ( for त्वा ) D₅ चापि ( for प्राप्य ) K₁ महसोदार्यं, D₁₋₃ °सौदर्यं, D₆ सौदर्यैर्, G₁ M₁ ₂ सोदर्याद् B नित्याश्च सह सोदर्यैर् — ᵈ ) D₆ निकृत, T न्यकृता , G₁ M धिकृता , G₂ निकृत्ता , G₃ न्यत्कृता ( sic ), G₄ तत्कृता ( for धिकृत ) B₅ धिकृता सर्वराजभि

19 ᵃ ) Dn₁ चापि, D₃ त्वमी ( for चेद् ) Ś₁ K₃ ईदृशां वाच, Dn₂ D₄ S ( G₅ missing ) °शा वाचो ( Dn₂ °चं ) — ᶜ ) K₁ B Dc₁ Dn₁ T G₁ M पोथयिष्यामि ( for पात° ) — After 19, K₁ B Dc₁ Dn D₁ ₅ ₆ ins

1388* त्वा च ब्रह्महण दृष्ट्वा जन सूर्यमवेक्षते ।
ब्रह्महत्या हि ते पाप प्रायश्चित्तार्थमात्मन ।
पाञ्चालक सुदुर्वृत्त ममैव गुरुमप्रत ।
गुरोर्गुरु च भूयोऽपि क्षिपन्नैव हि लज्जसे ।
तिष्ठ तिष्ठ सहस्वैकं गदापातमिमं मम । [5]
तव चापि सहिष्येऽह गदापातानेकश ।

[ D₅ om lines 1–5 — ( L 1 ) Dn₁ D₆ तु ( for च ) — ( L 2 ) B₃ Dc₁ Dn₁ D₁ पाप ( for पाप ) B₅ ब्रह्महन्त्वाहि तीर्थानि, D₆ ब्राह्मण न्याहरन्क्षुद्र ( for the prior half ) — B₁ om lines 3–6 — ( L 3 ) B₁ ₂ Dc₁ Dn₁ पांचाल्येषु दुवृत्त, D₆ °लापसदासाधो ( for the prior half ) D₆ [द]व ( for [द]व ) — ( L 4 ) D₁ च भूयो मे, D₆ नैव भूय ( for च भूयोऽपि ) B₅ गुरु चैव हि भूयोपि, Dn₂ पुरोगुरुवध योपि ( for the prior half ) Dc₁ Dn₁ ब्रुवन् ( for क्षिपन् ) B₁ ₃ ₅ Dn₂ D₁ नैवह, Dc₁ Dn₁ नेवेह ( sic ), D₅ चैव न ( for नैव हि ) — ( L 5 ) Dc₁ Dn₁ इद ( for इम ) ]

20 Before 20, M₃₋₅ ins सजय उवाच — ᵃ ) D₅ सात्यकेन ( for सात्वतेन ) G₂ उक्तस्तु ( for क्षाक्षिप्त ) D₅ सात्यकेन तथाक्षिप्त — ᵇ ) G₁ M₁ ₂ पाचाल्य ( for पार्षत ) Ś₁ K₁ ₃ D₂ ₄ ₆ ₈ परुषाक्षर — ᶜ ) K₃ ₄ B Dc₁ Dn₂ D₂ ₃ ₈ T G₂₋₄ सरब्धं; M₃₋₅ सक्रुद्ध ( for संरब्ध ) — ᵈ ) Dn₁ M₃₋₅ सक्रुद्ध ( for °द्ध ) M₃₋₅ प्रदहन् ( for प्रहसन् ) D₅ क्रोधेन प्रहरन्वच

21 Before 21, MSS ins धृष्टद्युम्न उवाच — ᵃ ) Dn₂ S ( G₅ missing ) चापि ( for चेति ) — ᵇ ) K₁ D₄ ₆ क्षिप्य( D₄ °प्ये )ते, D₇ गम्यते, M₃₋₅ क्षाम्यते ( for क्षम्यते ) B₁ T G₂₋₄ M₁ चापि ( for चेति ) D₆ क्षाम्यते क्षाम्यतेति च, G₁ M₁ ₂ क्षाम्यते च पुन पुन — ᶜ ) D₃ न चाचार्यं, D₆ असज्जनो, S ( G₅ missing ) सर्वोनार्य° ( for न चानार्य ) K₄ [ऽ]शुभ B Dc₁ Dn₁ D₂ ₄ ₅ सदानार्योशुभ साधु ( Dc₁ Dn₁ D₂ °भ साधु-, D₄ °भ साधु , D₅ °भ साधुं ) Dn₂ corrupt — ᵈ ) Dn₂ lacuna, M₃ परुषं ( for पु° ) K₄ D₅ अर्हति, B Dc₁ Dn D₆ S ( G₅ missing ) इच्छति ( Dn₁ °सि ) ( for अर्हसि )

22 ᵃ ) Ś₁ K₃ प्रशास्यते ( for प्रश° )

C 7 9153
B 7 195 17
Ḱ 7 197 28

स त्वं क्षुद्रसमाचारो नीचात्मा पापनिश्चयः ।
आ केशाग्रान्नखाग्राच्च वक्तव्यो वक्तुमिच्छसि ॥ २३
यः स भूरिश्रवाश्छिन्ने भुजे प्रायगतस्त्वया ।
वार्यमाणेन निहतस्ततः पापतरं नु किम् ॥ २४
व्यूहमानो मया द्रोणो दिव्येनास्त्रेण संयुगे ।
विसृष्टशस्त्रो निहतः किं तत्र क्रूर दुष्कृतम् ॥ २५
अयुध्यमानं यस्त्वाजौ तथा प्रायगतं मुनिम् ।
छिन्नबाहुं परैर्हन्यात्सात्यके स कथं भवेत् ॥ २६
निहत्य त्वां यदा भूमौ स विक्रामति वीर्यवान् ।
किं तदा न निहंस्येनं भूत्वा पुरुषसत्तमः ॥ २७
त्वया पुनरनार्येण पूर्वं पार्थेन निर्जितः ।
यदा तदा हतः शूरः सौमदत्तिः प्रतापवान् ॥ २८
यत्र यत्र तु पाण्डूनां द्रोणो द्रावयते चमूम् ।
किरञ्शरसहस्राणि तत्र तत्र प्रयाम्यहम् ॥ २९
स त्वमेवंविधं कृत्वा कर्म चाण्डालवत्स्वयम् ।
वक्तुमिच्छसि वक्तव्यः कस्मान्मां परुषाण्यथ ॥ ३०

---

23 [a]) T G2-4 तत्त्व (for स त्व) D6 स त्व क्षुद्रस्त्वमर्यादो — [b]) B4 दीनात्मा (for नीचात्मा) K4 D1 पूरुष (for निश्चय) — [c]) K1 D4 नखाग्राश्च, S (except G2, G5 missing) °श्चैव (for °ग्राच्च) D8 आ केशाच्च नखाताच्च — [d]) D1 वक्तव्यं (for °व्यो) Ś K (K5 missing) D1 अर्हसि (for इच्छसि) — After 23, S (G5 missing) ins

1389* वर हि ते मृत पाप न च ते वृत्तमीदृशम् ।
श्रोतु वक्तव्यतामूल नीचा वक्ष्यन्ति मानवा ।
परान्क्षिपन्ति दोषेण स्वेषु दोषेष्वदृष्टय ।

[(L 1) G1 M1-3 5 पर (for वर) G4 ये (for ते) T G2 मति, G3 4 मृति, M3 4 5 (marg as above) कृत (for मृत) T G1 2 M3-5 पाप (for पाप) G1 M1 2 क्षुद्रजीवित, G3.4 नि(G4 वि)त्तमीदृश (for वृत्त°) —(L 2) M4 वक्तव्यतो मूल T G1-4 M1 (before corr) 2 नीचा(G3 निरा)चार च (G1 M1 2 °राश्च) मानवा (T G2 °वान्) (for the post half) ]

24 [a]) B1-4 Dn1 D3 S (G5 missing) यत् (for य) G1 M1 2 च (for स) K4 B5 Dc1 Dn य स (Dn1 यस्स) भूरिश्रवाश्छिन्न- — [b]) K4 B Dc1 Dn1 -भुज, Dn2 भुज, D2 भुजि (for भुजे) After भुजे, Dn2 reads 26[ab] for the first time, repeating it in its proper place Dn2 om from प्रायगत up to नु किम् (in 24[d]) Dn1 T G3 प्रायो (for प्राय) — [c]) K4 D2 हि (for नि)

25 [a]) K4 गाहमानो, D6 G1 M युध्यमानो, T G3 4 प्रेप्समाणो, G2 घोषमाणे (for व्यूहमानो) M3 ततो (for मया) — [b]) S (G5 missing) दिव्यान्यस्त्राणि मयुगे — [c]) B2 निसृष्ट (for वि°) Dc1 Dn1 हि (for नि) Ś K1-3 D1 4-8 विसृज्य (K3 D7 8 °सर्ज्य) मा(Ś1 K3 चा)स्त्राणि हत — [d]) Dc1 तत्र किं (by transp), Dn1 तच्च किं K1 B5 G2 दुष्कर (for दुष्कृतम्)

26 D4 om 26–38 Dn2 reads 26[ab] for the first time after भुजे (in 24[b]) — [a]) B5 युयुद्धमान; M4 अबुध्य° (for अयुद्ध°) D5 यस्त्वाजौ, D6 न्यस्तासिं, M5 यश्चाजौ (for यस्त्वाजौ) — [b]) Ś1 K1 2 D1 7 8 T G3 4 यथा (for तथा) Dn1 पार्यगत (for प्राय°) — [c]) D6 पर; D7 8 मृधे, T G4 शरैर् (for परैर्) Ś K1 3 T G3 M4 हन्या (for हन्याद्) — [d]) Ś1 K3 सात्यके (sic) Ś2 वदे, B Dc1 Dn2 T वदेत् (for भवेत्) Dn1 D6 स भवेत्क्षुद्रघातक

27 D4 om 27 (cf v 1 26) — [a]) M3-5 निपात्य (for निहत्य) Ś1 K1, 2 G1 M1 2 त्वा (for त्वां) Ś1 K3 T M1 2 यथा, K4 B1 (marg as in text) 2 3, 5 Dc1 Dn पदा (for यदा) D6 निहतास्त्वां पुन भूमौ — [b]) B Dc1 Dn1 S (G5 missing) विकर्षति, D8 विक्रमति, D6 विकीर्षति (for विक्रामति) — K3 om (hapl) 27[c]–28[d] — [c]) Ś1 M3-5 विहस्येनं, Ś2 निर्हिं° (for निहं°) D7 8 किं तदानीं न हिंस्येन — [d]) B1 5 D5 G4 सत्तम

28 K3 D4 om 28 (cf v 1. 27, 26) — [a]) Dn2 om नार्येण up to चमूम् (in 29[b]) — [d]) D2 5 6 G3 सोमदत्ति

29 D4 om 29 (cf v 1 26) Dn2 om 29[ab] (cf. v 1 28) — [a]) Dc1 Dn1 तत्र (for the second यत्र) D1 [इ]ति, D3 5 6 च, D8 हि (for तु) — [b]) D7 8 [s]भिद्रवते, G3 4 [s]यं (G4 चं) क्रमते (for द्रावयते) Dn1 चमू — [d]) D3 चरामि; D6 G1 M व्रजामि (for प्रयामि)

30 D4 om 30 (cf v 1 26) — [a]) D7 एवधन (sic) (for °विधं) — [b]) Ś K1 2 4 D1 पाप (for कर्म)

कर्ता त्वं कर्मणोग्रस्य नाहं वृष्णिकुलाधम ।
पापानां च त्वमावासः कर्मणां मा पुनर्वद ॥ ३१
जोषमास्स्व न मां भूयो वक्तुमर्हस्यतः परम् ।
अधरोत्तरमेतद्धि यन्मा त्वं वक्तुमिच्छसि ॥ ३२
अथ वक्ष्यसि मां मौर्ख्याद्भूयः परुषमीदृशम् ।
गमयिष्यामि बाणैस्त्वां युधि वैवस्वतक्षयम् ॥ ३३
न चैव मूर्ख धर्मेण केवलेनैव शक्यते ।
तेषामपि ह्यधर्मेण चेष्टितं शृणु यादृशम् ॥ ३४
वञ्चितः पाण्डवः पूर्वमधर्मेण युधिष्ठिरः ।
द्रौपदी च परिक्लिष्टा तथाधर्मेण सात्यके ॥ ३५
प्रव्राजिता वनं सर्वे पाण्डवाः सह कृष्णया ।
सर्वस्वमपकृष्टं च तथाधर्मेण बालिश ॥ ३६
अधर्मेणापकृष्टश्च मद्रराजः परैरितः ।
इतोऽप्यधर्मेण हतो भीष्मः कुरुपितामहः ।
भूरिश्रवा ह्यधर्मेण त्वया धर्मविदा हतः ॥ ३७
एवं परैराचरितं पाण्डवेयैश्च संयुगे ।
रक्षमाणैर्जयं वीरैर्धर्मज्ञैरपि सात्वत ॥ ३८
दुर्ज्ञेयः परमो धर्मस्तथाधर्मः सुदुर्विदः ।

C 7 8170
B 7 198 44
K 7 199 46

K1 2 G1. 3 4 M चडालवत्, D5 स्व[श्व]पच° (for चाण्डाल°) — c) Dn1 D3 धर्मज्ञ (D6 °ज्ञस्), D5 वक्तव्यं (for °च्य) Ś K1-3 D1 वक्तुमिच्छ(Ś1 K3 वक्तुमर्ह, K2 कर्तुमिच्छ)स्यवक्तव्य, D7 8 वक्तुमर्हसि किं वाक्यं — d) D6 तस्मान् (for क°) G1 M1 3 4 5 सु, M2 स; Bom ed त्व (for मा) K1 पुरुषाणि D5 कस्मान्मा पुरुषान्यया, D7 8 प( D3 पु )रुष च मुहुर्मुहु, T G2-4 कस्मात्सु( G2 °स्मात्का )पुरुषो यया

31 D4 om. 31 (cf. v 1 26) — a) K4 Dc1 Dn2 द्यामस्य, B3 D2. 7 8 यस्य, B4 [s]ग्रेम्य, D5 [s]ग्र्यस्य (for [ट]ग्रस्य) B5 कर्ता कर्मणा उग्रस्य (sic) — cd) Ś2 K1. 2 D1 T G1-4 M1 2 transp पापाना and कर्मणा (G1 M1. 2 कष्टाना) K4 कर्मणा च, M3-5 कुत्सितानां (for पापाना च) K1 मा (for मा) B (except B3) Dn1 D7 8 G1 2 M पुनर्वदी, Dc °र्व्रवी (for °र्वद)

32 D4 om 32 (cf. v 1 26) — a) B1 8 योप मास्व, B5 जोषमानो (for °मास्व) S (except G2, G5 missing) मा (for मां) Dn1 D6 जोषमाचर मा भूयो — b) Dn1 D2 6 S (G missing) वक्तुमर्हस्यमुत्तर — d) G1 M मा (for मा) Ś K1-4 B Dc1 Dn2 D1 2 5 T G2-4 अर्हसि (for इच्छसि) D7 8 यन्मा वक्तुमिहेच्छसि

33 D4 om 33 (cf. v 1 26) — ab) Dn1 वक्ष्यामि (for वक्ष्यसि) K1 G1 M1 2 मा (for मा) Dn1 D6 transp मौर्ख्याद् and भूय D5 भूमा (for भूय) K3 D5-7 G1 पुरुषम् (for प°) — K4 om (hapl) 33c-34a — c) G1 M1 2 त्वा (for त्वा) Dn1 D6 प्रेषयिष्यामि बाणैस्त्वाम् — d) Dn2 D2 5 युद्धे (for युधि) Dn1 D6 अद्यैव यमसादन

34 K4 D4 om 34 (cf v 1 33, 26) — a) B1-4 Dc1 Dn D1 2 5 7 8 S (except M5, G5 missing) चैव, B5 *वै (for चैव) D6 न चैतत्पूर्वधर्मेण — b) B4 Dn1 D6 [ह्]ह (for [ए]व) — c) Ś K1-3 D1 शक्यतेपि, Dn2 D5 7 8 एषामपि (for ते°) D3 एषामपि स्वधर्मेण

35 D4 om. 35 (cf v 1 26) — a) D7 8 T G3 4 विजित (for वञ्चित) Ś1 K1 वचिता पाडवा पूर्वम् — c) K1 परिक्लिष्टा, G4 °क्लिवा (for °क्लिष्टा) — d) B1 [अ]सत्येन (for [अ]धर्मेण)

36 D4 om. 36 (cf v 1 26) — a) D2 7 8 वने, M3-5 वय (for वन) — c) Dn1 D6 राज्यमप्यपकृष्ट च

37 D4 om 37 (cf v 1 26) — b) Ś2 शल्य राजा, K1 D5 मद्रराजा Ś1 परैर्वृत, K3 B5 D3 परेरित, D2 परैरपि, D5 °रिति, G2 पराजित (for परैरित) — After 37ab, N (D4 om, K6 missing) ins

1390* अधर्मेण तथा बाल सौभद्रो विनिपातित ।

[ K4 om पातित ]

— K4 om 37c-38a — c) D1 ततो, D7 8 S (G5 missing) अतो (for इतो) — d) B Dc1 Dn1 D8 S (G5 missing) भीष्म परपुरजय — e) D3 अधर्मेण, G1 M1 2 [अ]प्य° (for ह्य°) Dn1 D6 भूरिश्रवास्त्व धर्मेण — f) D6 त्वया धर्मं विहाय स

38 D4 om 38 (cf v 1 26) K4 om. 38a (cf v 1. 37) — a) B5 एव पुरैवाचरित — b) B (except B5) Dc1 D8 T G2-4 पांडवैश्चैव संयुगे — c) Ś2 K1 D5 G4 M रक्ष्यमाणैर् (Ś2 °ण) — d) S (G5 missing) अय (for अपि) B5 मानद, Dn2 सत्वत (for सा°)

C 7 9170
B 7 199 45
K 7 199 46

युध्यस्व कौरवैः सार्धं मा गाः पितृनिवेशनम् ॥ ३९
एवमादीनि वाक्यानि क्रूराणि परुषाणि च ।
श्रावितः सात्यकिः श्रीमानाकम्पित इवाभवत् ॥ ४०
तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिस्त्वाददे गदाम् ।
विनिःश्वस्य यथा सर्पः प्रणिधाय रथे धनुः ॥ ४१
ततोऽभिपत्य पाञ्चाल्यं संरम्भेणेदमब्रवीत् ।
न त्वां वक्ष्यामि परुषं हनिष्ये त्वां वधक्षमम् ॥ ४२
तमापतन्तं सहसा महाबलममर्षणम् ।
पाञ्चाल्यायाभिसंक्रुद्धमन्तकायान्तकोपमम् ॥ ४३
चोदितो वासुदेवेन भीमसेनो महाबलः ।
अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् ॥ ४४
द्रवमाणं तथा क्रुद्धं सात्यकिं पाण्डवो बली ।
प्रस्कन्दमानमादाय जगाम बलिनं बलात् ॥ ४५
स्थित्वा विष्टभ्य चरणौ भीमेन शिनिपुंगवः ।
निगृहीतः पदे षष्ठे बलेन बलिनां वरः ॥ ४६
अवरुह्य रथात्तं तु ह्रियमाणं बलीयसा ।
उवाच श्लक्ष्णया वाचा सहदेवो विशां पते ॥ ४७
अस्माकं पुरुषव्याघ्र मित्रमन्यन्न विद्यते ।

---

39 $^a$) D1 5 M4 दुर्जेय (for दुर्ज्ञेय) K4 Dn2 D2 4 5 स परो (for परमो) Dn1 D8 6 दुर्विज्ञेय परो धर्मस् — $^b$) D4 6 महात्मा( D5 °स्म )न॰ (for तथा धर्म) K3 B Do1 Dn1 D2 4 6–8 G1 M च ( K2 D4 स ) दुर्विद, T G2–4 चतुर्विध (for सुदुर्विद) — $^c$) D7 8 युध्युध्व (sic) (for युध्यस्व) Ś1 पांडवै (for कौरवै) — After 39, Ś1 B5 ins an addl colophon

40 Before 40, MSS ins संजय उवाच — $^a$) M8 कर्माणि (for वाक्यानि) — $^b$) D4 7 8 पुरुपाणि (sic) (for प॰) — $^c$) D2 अब्रवीत् (for श्रावित) — $^d$) K4 D1 4–6 G2 अ( D1 6 स )कंपित

41 B3 5 read 41$^{ab}$ twice. — $^a$) M4 5 (sup lin) इत्युक्त (for तच्छ्रुत्वा) — $^b$) Dn D2–5 7 8 च (for तु) Ś1 K3 [आ]दधे (for °दे) — $^c$) Ś K1–3 D1 विनि श्वसन्, Do1 Dn1 D3 5 8 विनिश्वस्य; D7 विनि-स्वस्य (sic) — $^d$) D5 प्रविधाय (for प्रणि°) D6 पार्षतोप्याददे गदां

42 $^a$) D4 5 7 8 [ऽ]भिपद्य (for °त्य) D1–6 पा-चाल्य — $^b$) Ś1 संरंभेन, B5 सरब्धेन — $^c$) Ś1 K1, 2 S ( G5 missing ) त्वा (for त्वां) K2 D7 पुरुष, D4 पौ॰ (for प॰) D8 न त्वाक्षामिति परुषं (sic) — $^d$) Dn1 D6 वधिष्ये (for हनिष्ये) K2 T G1 2 M त्वा (for त्वां) D5 नराधम (for वधक्षमम्)

43 $^a$) Ś1 वेगेन (for सहसा) — $^b$) G1 M महा-बाहुम् (for °बलम्) B1 Do1 अमर्षितं (B1 °ण) (for °र्षणम्) — $^c$) Dn1 D4 5 पाचाल्यम्; M3–5 °लाय (for °ल्याय) D4 सक्रुद्ध — $^d$) Dn1 D7 8 मृत्यु (Dn1 °त्यु) कालांतकोपम; G3 4 M3–5 अतकालें( G3 °लां )त॰

44 $^a$) D3–8 नोदितो (for चो॰) — $^d$) D4 सम-धाकरत्; D8 °धारयत्, G1 M1 2 पर्यवारयत् (for सम॰)

45 $^a$) Ś1 B5 तत (for तथा) D7 8 T G1–4 M3–5 क्रुद्धः B1–4 M1 2 द्रवमाणस्तथा क्रुद्ध — $^b$) B1–4 D7 सात्यकि पांडव बली, T G2 पांडव सात्वत बली, G1 3 4 M पांडव सात्वतो बली — $^c$) K3 B3 Do1 Dn2 D3 8 S ( G5 missing ) प्रस्पदमानम्, Dn1 प्रस्कद**म्, D6 प्रास्कंधमानम् — $^d$) D5 जग्राह (for जगाम) B4 भुवि, B5 महद्, D5 M3–5 बली (for बलाद्) D3 जग्राह बलिनां बली

46 $^a$) D5 छित्त्वा (for स्थित्वा) — $^b$) K1 D4 7 8 शनिपुंगव (for शिनि॰) Dn1 D6 भीमसेनेन वै तदा — $^c$) D7 8 निगृहीत — $^d$) D5 रथिना (for बलिनां) — After 46, Dn1 D6 ins

1391* तथापि भीमादात्मानमामुच्य बलिनोच्छ्रित ।
जगामानिलवेगेन भीममुन्मुच्य माधव ।
भीमेनाथाशु महता वेगमास्थाय मध्यमम् ।
विष्टभ्य विधृतो दर्पात्सात्यकिर्दशमे पदे ।

[ (L 1) D6 [ऽ]च्युत (for [उ]च्छ्रित) — (L 3) D6 [अ]पि (for [अ]थ) — (L 4) Dn1 *र्प्यांत् (for दर्पात्) ]

47 $^a$) Dn2 G2 अवप्लुत्य (for °रुह्य) B D2 तूर्णं, D4 त नु (for त तु) Dn1 D6 अनिवार्यं रथं त तु; T G1 3 4 M1 2 अवरुध्य (T °ध्य [sic]) बलात्त तु — $^b$) K4 B Do1 Dn2 D2–5 7 8 भ्रि( D4 5 भ्री )यमाण (for ह्रिय॰)

48 $^b$) Dn2 अन्यत्र (for अन्यन्न) — K1 om (hapl) 48$^c$–49$^d$, B3 reads the same on marg — $^c$) Dn1 D6 तुल्यम् (for परम्) — $^d$) B3 D2 पचालेभ्यश्, Dn2 D6 8 पाचाल्ये॰ Ś K3 परतप, K2 च सात्वत, K4 Dn2 D1–5 7 8 च मारिष, Dn1 D6 च

परमन्धकवृष्णिभ्यः पाञ्चालेभ्यश्च माधव ॥ ४८
तथैवान्धकवृष्णीनां तव चैव विशेषतः ।
कृष्णस्य च तथासक्तो मित्रमन्यन्न विद्यते ॥ ४९
पाञ्चालानां च वार्ष्णेय समुद्रान्तां विचिन्वताम् ।
नान्यदस्ति परं मित्रं यथा पाण्डववृष्णयः ॥ ५०
स भवानीदृशं मित्रं मन्यते च यथा भवान् ।
भवन्तश्च यथास्माकं भवतां च तथा वयम् ॥ ५१
स एवं सर्वधर्मज्ञो मित्रधर्ममनुस्मरन् ।
नियच्छ मन्युं पाञ्चाल्यात्प्रशाम्य शिनिपुंगव ॥ ५२
पार्षतस्य क्षम त्वं वै क्षमतां तव पार्षतः ।
वयं क्षमयितारश्च किमन्यत्र शमाद्भवेत् ॥ ५३
प्रशाम्यमाने शैनेये सहदेवेन मारिष ।
पाञ्चालराजस्य सुतः प्रहसन्निदमब्रवीत् ॥ ५४
मुञ्च मुञ्च शिनेः पौत्रं भीम युद्धमदान्वितम् ।
आसादयतु मामेष धराधरमिवानिलः ॥ ५५
यावदस्य शितैर्बाणैः संरम्भं विनयाम्यहम् ।
युद्धश्रद्धां च कौन्तेय जीवितस्य च संयुगे ॥ ५६
किं नु शक्यं मया कर्तुं कार्यं यदिदमुद्यतम् ।

C 7 9128
B 7 198 62
K 7 199 64

मानद ( for च माधव )

49 K1 om 49 ( cf. v l 48 ) B1 reads 49 on marg —$^b$) B Dc1 Dn D4 8 तथैव च, D2 तत्रैव च ( for तव चैव ) —$^c$) Dn यथासस्य ( Dn2 °क्तो ), D2 4-8 G1-4 M1 2 तथा( D6 न चा )सम्यो ( D8 °म्य ), M3-5 ममोस्मामि ( M3 °स्मयो, M5 [ inf lin ] सम्य ) ( for तथासक्तो )

50 $^a$) B om ed पचालाना D5 तु ( for च ) —$^b$) Ś K1-3 B1 Dn2 D1 6-8 समुद्रांतं T1 G1 4 M1 2 विचिंत्य गा, T2 G2 3 M3. 5 विचित्य गा, M4 lacuna ( for विचिन्वताम् )

51 $^a$) Ś K ( K5 missing ) D1 तथा त्वम्, Dn2 D4 6 7 8 यथा त्व( Dn2 त्वा )म् ( for स भवान ) G2-4 भवतोय पर मित्रम् —$^b$) Dn2 D1 तथा ( for यथा ) D3 तथा ( for भवान ) B Dc1 T G1-4 M1. 2 अस्मैव ( B1-4 Dc1 °प ) च तथा तव ( T G2-4 भवान ), Dn1 D6 तव चैव तथा वय, M3-5 अस्मैप भवतस्तथा —$^c$) T G2-4 भवतश्च ( for भवन्तश्च ) Dc1 Dn1 D5 S ( except G1, G5 missing ) तथा ( for यथा ) —$^d$) Ś K1 2 Dn2 D1 5 8 ( *sup lin* as in text ) M4 यथा वयं, D7 यथातय ( for तथा वयम् )

52 Before 52, G2 ins धृष्टद्युम्न —$^a$) D1 त्वमेव, D3 त्वमेव, G1 स एव ( for स एव ) K4 B Dc1 Dn1 D2 5 6 धर्मज्ञ ( B3 4 °ज्ञ ) ( for °ज्ञो ) D4 वय स एव धर्मज्ञ —$^b$) Dn1 D6 सर्वं ( for मित्र ) — G2 om 52$^c$-54$^d$ —$^c$) Dn2 D2-5 7 8 M3-5 पाचात्ये ( D4 5 7 8 °त्य ) ( for °ल्यात् ) —$^d$) G1 M1. 2 प्रशाम्य K1 Dn1 D4 7 8 M1 2 श( Dn1 M1 2 शि )निपुगव

53 G2 om 53 ( cf v l 52 ) —$^a$) G1 M1 2 6 ( before corr ) क्षमस्व त्व —$^b$) K2 3 Dn1 D3 4 क्षम्यता Ś1 K1 2 4 Dn1 D1 3 चापि, Dn2 D2 4-8 S ( G2 om , G5 missing ) चैव ( for तव ) B Dc1 क्षमता पार्षतश्च ते —$^c$) Dn1 M3-5 क्षामयितारश्च —$^d$) B1. 4 Dc1 D3 6 अन्यत्तु ( D3 द्वा ), Dn1 अन्यस्म- ( for °त्र )

54 G2 om 54 ( cf v l. 52 ) —$^b$) Dn1 D6 M3 5 पार्षत ( for मारिष )

55 $^a$) D4 7 शनै ( for शिने ) Dn1 G1. 2 M1. 2 पुत्र ( for पौत्रं ) —$^b$) Dn2 om. from युद्ध up to कौन्तेय ( in 56$^c$ ) D5 मुदान्वित, D6 गदा° ( for मदा° ) G1 भीमसेन मुदान्वितं —$^c$) B4 एव ( for एष ) —$^d$) B1 T G3 4 धाराधरम् K4 Dc1 G1 M1. 2 [अ]चल ( for [अ]निल ) Ś K1-3 Dn1 D3 6 M4 धा- ( Ś2 K1 2 M4 ध )राधर इवाचलं, D4 5 7 8 धाराधर- मिवाचल ( D4 °ल )

56 Dn2 om 56$^{abc}$ ( cf. v l 55 ) —$^a$) D4 यादवस्य ( metathesis ) ( for यावदस्य ) D4 7 8 सितैर्, D6 शतैर् Dn1 D5 भल्लै ( for बाणै ) —$^b$) Ś K1 2 4 D1 3 7 8 नाशयामि, Dn1 D2 4-6 पात° ( for विन° ) —$^c$) D8 हि ( for च ) —$^d$) K3 4 B Dc1 Dn2 D1 2 जीवित चास्य सयुगे

57 D7 om ( hapl ) 57$^a$-58$^b$ Dn1 reads 57$^{ab}$ twice —$^a$) Ś K1-3 Dn1 ( both times ) D8 किं तु, Dc1 किमु, D2 किं न, D4 किं च, D5 किं सु ( for किं नु ) —$^b$) Dn1 ( both times ) D6 तत्कार्यम्, S ( G5 missing ) यत्कार्यम् ( by transp ) K1 उद्यत ( sic ), D2 G2 उत्तम, D4-6 8 उच्यता, G3 उद्युत ( for उद्यतम् ) —$^c$) Dn2 स्वमहत् ( for सु° ) —$^d$) B1 2 Dc1 [ए]व ( for [ए]ते ) Dn1 D6 च, G1 M [ऽ]पि ( for हि )

C 7 8103 B 7 199 63 P 7 199 64

सुमहत्पाण्डुपुत्राणामायान्त्येते हि कौरवाः ॥ ५७
अथ वा फल्गुनः सर्वान्वारयिष्यति संयुगे ।
अहमप्यस्य मूर्धानं पातयिष्यामि सायकैः ॥ ५८
मन्यते छिन्नबाहुं मां भूरिश्रवसमाहवे ।
उत्सृजैनमहं वैनमेष मां वा हनिष्यति ॥ ५९
शृण्वन्पाञ्चालवाक्यानि सात्यकिः सर्पवच्छ्वसन् ।
भीमबाह्वन्तरे सक्तो विस्फुरत्यनिशं बली ॥ ६०
त्वरया वासुदेवश्च धर्मराजश्च मारिष ।
यत्नेन महता वीरौ वारयामासतुस्ततः ॥ ६१
निवार्य परमेष्वासौ क्रोधसंरक्तलोचनौ ।
युयुत्सवः परान्संख्ये प्रतीयुः क्षत्रियर्षभाः ॥ ६२

इति श्रीमहाभारते द्रोणपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

# १७०

संजय उवाच ।
ततः स कदनं चक्रे रिपूणां द्रोणनन्दनः ।
युगान्ते सर्वभूतानां कालसृष्ट इवान्तकः ॥ १
ध्वजद्रुमं शस्त्रशृङ्गं हतनागमहाशिलम् ।

---

58 D7 om 58ab (cf. v l 57) —a) Ś1 अथाह, Ś2 यद्येना[न्], K1 2 D1 अथैनान् (for अथ वा) K3.4 B D (D7 om.) फाल्गुन —b) Ś1 K1 2 4 कौरवान् (for संयुगे) —d) M3-5 संयुगे (for सायकै )

59 ab) D4 -बाहुभ्यां (for बाहुं मा) M3-5 किं मन्यसे छिन्नबाहु मा भूरिश्रवस मृधे —c) Dn1 D6 विसृज (for उत्सृज) D5 6 [ए]तम् (for [ए]नम्) K4 B (except B1) D (except Dc1 D8) T G2 M3-5 च (for वा) D4 [ए]व (for [ए]नम्) —d) Ś K3 B Dc1 D1 3 G1 वा मा (by transp), K1 2 वा मा, D1 5 मा वा, G2 वा*

60 a) Dn1 D6 श्रुत्वा (for शृण्वन्) Dn1 पांचाल्य —c) B1 2 5 Dn1 D3 4 शक्तो (for सक्तो) —d) Dn1 D6 प्रस्फुरति, G1 4 M विष्फु° (for विस्फु°) S (G5 missing) बलात् (for बली) — After 60, N (except Dn2 D6, K5 missing) ins

1392* तौ वृषाविव नर्दन्तौ बलिनौ बाहुशालिनौ ।

[ K1-3 नदतौ (for नर्दन्तौ) D3 धन्विनौ बलशालिनौ (for the post. half) ]

61 ab) Dn1 D6 S (G5 missing) तौ तु( G2 तत्तू )र्णं (for त्वरया) Dn1 D6 transp वासुदेवश्च and धर्मराजश्च —c) D3 सुमहा (for महता) Dn1 तूर्णं (for वीरौ) —d) K4 B6 D1 6 S (G5 missing) तदा, Dn2 D2 4 5 7 8 भृश (for तत )

62 a) G1 निवार्य तौ महेष्वासौ —b) K3 4 B Dc1 Dn1 D1 6 G3 कोप- (for क्रोध ) —c) Dn1 D5 पुन (for परान्) G1 M1 2 4 सखे (for संख्ये) B5 युयुत्सूनपरान्सख्ये —d) D5 प्रतीयु पुरुषर्षभा

Colophon om in Ś2 K1 2 K5 G5 missing — *Sub parvan* B1 3 (marg ) नारायणास्त्रमोक्ष — *Day of Drona's Generalship* K4 पचमदिवसयुद्धे, Dn1 G1 पंचमेहनि; M1.2 पचमेह्नि — *Adhy name* Dn1 धृष्टद्युम्नसात्यक्यो परस्पर कोपवाक्यानि, Bom. ed धृष्टद्युम्नसात्यकिक्रोध — *Adhy no* (figures, words or both) Dn1 199, D2 100, D3 92, T G2 3 193, G1 M1.2 192, G4 194, M3 4 191, M5 2[1]91 — *Śloka no* Dn1 70

## 170

☞ This adhy is missing in K5 G5 (cf v l 7 125 14, 137 9)

1 —a) D3 च (for स) —b) D3 शत्रूणां (for रिपूणा) —d) G3 damaged Dc1 Dn1 कालसूर्य, D3 क्रुद्ध काल (for कालसृष्ट)

2 D5 transp 2a and 2b —a) D7 8 रथ- (for शस्त्र ) Dc1 (marg *sec m* ) Dn1 संघं, D2 4 5 -शस्त्रं (for -शृङ्गं) D6 शस्त्रशृगध्वजद्रुम —b) Ś1 K3 -महो( K3 °हा )पल, D4 5 7 8 -महाशल (sic), D6 महाशैल (for °शिलम्) —c) G2 रथाश्वपुरुषाकीर्णं —d) D5 -समा-

अश्वकिंपुरुषाकीर्णं शरासनलतावृतम् ॥ २
शूलक्रव्यादसंघुष्टं भूतयक्षगणाकुलम् ।
निहत्य शात्रवान्भल्लैः सोऽचिनोद्देहपर्वतम् ॥ ३
ततो वेगेन महता विनद्य स नरर्षभः ।
प्रतिज्ञां श्रावयामास पुनरेव तवात्मजम् ॥ ४
यस्माद्युध्यन्तमाचार्यं धर्मकञ्चुकमास्थितः ।
मुञ्च शस्त्रमिति प्राह कुन्तीपुत्रो युधिष्ठिरः ॥ ५
तस्मात्संपश्यतस्तस्य द्रावयिष्यामि वाहिनीम् ।
विद्राव्य सत्यं हन्तास्मि पापं पाञ्चाल्यमेव तु ॥ ६
सर्वानेतान्हनिष्यामि यदि योत्स्यन्ति मां रणे ।
सत्यं ते प्रतिजानामि परावर्तय वाहिनीम् ॥ ७
तच्छ्रुत्वा तव पुत्रस्तु वाहिनीं पर्यवर्तयत् ।
सिंहनादेन महता व्यपोह्य सुमहद्भयम् ॥ ८
ततः समागमो राजन्कुरुपाण्डवसेनयोः ।
पुनरेवाभवत्तीव्रः पूर्णसागरयोरिव ॥ ९
संरब्धा हि स्थिरीभूता द्रोणपुत्रेण कौरवाः ।
उदग्राः पाण्डुपाञ्चाला द्रोणस्य निधनेन च ॥ १०
तेषां परमहृष्टानां जयमात्मनि पश्यताम् ।

C 7 9205
B 7 199 11
K 7 20 11

वृत, T G3 4 लतायुत (for लतावृतम्)

3 [a]) Dn2 D3 चल, D4 5 चल, D6 छत्र-, D7 8 बहू-, T G2-4 स्थूल-, G1 M पत्ति (for शूल-) K4 सपूरा (sic), Dn2 संक्षुब्ध, D3 सजुष्टं, D4 7 8 T G1 सकुष्टं, G2 सघुष्ट (for घु॰) B Dc1 Dn1 क्रव्यादपक्षिसघुष्ट — [b]) D5 पक्षि, G3 damaged (for -यक्ष) Dc1 Dn1 गणावृत, D3 G1 M1. 2 समाकुल, G3 damaged (for -गणा॰) — [c]) G3 damaged for निहत्य — [d]) K1 सचिनोद् (for सोऽचि)

4 [b]) S (G5 missing) transp विनद्य and स B5 G3 स नरर्षभ, Dn2 D3 4 7 8 भरतर्षभ, D5 पुरुषर्षभ D6 स विनद्य नरोत्तम — [c]) M3-5 प्रतिज्ञा

5 [a]) G3 partly damaged Dn1 पश्चाद् (for यस्माद्) D6 सशस्त्रम्, G1 M3-5 समोक्ष (G1 ह्यद्), M1. 2 सयच्छद् (for युध्यन्तम्) M3-5 चाचार्यं (for आ) T G2 4 यदत्र छद्मनाचार्यं — D4 5 7 8 transp 5[b] and 5[a] — [b]) D4 कुचकम्, D7 -कुचु॰ (for -कञ्चु॰) D3-5 7 8 आश्रित (D3 ॰ता) (for आस्थित) — [d]) B4 M3-5 धर्मं (for कुन्ती-)

6 [a]) Dn2 om from पश्य up to यो (in 7[b]) — G3 om. (hapl) 6[c]-7[d] — [c]) D3 4 5 7 8 विश्राव्य (for विद्राव्य) K4 B Dc1 Dn1 D6 T G3 4 M3-5 सर्वान्, D3 सैन्य, G1 M1. 2 सर्वं (for सत्य) — [d]) K4 B Dc1 Dn1 S (G3 om, G5 missing) जाल्म (for पाप) Ś2 पचाल्यम्, G1 4 M1 2 पाचालम् (for ॰ल्यम्) D3 8 8 T G1 3 4 M1-3 5 एव च, M4 आहवे (for एव तु) D6 पाचाटय च कुलाधम

7 Dn2 om up to यो, G3 om 7 (for both, cf v 1 6) — [a]) D6 अद्य सर्वान् (for सर्वानेतान्) — [b]) Dn1 जोत्स्यंति, M3-5 ते याति (for योत्स्यन्ति) G1 M मा (for मां) — [d]) K3 4 B Dc1 Dn1 D6 S (G3 om, G5 missing) परिवर्तय, D1 प्रावर्तयत, D8 प्रतिवर्तय (for परा॰)

8 Ś1 K1 2 D1 om (? hapl) 8[ab] — [b]) D2 4 5 पर्यवारयत्, D6 ॰वर्तत (for ॰वर्तयत्) Ś1 K3 पर्यवर्तत वाहिनीं — [d]) D6 व्यनदत् (for व्यपोह्य) G2 M3 4 बल (for भयम्) — After 8, G1 M (G1 M3. 4 reading for the first time after 7 168 8) ins

1393* भेरीश्चावादयन्हृष्टा पटहान्दुन्दुभींश्च ह ।
आडम्बरान्मृदङ्गांश्च झर्झरीश्चानकानपि ।
मड्डुकान्पणवान्वीणा डिण्डिमांश्च सहस्रश ।
सर्वे चैव महेष्वासा दध्मु शङ्खान्महास्वनान् ।
ततो ननाद वसुधा खुरनेमिसमाहता । [5]
स शब्दस्तुमुल ख च पृथिवीं च व्यनादयत् ।
कुरूणामय त शब्द श्रुत्वा घोर समुत्थितम् ।
पाण्डवा सोमकै सार्धं समपद्यन्त विस्मिता ।
ते तु दृष्ट्वा कुरून्राजन्नदतो भैरवास्वनान् ।
अभ्यवर्तन्त वेगेन मृत्यु कृत्वा निवर्तनम् । [10]

[(L 1) G1 (both times) अवारयन् (for अवाद॰) — (L 3) G1 (both times) मड्डुकान् (for मड्डु॰) ]

9 [b]) D1 सैनयो (for -से॰) — [c]) D6 अपि (for एव) K4 D4 T G2-4 तीव्रं

10 [a]) D1 M3 स्थिरीभूत्वा, G3 स्थि*** (for स्थिरी भूता) — [c]) Ś2 K1 2 D1 उदग्रु (for उदग्रा) Ś2 D6 -पाचाल्या, K4 पचाला (for -पाञ्चाला) — [d]) K3 4 B1 D1 तु (for च)

11 The portion of the text from 11[c] to 43[d] is lost

C 7 9105
B 7 199 11
K 7 200 11

संरब्धानां महावेगः प्रादुरासीद्रणाजिरे ॥ ११
यथा शिलोच्चये शैलः सागरे सागरो यथा ।
प्रतिहन्येत राजेन्द्र तथासन्कुरुपाण्डवाः ॥ १२
ततः शङ्खसहस्राणि भेरीणामयुतानि च ।
अवादयन्त संहृष्टाः कुरुपाण्डवसैनिकाः ॥ १३
ततो निर्मथ्यमानस्य सागरस्येव निस्वनः ।
अभवत्तस्य सैन्यस्य सुमहानद्भुतोपमः ॥ १४
प्रादुश्चक्रे ततो द्रौणिरस्त्रं नारायणं तदा ।
अभिसंधाय पाण्डूनां पाञ्चालानां च वाहिनीम् ॥ १५
प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः ।
पाण्डवान्भक्षयिष्यन्तो दीप्तास्या इव पन्नगाः ॥ १६
ते दिशः खं च सैन्यं च समावृण्वन्महाहवे ।
मुहूर्ताद्भास्करस्येव राजँल्लोकं गभस्तयः ॥ १७
तथापरे द्योतमाना ज्योतींषीवाम्बरेऽमले ।
प्रादुरासन्महीपाल कार्ष्णायसमया गुडाः ॥ १८
चतुर्दिशं विचित्राश्च शतघ्न्योऽथ हुताशदाः ।

in G2 on a missing folio —$^d$) Ś2 K1 2 4 B Dc1 Dn1 D1 विशां पते, S (G2 5 missing) रणाय वै (for °जिरे)

12 G2 missing (cf v 1 11) —$^a$) Dc1 (by corr) Dn1 D6 शैलोच्चये, D3-5 शिलोच्चयै (for °च्चये) Ś K1-3 D1 शैल, Dn शैला (for शैल) —$^b$) K4 B1 Dn2 सागरे, B2 5 D.-4 7 8 S (G2 5 missing) °र, D5 °र (for °रे) Ś K1-3 सागर, B5 D3 7 8 T M3-5 °रे, Dn2 °रा, D2 °रैर् (for °रो) —$^c$) B1 प्रतिहार्येत, Dn2 D1-3 °हन्यत (for °हन्येत) —$^d$) D2 6 ते (for [आ]सन्)

13 G2 missing (cf v 1 11) —After 13, S (G2 5 missing) ins

1394* चुक्षुभे पृथिवी सर्वा दिशश्च प्रतिसस्वनुः ।
सम्भ्रान्तानि च भूतानि जलजान्यपि मारिष ।
ते च सर्वे तथा योधा संप्रहृष्टा युयुत्सव ।
वर्तमाने तथा शब्दे रौद्रे तस्मिन्भयानके ।
संपतत्सु रथौघेषु तव तेषां च भारत । [5]

[(L 2) T G3 4 [अ]पि (for च) —(L 3) T M3-5 तदा (for तथा) T G3 4 योधा (for योधा) —(L 4) M3-5 transp शब्दे and रौद्रे G1 M1 2 युद्धे (for रौद्रे)]

14 G2 missing (cf v 1 11) —$^a$) Ś K (K5 missing) Dn2 D1 2 5 7 8 यथा, D4 तथा (for ततो) —Ś2 reads 14$^{bc}$ on marg —$^b$) Ś K (K5 missing) D1 2 4 5 7 8 G4 तु, Dn2 स्व- (for [इ]व) MSS निस्वन, D4 निश्चल (for निस्वन) —$^c$) K4 B Dc1 Dn1 तव, D8 सर्वं (for तस्य) Ś2 K1 2 D1 तथा भूदस्य सैन्यस्य, D6 अभ्यवर्तत सैन्यस्य —$^d$) D7 8 सुमहानद्भुत स्वन

15 G2 missing (cf v 1 11) —$^a$) T G1 2 4 M1 2 तदा (for ततो) —D3 4 5 om. 15$^{cd}$ —$^c$) D6 पांडूना (for °ना) —$^d$) B3 D1 पचालाना

16 G2 missing (cf v 1 11) —$^b$) B1 दीप्ता स्याग्र, D1 दीप्ता*, D5 प्रदीप्ता (for दीप्ताग्रा) B1 Dn2 च (for खे) —$^c$) K3 4 B Dc1 Dn क्षपयिष्यतो, D1 भक्षिषि° (sic) (for भक्षयि°) —$^d$) D2 5 - 8 दीप्ताग्रा (for °स्या) K4 B Dc1 Dn1 D. G1 M पन्नगा इव (by transp) D4 दीप्ताग्र इव पन्नग

17 G2 missing (cf v 1 11) —$^a$) T G3 4 दिव (for दिश) —After 17$^{ab}$, D5 ins

1395* ततोऽन्तरिक्षं खगमैर्नानालिङ्गैः सुभैरवै ।

—D6 om 17$^c$-19$^d$ —$^d$) Dn2 D3 लोके, D5 लोक- (for लोकं) K3 B Dc1 Dn1 S (G2 5 missing) लोके राजन्गभस्तय

18 G2 missing (cf v 1 11) D5 om 18 (cf v 1 17) D1 5 om 18-19 —$^a$) K1 तदा, B3 अथ (for तथा) —$^b$) B1 Dc1 Dn1 D7 8 T G3 4 M3-5 अमलेंम्बरे (by transp), B2-4 G1 M1. 2 अमला°, B5 विमले° D2 ज्योति पीतांबरेमले —$^c$) K3 4 B Dc1 Dn D8 S (G2 5 missing) महाराज (for महीपाल) —$^d$) Ś K1 2 B1 Dn1 D7 7 8 T G4 कार्ष्णा(D5 कर्णा) यसमहा (Dn1 °समा) (for °मया) T G1 M हुला, G3 4 गुला (for गुडा)

19 G2 missing (cf. v 1 11) D1-6 om 19 (cf v 1 17, 19) D2 om 19 M4 om (hapl) 19$^{ab}$ —$^a$) Dn2 चतुर्दिश- (for °र्दिशं) B Dc1 Dn1 S (M4 om, G2 5 missing) चतुश्चक्रा द्वि(T G1 3.4 M1 2 वि)-चक्राश्च —$^b$) D7 8 शतघ्नीर् (for °घ्न्यो) K4 B2-4 Dn1 D7 8 बहुला गदा, B1 Dc1 Dn2 [ऽ]थ हुला (Dn2 °डा) गदा, D3 मुशला गदा, T G3.4 M3.5 [ऽ]थ

चक्राणि च क्षुरान्तानि मण्डलानीव भास्वतः ॥ १९
शस्त्राकृतिभिराकीर्णमतीव भरतर्षभ ।
दृष्ट्वान्तरिक्षमाविग्नाः पाण्डुपाञ्चालसृञ्जयाः ॥ २०
यथा यथा ह्ययुध्यन्त पाण्डवानां महारथाः ।
तथा तथा तदस्त्रं वै व्यवर्धत जनाधिप ॥ २१
वध्यमानास्तथास्त्रेण तेन नारायणेन वै ।
दह्यमानानलेनेव सर्वतोऽभ्यर्दिता रणे ॥ २२
यथा हि शिशिरापाये दहेत्कक्षं हुताशनः ।
तथा तदस्त्रं पाण्डूनां ददाह ध्वजिनीं प्रभो ॥ २३
आपूर्यमाणेनास्त्रेण सैन्ये क्षीयति चाभिभो ।
जगाम परमं त्रासं धर्मपुत्रो युधिष्ठिरः ॥ २४
द्रवमाणं तु तत्सैन्यं दृष्ट्वा विगतचेतनम् ।
मध्यस्थतां च पार्थस्य धर्मपुत्रोऽब्रवीदिदम् ॥ २५
धृष्टद्युम्न पलायस्व सह पाञ्चालसेनया ।
सात्यके त्वं च गच्छस्व वृष्ण्यन्धकवृतो गृहान् ॥ २६
वासुदेवोऽपि धर्मात्मा करिष्यत्यात्मनः क्षमम् ।
उपदेष्टुं समर्थोऽयं लोकस्य किमुतात्मनः ॥ २७
संग्रामस्तु न कर्तव्यः सर्वसैन्यान्ब्रवीमि वः ।

C. 7 8222
B 7 199 28
K 7 200 30

---

हुत्वा गु( G3 °त्वा गु )डा ( M3 4 हुत्वा ), G1 M1. 2 [ऽ]य महत्तशा ( for ऽथ हुताशदा ) B5 शतह्यास्मगला गदा — ᵈ ) D. 2 G1 च ( for [इ]व ) — After 19, G1 M1. 2 ins

1396* पाशाश्च विविधाकारा नाराचाञ्जलिकास्तथा ।
संपतन्त[.] स्म दृश्यन्ते शतशोऽथ सहस्रश ।
यथा युगक्षये घोरे परिभूतं जगद्भवेत् ।
तद्वदासीत्तदा राजञ्योतिर्भूत नभ स्थलम् ।
[ ( L. 3 ) G1 वहिभूत ( for परि° ) ]

20 G2 missing ( cf v l. 11 ) — ᵃ ) D1. 8 शस्त्राकृतिभिर् ( for शा° ) — ᵇ ) D5 आसीत्तु ( for अतीव ) K3 Dn1 D1 पुरुषर्षभ — ᶜ ) D5 अतरीक्षम् — ᵈ ) D1. 2 -पचाल- ( for -पाञ्चाल )

21 G2 missing ( cf. v l. 11 ) Ś1 om ( hapl ) $21^{ab}$ — ᵃ ) D3 यथा ह्यथा ( for यथा यथा ) K1. 2 हि युध्यत, T G3 न्त यु° ( for ह्ययुध्यन्त ) — ᵇ ) Ś1 K1–3 D1 पाडुपाचालसृंजया ( = $20^c$ ) — ᵈ ) D2 व्यवर्धत ( for व्यवर्धत )

22 G2 missing ( cf. v l. 11 ) — ᵃ ) B तदस्त्रेण, Dc1 Dn1 D5 तदा° ( for तथा° ) D3 युध्यमाना यथास्त्रेण, G1 M1. 2 वध्यमानास्तदास्त्रेण — ᵇ ) G3 om. तेन Ś K ( K3 missing ) D1 च, D3 4 7 8 ते ( for वै ) — After $22^{ab}$, G1 M1. 2 ins. a passage given in App I ( No 21 ) D2. 4 5 om. $22^{cd}$ — ᶜ ) Ś1 B1 D1. 6–8 T G3 [अ]नलेनैव, D3 महास्त्रेण ( for [अ]नलेनेव ) — ᵈ ) D2 व्यथिता, M3–5 ह्यर्दिता ( for भ्यर्दिता ) B1 चमू , D6 शरै , T G3 परै , G1. 4 M परे ( for रणे )

23 G2 missing ( cf. v l. 11 ) B5 om. $23^b$–$24^a$ — ᵇ ) G1 M दहन् ( for दहेत् ) Ś1 D7 कक्ष्य ( for कक्ष )

24 G2 missing ( cf. v l 11 ) B6 om $24^a$ ( cf. v l. 23 ) B1 om. ( hapl. ) $24^{ab}$ — ᵃ ) D5 आपूर्यमाणे चास्त्रेण — ᵇ ) Dn1 क्षिपति, D7 क्षीयती ( for ति ) Ś1 चाभिभो , K1 D2. 6 चाविभो, K4 B ( B1 om. ) Dc1 Dn च प्रभो ( for चाभिभो ) — ᵈ ) Ś2 K1. 2 कुंतीपुत्रो, Dn2 D2–5 7 8 G1 3 M धर्मराजो ( for °पुत्रो )

25 G2 missing ( cf v l. 11 ) — ᵃ ) Ś1 च तद्, D5 तत , T G1 M तथा, G3 तदा, G4 यथा ( for तु तद् ) — ᵇ ) D5 च ( for वि- ) Ś1 K3 -चेतन , D3 6 T G3 4 M3–5 -चेतसं ( for °नम् ) — ᶜ ) K1 D5 7 8 मध्यस्थाना ( for °स्थता ) D3 हि ( for च ) — ᵈ ) D2 4. 5 7 8 S ( G2 3 missing ) धर्मराजो ( for °पुत्रो )

26 G2 missing ( cf. v l. 11 ) — ᵇ ) M3 5 पांचाल्य ( for ल- ) — ᶜ ) D3 त्व हि, D7 8 स्वव ( for त्व च ) — ᵈ ) K4 B1 Dn1 महान्, Dn2 स्वय, D2 4. 5 7 8 पुर, T G3 4 भवान् ( for गृहान् ) Ś K1–3 D1. 3 6 वृष्ण्यधकयुत पुर ( D1. 3 पुरःसर , D6 निवेशन )

27 G2 missing ( cf v l. 11 ) — ᵇ ) Dn2 आत्मनक्षणं ( sic ), D2 °रक्षण, D5 नो हित ( for न क्षमम् ) — ᶜ ) D1 उपदेष्टुं, D5 °देश- ( for देष्टुं ) Ś2 [ऽ]सौ, D5 हि ( for ऽयं ) B Dc1 Dn1 श्रेयो ह्यु( B3–5 ह्य )पदिशत्येष — ᵈ ) B5 किमु च ( for किमुत )

28 G2 missing ( cf v l. 11 ) — ᵃ ) D3 S ( G2 3 missing ) वो ( for तु ) — ᵇ ) D2 च ( for व° ) — ᶜ ) Ś K1–3 तु ( for हि ) B1 सर्वैं, D3 सर्वे- ( for

